# KAVIKALPADRUMA.

OR

## THE DHATUPATHA

OF

MAHAMAHOPADHYAY BOPADEVA

WITH THE

COMMENTARIES ( DHATUDIPIKA )

OF

DURGADAS VIDYABAGIS

EDITED WITH ADDITIONAL NOTES

BY

PUNDIT SIVANARAYAN SIROMANI

PROFESSOR, SANSKRIT COLLEGE, CALCUTTA

Calcutta.

SUR & Co 14 DUFF'S ST

1897

---

## सटीककविकल्पद्रुमः।

अर्थात्

महामहोपाध्याय बोपदेवविरचित कविकल्पद्रुमोनाम

धातुपाठः।

दुर्गादासविद्यावागीशकृत धातुदीपिकाख्यया टीकया,समेत ।

श्रीशिवनारायणशिरोमणिभट्टाचार्य्येण

संस्कृतः परिशोधितश्च ।

कलिकाताराजधान्याम्

सुर एण्ड कोम्पानिना डफ्ष्ट्रीटस्थित

१४ सङ्ख्यकभवनात् प्रकाशित ।

# विज्ञापनम् ।

---

स खलु शाब्दिकशिरोमणिर्वोपदेव: कस्मिन् समये जन्मना कतमं देशमलमकार्षीदिति यथावदवधारयितुं न शक्यते। परन्तु पुरातत्त्वान्वेषिण: कतिपये कृतिन एवमलाहुः। यथा— पञ्चनवगुणेन्दुमिते शकसम्वत्सरे अर्थात् (११८२ शकाब्दे) द्वित्रादिवत्सरन्यूनाधिक्येन स वोपदेवः कुत्रचित् प्रदेशे भिषगध्यक्षायिनः केशवनाम्नो विमाद्यभजन्मा विदुषो धनेश्वरमिश्रादधिगतविद्यश्च बभूव। अथ दक्षिणापथवर्त्तिन्याः साम्प्रतं (दौलताबाद) इति प्रसिद्धाया देवगिरिराजधान्या अधिपतेर्महादेवस्य सभापण्डितपदमास्थाय तत्र निवसति स्म। चतुर्वर्गचिन्तामणिनिबन्धकारो हेमाद्रिरपि तस्यैव राज्ञः समस्तकरणाधीश्वरः प्रधानामात्य आसीत्। तेन सह वोपदेवस्य परं सौहार्दं समजनि। तत एव तेन हेमाद्रिणा प्रणोदितः स हरिलीलाख्यं मुक्ताफलनामधेयञ्च भागवतव्याख्यानं निबबन्ध। तत्र हरिलीलाटीकायां मन्त्रिहेमाद्रितुष्टये इति, मुक्ताफलग्रन्थे च 'विद्वद्धनेशशिष्येण भिषक्केशवसूनुना। हेमाद्रिर्वोपदेवेन मुक्ताफलमचीकरदिति" च निर्देशस्तयोरन्योन्यसौहार्दं सूचयति।

अस्य कविकल्पद्रुमस्योपसंहारे केनचित् वोपदेवशिष्येण—

'यत्कीर्त्तं शब्दपाथोनिधिमखिलमिमं गोष्पदं वा सुराद्रौ
शिष्योऽकार्षीद्धनेश कविकुलतिलकं वैयसिर्वोपदेवः।' इति यदुक्तं

तत्र छन्दोऽनुरोधात् सुराद्रिशब्दो देवगिरिपर्य्यायत्वेन प्रयुक्त इति मन्यामहे। यत्तु टीकाकारेण 'सुराद्रौ सुमेरुपर्व्वते, स्थिरत्वात् सुमेरुगति उपमती'ति व्याख्यातं तन्न रुचिकरमिति।

सोऽयं वोपदेवः स्वर्गमिन्द्रचन्द्रापिशलिशाकटायनपाणिन्यमरजैनेन्द्राख्याष्टव्याकरणमहार्णवमथितविषयबहुपादेयवचनजातमाहृत्य तदाशयासमग्रीकर्त्तुमशक्तानामस्मदादीनां व्याकरणबोधसिद्ध्यर्थं मुग्धबोधनामानं ग्रन्थं विरचय्य महोपकारमकरोत्। तस्यैवाचार्य्यचूडामणेर्वोपदेवस्यायमस्ति कविकल्पद्रुमो नाम धातुपाठः। अयञ्च कवीनामभीष्टफलदातृतया कविकल्पद्रुम इत्यन्वर्थनामधेयो धातुपाठः अस्य

सारानुपयोगित्वेन सकलवैयाकरणसम्प्रदायेषु परमसमादरमर्हति, तत् सर्वं ग्रन्थादौ ग्रन्थकारेणैव यथावत् परिचायितम्। तत्र च कथ्यचिद्धातोराख्याते कालत्रये वा धात्वन्तरापेक्षया ये केचन कार्यभेदा भवन्ति, तान् सर्वान् निरवशेषमावेदयितुं तेन धातुना सह यदनुबन्धवर्णयोजनं कृतं, तेनैकेन ग्रन्थकृत्-कौशलेनायं धातुपाठ सजातीयान् सर्वान् जिगाय। अपराणि चात्र ग्रन्थे यानि ग्रन्थकारपाठ्यानि सन्ति, तानि सर्वाण्यस्य प्रारम्भे परिभाषायां बोधितव्यानि। इह खलु धातुपाठे ये च धातवो पञ्चादिभिर्गणीक्रियन्ते तानपहाय चतुःपञ्चा-शदधिक-सप्तदशशतसंख्यका (१७५४) धातवः पठिताः। इयञ्च संख्या गणनया नोपलभ्यते। यत आचार्येण प्रतिवर्गं या संख्यानिर्दिष्टा तदनुसारेण षट्पञ्चाशदधिकसप्तदशशतसंख्यका (१७५६) धातवो भवन्ति। तत्रापि कान्त-ठान्त-णान्तवर्गेषु निरूपितसंख्यानामेकैकेन न्यूनत्वमस्ति। अतोऽत्र यत्तत्त्वं तत् सुधीभिश्चिन्त्यम्।

इत्थं सहृदयकविकुलसादरसेव्योऽयं कविकल्पद्रुम व्याकरणेनैव महामहो-पाध्यायदुर्गादासविद्यावागीशविरचितधातुदीपिका समाख्यया टीकया समन्वी-कृत्य मया मुद्रितः। टीकाकारोऽयं दुर्गादासः शकनरपते मङ्गदग्रामवास्तव्यो प्रारम्भे नवद्वीपनगरे जात। वासुदेवसार्वभौमोऽस्य पिता। तत्कृतेयं टीका वोपदेवोक्तं कविकल्पद्रुमं यथाविधि परिवेष्टनेन प्रकटीकुर्वन् धातुपाठेषु विभिन्नकर्मणां बहुवैयाकरणिकानां नानामतपरिज्ञानसंयोजनम्। यद्यप्येषा टीका सुविदितशब्दकल्पद्रुमाभिधाने तत्तद्धातुप्रसङ्गे प्रायशः समुद्धृता, तथापि तन्मात्रावलम्बनेन मूलस्य निरवशेषव्याख्यानं न सम्भवतीत्यपराण्यपि चापारि-खण्डिताखण्डितानि टीकादर्शपुस्तकानि संगृह्य मया यथामति परिशोधितेयं टीका। अत्र च टीकायाः बहुषु भागेषु यानि व्याख्यानपाठान्तरमतान्तरो-दाहरणादीनि मया योजितानि, तानि मूलतः पार्थक्यसाधनार्थं कुत्रचित् क्षुद्रा-क्षरेण, पत्रांके, कुत्र वा इत्थं ( ) बन्धनीमध्ये सन्निवेशितानि। कृतान्तधातूदाहर-णेषु य सङ्ख्यापात कृत, स च राजश्रीयतीन्द्रमोहनठाकुरसङ्कलितकविरहस्य-श्लोकसंख्यानुसारेणैव। अन्येषु टीकाकारदर्शितेषु महर्षितेषु च इत्यन्तेषु तत्तद्-ग्रन्थादिकमनुसन्धाय यथालाभं सर्गश्लोकादिसंख्या दर्शिता।

इह मूलग्रन्थे आचार्येण ककारान्तादिषु सर्वेषु वर्गेषु सजातीयधातून् समसंख्यीकृत्य प्रतिवर्गं धातुसंख्या निरूपिता। तत्संख्यासङ्कलनाय मयापि

हिक्काद्याः सजातीया धातव एकयैव संख्यया निर्द्दिष्टाः। एतेषामपि क्वचित् क्वचित् संख्यासङ्गतिर्न जाता, तत् सर्व्वं तत्रैव टीकायां विवृतमस्ति।

यद्यप्येवं बहुलमायासमङ्गीकृत्य सर्व्वथास्य सौष्ठवसम्पादनाय यथामति कृत-यत्नोऽहं, तथापि प्रमादस्खलनशङ्कितः प्रतिक्षणमाकुलोभवामि। अत साम्प्रतं सहृदयपाठकवृन्दं सविनयमिदमभ्यर्थये, यत्रात्र स्खलितं दृश्येत तत् कृपया विज्ञापयितव्योऽहं भवद्भिरिति।

शकाब्दाः १८१८।<br>फाल्गुनस्य षष्ठदिवसे

श्रीशिवनारायण शर्म्मा<br>संस्कृत कलेज, कलिकाता।

# सटीककविकल्पद्रुमः।

नमो गणेशाय।

शब्दाकरकरग्राममर्थमण्डलमण्डलं।
ज्ञानात्मानमनाद्यन्तमादित्यं तमुपास्महे॥

टीका। नत्वा श्रीशगिरीशौ श्रीदुर्गादासशर्म्मणा क्रियते।
कविकल्पद्रुमटीका विशदतरा धातुदीपिका नाम॥
कति कति सन्त्यपि सन्तः सन्तोषं नोभजन्त इतरगुणे।
ये परगुणलवलुब्धा दुर्गादासप्रमो भवेत्तेभ्यः॥
सुखाय छात्रवर्गाणामत्रेति परिभाष्यते।
अन्तःस्थाः सुर्यवरला अचा इत्यादय स्वराः।
उष्माणः स्युः शषसहा अन्त्यात् प्रागुपधा भवेत्॥

श्रीवोपदेवो धातुपाठं चिकीर्षुः प्रारिप्सितपरिसमाप्तये शिष्टाचारप्राप्तमङ्गलमाचरति शब्दाकरेत्यादि। तं प्रसिद्धं आदित्यमुपास्महे वयमिति शेषः। तच्छब्दोऽत्र प्रसिद्धार्थत्वात् यच्छब्दं नापेक्षते। तथाच—"तं क्रेशपाय प्रसमीक्ष्य कुर्य्युर्वालप्रियत्न-शिथिल धमर्य" इति कालिदासः। (१) ग्रन्थोत्कर्षस्थापनार्थमादित्यस्य ग्रन्थस्वरूपता प्रतिपादयन् विशेषणान्याह शब्दाकरेत्यादि। शब्दानामाकर उत्पत्तिस्थानमाकाशस्तत्र करग्राम. किरणसमूहो यस्य

(१) न जाने स प्रधानो मे भूरहस्तो सदामद इत्यत्र स प्रसिद्ध इति चतुर्भुज। इत्यधिक पाठ।

तं। अर्थानां प्रयोजनानां मण्डलाय समूहाय (निखिलप्रयोजनानि साधयितुमित्यर्थः) मण्डलं चक्रवाडं "स्यान्मण्डलं द्वादशराजके च देशे समूहेऽपि च चक्रवाडे" इति विश्वः। (उदय इति यावत्) यस्य तं। तथाच—"आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति, सूर्य्योदयं विना नैव स्नानदानादिकाः क्रिया" इति च स्मृतेः। ध्यानं आत्मा यस्य तं। न विद्येते आद्यन्तौ यस्य तं नित्यमित्यर्थः। पक्षे तं प्रसिद्धं पूर्व्वतरधातुग्रन्थं उपास्महे। आदित्यं सूर्य्यमिवेतिलुप्तोपमा। "अयमुदयति मुद्राभञ्जनः पद्मिनीना" (१) मितिवदसाधारणविशेषणेनैव विशेष्योपस्थितिर्भवतीति तादृशविशेषणान्याह शब्दाकरेत्यादि। शब्दानामाकरा उत्पत्तिस्थानानि धातव इति यावत्, त एव करग्रामःकिरणसमूह इव यस्य तं। अर्थानां (अभिधेयानां) मण्डलं मण्डलमिव यस्य तं। ध्यायतेऽनेनेति ध्यानं ध्यानसाधनं (धातुरूपं) तदेवात्मा यस्य तं। अनाद्यन्तमिति वेदाङ्गत्वान्नित्यमित्यर्थः।

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥ (२)

टीका। सर्व्वेषां (स्वपरशिष्याणां) मङ्गलार्थमादिशाब्दिकानां मतमालोच्य क्रियते इति वक्तव्ये आदौ जयशब्दपूर्व्वकं तन्नामानि

(१) अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनाली बालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोडताम्रस्तमांसि॥

(२) काशकृत्स्नश्च आपिशलिश्च तौ। पाणिनिश्च अमरश्च जैनेन्द्रश्च ते।

सप्तर्द्धाति इन्द्र इत्यादि । एते अष्ट आदिशाब्दिका जयन्ति । अत्र जेतुवन्तोऽस्तिवन्ती इत्यनुशासनादन्तुस्थानेऽन्तिः । जययुक्ता भवन्त्वित्यर्थः ।

मतानि तेषामालोक्य सर्व्वसाधारणः स्फुटः ।
धातुपाठः स्वदाद्याद्यक्रमादन्तादिमक्रमः ।
कविकल्पद्रुमो नाम पद्यैर्निष्पाद्यतेऽत्र च ।
धातवः पठिताः पाठस्त्वलोकागमस्थिताः ॥

टीका । अथ ग्रन्थस्वरूपं निरूपयति मतानीति । तेषामष्टानामादिशाब्दिकानां मतानि ग्रन्थानालोक्य पद्यैः श्लोकैः करणैः कविकल्पद्रुमो नाम धातुपाठो निष्पाद्यते क्रियते मयेति शेषः । सर्व्वेषां प्रवृत्त्यर्थं विशेषणान्याह सर्व्वसाधारण इत्यादि । सर्व्वेषां साधारणः समानः सर्व्वसम्मतत्वात् । सर्व्वशब्दस्त्विह बहुवादिपरः तेन लज्जशतावित्यादीनां केनचिदमन्यमानानामपि बहुवादिसम्मतत्वादिहोपन्यासः, कुङ् गत्यामित्यादीनाञ्च केनचिन्मन्यमानानामपि बहुवाद्यसम्मतत्वात्तद्वर्जनमिति । स्फुटो व्यक्तः । धातवः पठ्यन्ते अस्मिन्निति धातुपाठो ग्रन्थः । अत् अकार आद्यो येषां (धातूनां) ते अदाद्याः, ते (अकारादयो धातवः) आद्याः (आदिपठिताः) यस्मिन् (क्रमे) सः अदाद्याद्यः, स चासौ क्रमश्चेति अदाद्याद्यक्रमः, सुष्ठु अदाद्याद्यक्रमो यस्मिन् (अदन्तादिमक्रमे) स स्वदाद्याद्यक्रमः, अत् अन्तो येषां (धातूनां) ते अदन्ताः, ते (अकारान्ता धातवः) आदिमा आद्या यस्मिन् (क्रमे) सः अदन्तादिमः, स चासौ क्रमश्चेति अदन्तादिमक्रमः, स्वदाद्याद्यक्रमः अदन्तादिमक्रमो यस्मिन् (धातुपाठे) स तथा । अकाराद्यादिधातुक्रमेण अका-

चौगमृक्ष गत्यामित्यत्र द्वमोऽभावः त्र्यां ङप्रत्ययश्चानुबन्धोदितः। भ्वादित्वं परस्मैपदस्य विशेषविधानाभावात् गणोदितमिति।

परोऽनुबन्धः पूर्व्वेषामेकवाक्यस्थधातुषु।
नाम्नेड़ितानुबन्धेषु न परेषाञ्च मध्यमः॥

टीका। अथ परिभाषा भाष्यते पर इति। वाक्यमर्थकथनपर्य्यन्तम्। एकवाक्यस्थितधातुषु परः परधातुस्थोऽनुबन्धः पूर्व्वतरेण सम्बन्धाभावेऽपि पूर्व्वेषां सर्व्वेषामित्यर्थः। यथा टीक टिक् टौक तौक तिक्कड़् गत्यामित्यत्र ऋकारङकारौ सर्व्वेषाम्। एवमङ्काङ्कल्क पदे लक्ष्मणीत्यत्र अङ्कयतेः परस्थितौ तकारककारावङ्कयतेरप्यनुबन्धाविति। अस्यापवादमाह नाम्नेड़िति। आम्रेड़ित द्विस्त्रिरुक्तमित्यमरः। पुनरुक्तकानुबन्धेषु धातुषु नेयं व्यवस्था। तथाच श्वपल्क श्वपतञ् चान्तावित्यत्र तकारस्य पुनरुक्तत्वात् अकारो न पूर्व्वस्य। परिभाषान्तरमाह नेति। मध्यमो धातुद्वयमध्यवर्त्ती अनुबन्धो द्वाभ्यां सम्बद्धोऽपि न परस्य। यथा श्वपल्क श्वपतञ् चान्तावित्यत्र ककारो न परस्य (परवर्त्तिन उभयपदिनो श्वपधातोः ककारानुबन्धो नास्तीत्यर्थः)।

तत्राकारः सुखार्थोऽथानिठाभावादिकर्म्मवेट्।
इर्नुस्वानीरनिड्‌निष्ठ उः क्त्वावेड्डुस्तु वेट्‌क ऋः॥
चङ्यह्रस्वोऽथ ऋद्वा ल्टरङ्वानिवीय एः सिचि।
अवृद्धिरैर्यजादिः स्यादोर्निष्ठातन औरनिट्॥
कस्तुरादिः किस्तुवा गः क्रादि र्गिः प्वादिरप्यपूः।
स ल्वादिर्घोरुदादिर्ङस्तङ्‌वान् कर्त्तरि आत्मने॥

जोन्वलाद्यो ञिरद्यक्तुः साधुर्डुस्त्रिमग्युतः ।
णः फणादिस्तृस्त्वदन्तो दस्तनादिर्घुधादिकः ॥
नः स्वादिः पोमुचादिर्भः शमादिर्मोणिचिणमोः ।
दीर्वा णिचि ह्रस्वो मिर्वा दिवाद्योयुदादिकः ॥
लुः स्वपादिश्च लिह्वादिर्वोष्टतादिः श् तुदादिकः ।
षिः कुटादिश्च ष् क्रदङ्वान् चोजन्तादी र वैदिकाः ॥

## [ तत्राकारः सुखार्थः ]

टीका। अनुबन्धफलान्याह। तत्र चकारः सुखार्थः। तत्र अनुबन्धेषु मध्ये अकारः (१) सुखार्थः सुखोच्चारणार्थः। यथा—भक्ष नक्ष क नाथन इत्यादौ।

## [ अथानिठाभावादिकर्मवेट् ]

टीका। अथ आ निष्ठाभावादिकर्मवेट्। अथ आ आकारानुबन्धो धातुरित्यर्थः उपचारात् (२) एवमिकारादौ च बोध्यम्। निष्ठा क्तक्तवतू। निष्ठाया वाच्यत्वेन सम्बन्धिनी ये भावादिकर्मणी तयोर्वा इट् यस्मात् स तथा। आकारेतो धातोर्भावे आदिकर्मणि च विहितयोः क्तक्तवत्वोरिट् वा इत्यर्थः। यथा ञिमिदा स्नेहे (३) 'भावादिष्टे वा' इति मिन्नं मेदितं तेन (४) प्रमिन्नः

(१) धातुनामन्ते प्रयुज्यमान अकारानुबन्ध इत्यर्थः।

(२) उपचारो लक्षणा।

(३) ञिद् भाव। इर् य आ एते अनुबन्धाः। तेषु आकारानुबन्धस्य फलमत्रदर्शितम्।

(४) अत्र मिदधातोर्भावे क्त तेन नेम्।

प्रमेदितः सः (१)। भावादिकर्म्मणोरन्यत्र क्तक्तवतोरिम् नेति शेषः। यथा 'आदित' इति मिन्नः मिन्नवान्।

[ इर्नुम्वान् ]

टीका। (इ' नुम्वान् इति पदच्छेदः, इकारानुबन्धधातूना-मन्त्याचः परो नकारागमो भवति)। यथावदि अभिवादयो'। 'अतएवेदितोनुम्' इति वन्द्यते विष्णुः। (अत्र प्रथम वदि इति पठित्वा पश्चादिकारानुबन्धत्वान्नकारागमेन वन्द इत्येवं धातुः स्नतः) नकारमध्यपाठेनैवेष्टसिद्धौ इदनुबन्धकरणं अगुणे नलोप-निषेधार्थम् (२)।

[ ईरनिड्निष्ठः ]

टीका। (ई अनिट्निष्ठ' इति सन्धिविच्छेदः) अनिट् निष्ठा यस्मात् स तथा। दीपीङक्क दीपने (३) 'नेम्डीश्वी'ति (इम-निषेधे) दीप्तः दीप्तवान्।

[ उः क्त्वावेट् ]

टीका। क्त्वा प्रत्ययस्य वा इट् यस्मात् स तथा। (उकारानु-बन्धधातुभ्यः क्त्वाचो विकल्पेनेम् भवतीत्यर्थः) यथा चमु भक्षे, 'पूक्लिश्युदित' इति (इमो विकल्पितत्वेन) चमित्वा चान्त्वा।

---

(१) अत्र मिदधातोरादिकर्म्मणि आरम्भे अर्थे क्त तेन नेम्। स उत्त प्रमिन्न प्रमेदित श्चेह कर्त्तुमारब्धवानित्यर्थः।

(२) नेदितृपूजार्थाञ्चोरिति।

(३) दीपधातु। ई ङ य क्क एते अनुबन्धा तेषु ईकारानुबन्धस्य फलमत्र दर्शितम्।

## [ ऊस्तु वेट्कः ]

टीका । ( ऊः तु वेट्क', ऊकारानुबन्धो धातुः वा इट् यस्मात् स तथा ) सामान्यविधिना यस्य स्थाने नित्यं इम् विहितः ऊदितः परस्य तस्य वा इम् इत्यर्थः । षिधू शिवे शास्त्रे, 'वेमूदि-दि'ति असेधीत् असैत्सीत् ( १ )।

## [ ऋटः चङ्यह्रस्वः ]

टीका । ऋट.चङि अह्रस्वः । चङि ञेः परे अङि परे नास्ति ह्रस्वो यस्य सोऽह्रस्वः ह्रस्वाभाववानित्यर्थः । ढौकृङ् गत्या ( इत्यस्मात् ञौ टौदिविभक्तौ ) 'आञ्ञुङः स्व' इत्यत्र ऋदिद्वर्ज्जनात् ( औकारस्य ह्रस्वाभावे ) अडुढौकत् ।

## [ अथ ऌद्वा ]

टीका । अङि अह्रस्व इत्यनुवर्त्तते । ( ऌकारानुबन्धधातुना ञेः परेऽङि परे वा ह्रस्वो न भवतीत्यर्थः ) कणॄ आर्त्तस्वरे, 'भ्राज-भाषेति' अचीकणत् अचकाणत् । येषां सप्तमस्वरानुबन्धः कैश्चित् पठ्यते कैश्चिन्न पठ्यते च तेषां ह्रस्वविकल्पज्ञापनार्थोऽयमनुबन्धः ।

## [ ऌदङ्वान् ]

टीका । ( ऌकारानुबन्धधातुभ्यष्टीपे नित्यं ङोभवतीत्यर्थः ) औगमॢ गत्या 'शास्लिघुदि'ति अगमत् ।

---

( १ ) वलोऽस्थेमनीदित इति सामान्यविधिना असस्य यस्य नित्यमिम् विहित । ऊदित परस्य तु तस्य वेमूदिदिति वेम् ।

[ दूर्वा ]

टीका। ( दूर् वा ) चङ्गानित्यमुवर्त्तते। ( येषां धातूनां दूर् इत्यनुबन्धोऽस्ति तेष्वटीपे विकल्पेन ङो भवतीत्यर्थः ) च्युतिर् क्षरणे (यात्सलिद्युदिति सूत्रे) दूरितस्तु वेति अच्युतत् अच्योतीत्।

[ अथ एः सिचि अवृद्धिः ]

टीका। (एः एकारानुबन्धोधातुः) सिचि—ञ्यां विहिते सौ। कटे इतौ इपि, ( इति कटधातोः ) 'इसादेः सेम' इत्यत्र एदिद्दर्शनात् चकटीत्। ( ञ्यामिरित्यनेन विहिते सौ परे एकारानुबन्धधातूनां 'इसादेः सेमोऽह्योरदि'दित्यत्र एदितो निषेधात्र-वृद्धिरित्यर्थः )।

[ ऐर्यजादिः स्यात् ]

टीका। ( ऐकारानुबन्धा धातवो यजादिगणे पठिताः, तेन व्ययग्रहेति ग्रहस्वपाद्योरिति च सूत्राभ्यां यथासम्भवं स्वेर्मूलस्य च जिः स्यादित्यर्थः ) यजैञौ, 'व्ययग्रहे'ति इयाज, ( शीत्रजयजेति मप्प्रत्यये ) ग्रहस्वपाद्योरिति ( स्वप्धातोर्ञौ क्ते ) सुप्वा।

[ ओनिंष्ठातनः ]

टीका। निष्ठायास्तोनो यस्मात् स निष्ठातनः। (ओकारानुबन्धधातुभ्यः क्तक्तवतोस्तकारस्य स्त्वाद्योदिदिति सूत्रेण नकारो भवतीत्यर्थः ) स्जो श्रीभङ्गे (१) स्वाद्योदिदिति सग्नः सग्नवान्।

---

(१) ओ ष औ एते अनुबन्धाः। तेषु ओकारानुबन्धस्य फलमत्र दर्शितम्।

## [ औरनिट् ]

टीका। (औकारानुबन्धधातुभ्यः सामान्यसूत्रेण विहित इट् न भवेदित्यर्थः)। औगमृद्गत्यां, मथोरक्षेत्यत्र औदिद्वर्जनात् गन्ता। (१)

## [ कश्चुरादिः ]

टीका। (कः ककारानुबन्धो धातुः) (२) गणक संख्याने, चुर्यौ णिर्वेति गणयति।

## [ किस्तुवा ]

टीका। (किकारानुबन्धो धातुः) चुरादिर्वा। पक्षे गणान्तरनियमाभावात् सामान्यगणो भ्वादिरित्यर्थः। युजकि संयमे, योजयति योजति। 'चुर्यो णिर्वा' इत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् चुरादेर्णिर्नित्यः चुराद्यन्तर्गणात् युजादेस्तु वा इति। यत्तु चुरधातोरपि किकारानुबन्धत्वं मुग्धबोधे चोरयति चोरतीत्युदाहरणञ्च तत् कदाचित् चुरादेर्णेरनित्यत्वज्ञापनार्थम्। अतएव काव्यकामधेनौ (३) चकिक्लचल्लापीत्यत्र स्फुटीकृतमिदं बोपदेवेन (४)।

---

(१) मधुकोषट्टौ, मथोरक्षेत्यत्र औदिद्वर्जनात् भ्वाद्यौदित्यपि क्वचित् पाठः।

(२) इमे चादयोऽनुबन्धा गणपाठे चटादिटकारान्ताः कविना कल्पिताः पठिताः।

(३) काव्यकामधेनुर्नाम बोपदेवकृतकविकल्पद्रुमटीका।

(४) तद्यथा "चकिक्लचल्लापि, तत्र चित्रयुक्तकरणं, इ, ड—चड्डयति वस्त्रं रजकः। मोहपाठेऽपि ओर्णिदत्वात् चडयोगोऽपि इद्यसामान्ये गणादौ चडशब्दे इत्यादौ विहिते इत्यादचुरादेर्णिजन्तत्वापनार्थं। तेन चकयोमपि इत्यादि।

[ गः क्र्यादिः ]

टीका। ( गः गकारानुबन्धो धातुः ) डुक्रीञग्द्रव्यपर्य्यये ‘द्विषस्तुदे’ति ( क्र्यादित्वात् श्ना प्रत्यये ) क्रीणाति।

[ गिः प्वादिरपि ]

टीका। (गिः गिकारानुबन्धो धातुः) अपिशब्दात् क्र्यादिश्च। पूञगिशोधे ‘प्वादेः ह्र’ इति पुनाति।

[ अपूः ल्वादिः ]

टीका। पूवर्जितः स प्वादिर्ल्वादिश्च स्यात्। लूञगिच्छेदे, लुनाति। ‘ल्वाद्योदि’दिति लूनः लूनवान्। ‘कृगृज्ये’ति लूनिः।

[ घो रुदादिः ]

टीका। ( घः घकारानुबन्धो धातुः ) रुदिरघ्रोदे ‘रुद्भ्यो-ऽयोऽचस्त्रेमि’ति रोदिति। ‘रुदादचसी’ति अरोदीत्।

[ ङस्तङ्वान् कर्त्तरि ]

टीका। (ङः ङकारानुबन्धो धातुः ) कर्त्तरिवाच्ये तङ्वान् आत्मनेपदी। एधङ्वृद्धौ ‘नवयः पमे’ इति एधते।

[ आत्मने ]

टीका। ( ञकारानुबन्धो धातुः ) तङ्वान् इत्यनुवर्त्तते।

---

तथाच—सिद्धे नित्यणिजन्तत्वाणित्वतुमले क्रियासिद्धिः। णित्वनित्यत्वबोधार्थं न दृष्टोऽनुबन्धविधिः क्वचित्। तस्यार्थः—कितां कानुबन्धधातूनां नित्यणिजन्तता-णित्वत्वाणित्वतुमाने नित्यनंकारवत्त्वे सिद्धे इदित् इदनुबन्धकरणं णिचोऽ-र्निल्यत्वबोधार्थम्। किन्तु अनुबन्धविधिर्नकाराभावः क्वचिदपि न दृष्टः” इति। दुर्गादासोऽप्येवमग्रे वक्ष्यति।

आत्मने आत्मार्थं, फलवति कर्त्तर्य्यात्मनेपदीत्यर्थः। अफलवति परस्मैपदीति शेषः। यजैञ्, यजते यजमानः, यजति याजकः। ञित्त्वा'न्ववशःपमे ञित' इत्युभयपदप्राप्तौ 'ञिञ्जान्तमिवे'त्यनेन नियम्यते। नियमश्च फलवत्कर्त्तर्य्येवात्मनेपदमिति चेत्तर्हि अफलवत्कर्त्तर्य्यात्मनेपदनिषेधे फलवत्कर्त्तरि परस्मैपदापत्तिः कथं न स्यात्। फलवत्कर्त्तर्य्यात्मनेपदमेवेति चेत् तर्हि फलवत्कर्त्तरि परस्मैपदनिषेधे अफलवत्कर्त्तर्य्यात्मनेपदापत्तिः कथं न स्यादित्युभयथैव व्याघातः। वस्तुतस्तु उभयपदप्राप्तौ व्यवस्थेयं, फलवत्यात्मनेपदं अफलवति परस्मैपदमिति। एतच्च पाणिनेरनुरोधात्। तथाच वर्द्धमानः(१) "इति लौकिकवाक्येषु व्यभिचारोऽतिपुष्कलः। वेदवाक्येषु यद्यस्ति नियमः केन धार्य्यते। विशेषः पाणिनेरिष्टः सामान्यं सर्व्वशर्म्मणः। सामान्यमनुरुन्धाति तत्राचार्य्यपरम्परेति"। तेन "अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसा"दिति। "तनोति शुभ्रं गुणसम्पदा यश"इत्यादौ फलवत्कर्त्तरि परस्मैपदम्। "फलं विश्वोपकाराय धत्ते पर्व्वणि पर्व्वणी"ति। "कमलवनोद्घाटनं कुर्व्वते ये" ये सूर्य्यरश्मय इत्यर्थ', इत्यादावफलवत्कर्त्तर्य्यात्मनेपदमिति। चुरादेस्तु स्वार्थविहितञेर्ञकारेण ञित्त्वेऽपि उभयपदं न स्यात्। अन्यथा स्वमङ्कुषितर्कें इत्यादेर्ञानुबन्धो वृथा स्यात्। यत्तु धातुपारायणमुग्धबोधयो चोरयति चोरयते इत्युभयपदोदाहरणं तत् कदाचिन्महाकविप्रयुक्तस्यात्मनेपदस्य समाधानार्थम्। यथा नैषधे "मालोकते यथेदानीं मामियं नेन तर्कये" इत्यत्र तर्कये इत्या-

(१) कातन्त्रविस्तारकृत् वर्द्धमानमिश्र'।

त्मनेपदम्। अत्र केचित्तु "आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचिदि"ति न्यायमवलम्बन्ते।

[ जो ज्वलाद्यः ]

टीका। (जः जकारानुबन्धो धातुः) ज्वलज्वलनचलनयोः 'दूनीभूज्वलाद्येति' णप्रत्यये ज्वालः, पक्षे पचादित्वादनि ज्वलः। एवं कुचज्ञोधपर्कंकौटिल्यलेखने, 'दूनीभूज्वलाद्येति' णः कोचः, पक्षे 'कृगृह्येति' कः कुचः।

[ जिरद्यक्तः ]

टीका। (जिरित्यनुबन्धो धातुः) अद्यक्तः—अद्य वर्त्तमाने क्तो यस्मात् सः। जिष्ठाग्याने 'ञ्योच्छार्येति' स्थितो विष्णुस्तिष्ठतीत्यर्थः।

[ टुः साथुः ]

टीका। (टुरित्यनुबन्धो धातुः) अथुना सह वर्त्ततेऽसौ साथुः। टुवेपृ वेप चले 'ट्वितोऽथुरि'ति वेपथुः।

[ डुस्त्रिमग्युतः ]

टीका। (डुरित्यनुबन्धो धातुः) डुकृञ्करणे 'ड्वितस्त्र्मे' इति त्रिमक्, कृत्रिमम्।

[ णः फणादिः ]

टीका। फणगतौ निसेहे 'तृफलभजेति' फेणतुः पफणतुः फेणिथ पफणिथ।

## [ तस्त्वदन्तः ]

टीका। ( तः तु अदन्तः, तः तकारानुबन्धो धातुः अदन्तः अकारान्तः ) अदन्तानां पृथग्वर्गविधानेनैव ज्ञाने सिद्धे तानुबन्धकरणं अनभ्यासाना अङ्कादिषु कान्तत्वादिभ्रमनिरासार्थम्।

## [ दस्तनादिः ]

टीका। ( द इत्यनुबन्धो धातुः तनादिगणीयः ) तनुदञ्-विस्तृतौ 'तन्व्यःशुषि'ति तनोति। 'सेर्लुक् तथासोरि'ति अतत अतनिष्ट अतथाः अतनिष्ठाः। 'वनतनाद्यनिमामि'ति प्रतत्य।

## [ ध्रुधादिकः ]

टीका। ( ध रुधादिकः, ध इत्यनुबन्धो धातुः रुधादिगणीयः ) रुधिर्धोञिआवृतौ 'द्विवडतुदे'ति रुणद्धि।

## [ नः स्वादिः ]

टीका। षुञ् सन्धाक्लेदपीडामन्थे 'द्विवडतुदे'ति सुनोति।

## [ पो मुचादिः ]

टीका। मुच्लृशपञी मोचे 'तुषरधोमुचामि'ति मुञ्चति।

## [ भः शमादिः ]

• टीका। शमुभिर्यशमे 'यन्योशमादौ'ति शाम्यति।

## [ मोणिचियमोः दीर्घो वा ]

टीका। ( मः मकारानुबन्धो धातुः। णिचियमोः—णिश्च यामश्च तौ चियमौ, णेः परौ चियमौ तयोरिति विग्रहः। मकारानुबन्धधातूनां अः परवर्त्तिनो रिण्चयमोः परयोर्वा दीर्घ

इत्यर्थः ) दीर्घो दीर्घवान् । घटघमड चेष्टे ( घटादिजनीति सूत्रे ) 'ञोघमोस्तुर्घयेति' अघटि अघाटि, घटं घटं घाटं घाटं ।

[ णिचि ह्रस्वः ]

टीका । मोऽनुवर्त्तते । ( मकारानुबन्धो धातुः ) णिचि ञौ परे ह्रस्वो ह्रस्ववान् । 'घटादिजनीति' घटयति ।

[ मिर्वा ]

टीका । णिचि ह्रस्व इत्यनुवर्त्तते । ( मिकारानुबन्धधातुर्णौ परे विकल्पेन ह्रस्वो भवतीत्यर्थः ) फणामिणगतौ 'वा चमयमेति' फणयति फाणयति ।

[ दिवाद्यो य ]

टीका । ( यकारानुबन्धो धातुर्दिवादिगणीयः ) दिव्यु जिगीषादौ 'दिवसुतुदेति' दीव्यति ।

[ ल अदादिकः ]

टीका । अद्लौ भक्षे 'लुगदुभ्योऽप' इति अत्ति ।

[ लुः स्वपादिश्च ]

टीका । चकाराददादिश्च । स्वमते स्वपादेः प्रयोजनं नास्ति। दरिद्रतीत्यादौ स्वपादित्वादजादौ सार्व्वधातुके आद्याचऽस्य उदात्तस्वरत्वम्भवति । तथाच आद्युदात्तत्वमिति वोपदेवः (१) ।

(१) सिद्धान्तकौमुद्यां वैदिकप्रकरणे धातुस्वरप्रक्रियायामयमर्थः स्फुटीकृतो यथा—"स्वपादिहिंसामच्यनिटि ६।१।१८८। स्वपादीनां हिंसेश्चानि अजादौ सार्वधातुके परे आदिरुदात्तो वा स्यात्। स्वपादिरदाद्यन्तर्गणः। स्वपन्ति श्वसन्ति हिंसन्ति।

## [ लिङ्गादिः ]

टीका। ह्वादेरदाद्यन्तर्गणत्वेन ख्यातत्वात् अदादिवत्सूच- कानुबन्धो न कृतः। अथवा 'लु: स्वपादिश्च लिङ्गादि'रित्येकं वाक्यम्। लुलि इत्युभयानुबन्धौ धातू क्रमात् स्वपादिह्वादौ स', काकाक्षिगोलकन्यायेन चकारस्योभयसम्बन्धाददादौ च इत्यर्थः। ह्वादिः पृथग्गण इत्येके। अतएव पठन्ति च "भ्वाद्यदादी जुहो- त्यादिर्दिवादिः स्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादि- चुरादय इति। लुलि चोमेऽस्मिन् 'ह्वादौ ह्विरि'ति जुहोति।

## [ वोद्वतादिः ]

टीका। वृतङ्वल वर्त्तने, 'इङ्गो नेस्मे' इति तेनैव परस्मैपदे वर्त्स्यति विवृत्स्यति। आत्मनेपदे तु वर्त्तिष्यते। अन्यत्र विवृत्सा विवर्त्तिषा।

## [ श तुदादिकः ]

टीका। तुद औ श व्यथे 'दिवस्तुदेति' तुदति।

## [ ञिः कुटादिश्च ]

टीका। चकारात् तुदादिश्च। 'कुटा गुणो ङिणति' इति नियमात् कुट थि कौटिल्ये इत्यादीनां अकुटीदित्यादौ न गुणः। नूथिस्तवने इत्यादीनां अनुवीदित्यादौ न वृद्धिः अगुणत्वादुवच।

## [ प ङ्वदङ्वान् ]

टीका। आख्यातिकस्य ङोऽमात्रार्थं ङदिति विशेषणम्। स्वमते ङभयत्र ङ एव। डुओंप पच पाके 'ओपिचिन्तीति' पचा।

## [ ञो ज्वलादिः ]

टीका। जक्ष भक्षहसनयोः, 'द्विरुक्तजक्षादौ' इति द्विसंज्ञाया अवन्तस्य 'द्विस्थोऽद्वे'रिति न नुम् तेन जक्षत्। क्लीबे जस्शसोस्तु 'द्वेः शतु'रिति जक्षन्ति जक्षति। आख्यातिकेऽन्तो द्वेरिति जक्षति, 'अतुस्सिद्धे'रिति अजक्षुः।

## [ ञ वैदिकः ]

टीका। ( ञ इत्यनुबन्धो धातुः ) वैदिको वेदेष्वेव प्रयुक्तो न तु भाषायामित्यर्थः। गालि स्तुतौ जगाति।

## [ धातवो हन्तिभासार्था अकितो वा चुरादयः ]

टीका। इत्यनुबन्धेन फलं निरूप्य अर्थेनैव प्रयोजनं प्रथयति धातव इति। हन्त्यर्था हिंसार्थाः, हन्तेर्हिंसार्थ एव प्रसिद्धत्वात्। भासार्था दीप्त्यर्थाः। घटिष्यविद्युतावित्यत्र स्तुत्यर्थत्वेऽपि किङ्करणमर्थान्तरार्थमिति वोपदेवस्वरसात्। हन्त्यर्था भासार्थाश्च ये धातवस्तेऽकितोऽपि गणान्तरपठिता अपि वा चुरादयः स्युः। वाशब्दस्यानुक्तसमुच्चयार्थत्वात् कदाचिदन्येऽपि चुरादयः स्युरित्यर्थः। एवमेव धातुपारायणकमटीश्वरौ (१)। यथा हनूणौ गतौ वधे घातयति हन्तीत्यर्थः। शुभलडदीप्तौ शोभयति शोभते इत्यर्थः। दीप्त्यर्थस्य पाक्षिकचुरादित्वं सर्वैर्न मन्यते। अन्येषान्तु चुरादित्वं यथा "इन्द्रियादेरसामर्थ्यं वच्यमानमदीदिपत्" इति भट्टवार्त्तिकम्। "दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषमि"ति कालिदासः। "कोकिलो विष्णुरूपेण राजकन्यामजीहरत्" इति

(१) अर्थे धातवो विकल्पेनाकितश्चुरादौ वा पठ्यन्ते इति धातुपारायणम्।

## [ लिह्वादिः ]

टीका। ह्वादेरदाद्यन्तर्गतत्वेन ख्यातत्वात् अदादिलसूचकानुबन्धो न सतः। अथवा 'लुः स्वपादिश्च लिह्वादि'रित्येकं वाक्यम्। लुलि इत्युभयानुबन्धौ धातु क्रमात् स्वपादिह्वादौ स्त', काकाक्षिगोलकन्यायेन चकारस्योभयसम्बन्धाददादौ च इत्यर्थः। ह्वादिः पृथग्गण इत्येके। अतएव पठन्ति च "भ्वाद्यदादी जुहोत्यादिर्दिवादिः स्वादिरेव च। तुदादिश्च रुधादिश्च तनक्र्यादिचुरादय इति। हुलि होमेऽदने 'ह्वारीरे ह्रिरि'ति जुहोति।

## [ वोष्टतादिः ]

टीका। वृतङ्वत्त वर्त्तने, 'वृद्भ्यो नेमृपे' इति तेनैव परस्मैपदे वर्त्स्यति विवृत्सति। आत्मनेपदे तु वर्त्तिष्यते। अन्यत विवृत्ता विवर्त्तिषा।

## [ श तुदादिकः ]

टीका। तुद औ य व्यथे 'दिवमुतुदेति' तुदति।

## [ धिः कुटादिश्च ]

टीका। चकारात् तुदादिश्च। 'कुटा शुदी धिणाति' इति निरमात् कुट धि कौटिल्ये इत्यादीनां चकुटीदित्यादौ न गुणः। नूधिस्तवने इत्यादीनां चनुवीदित्यादौ न वृद्धिः अगुणत्वादुवृच।

## [ प अदङ्वान् ]

टीका। आख्यातिकस्य ङोऽप्राप्तार्थं अदिति विशेषणम्। स्वमते द्वभयत्र ङ एव। डुञौप पच पाके 'औपिचिन्तीति' पचा।

## [ ञो जक्षादिः ]

टीका। जक्ष भक्षहासयोः, 'द्विरुक्तजक्षादौ' इति द्विसंज्ञाया शत्रन्तस्य 'विदचोऽद्वे'रिति न नुम्, तेन जक्षत्। क्लीबे जस्शसोस्तु 'द्वेः शतु'रिति जक्षन्ति जक्षति। आख्यातिकेऽन्तौ 'अन्तोऽद्वे'रिति जक्षति, 'अणुस्सिद्वे'रिति अजक्षुः।

## [ ञ वैदिकः ]

टीका। ( ञ इत्यनुबन्धो धातुः ) वैदिको वेदेष्वेव प्रयुक्तो न तु भाषायामित्यर्थः। गाञ् स्तुतौ जगाति।

## [ धातवो हन्तिभासार्था अकितो वा चुरादयः ]

टीका। इत्यनुबन्धेन फलं निरूप्य अर्थेनैव प्रयोजनं प्रथयति धातव इति। हन्त्यर्था हिंसार्थाः, हन्तेर्हिंसार्थ एव प्रसिद्धत्वात्। भासार्था दीप्त्यर्थाः। घटिष्यपि द्युतावित्यत्र श्रुत्यर्थत्वेऽपि किकरणमर्थान्तरार्थमिति वोपदेवस्वरसात्। हन्त्यर्था भासार्थाश्च ये धातवस्तेऽकितोऽपि गणान्तरपठिता अपि वा चुरादयः स्युः। वाशब्दस्यानुक्तसमुच्चयार्थत्वात् कदाचिदन्येऽपि चुरादयः स्युरित्यर्थः। एवमेव धातुपारायणक्रमदीश्वरौ (१)। यथा हन्लौ गतौ वधे घातयति हन्तीत्यर्थः। शुभलुङ दीप्तौ शोभयति शोभते इत्यर्थः। दीप्त्यर्थस्य पाक्षिकचुरादित्वं सर्व्वैर्न मन्यते। अन्येषान्तु चुरादित्वं यथा "इन्द्रियादेरसामर्थ्यं पश्यमानमदीदिपत्" इति भट्टवार्त्तिकम्। "दृष्टे सूर्य्ये पुनरपि भवान् वाहयेदध्वशेषमि"ति कालिदासः। "कोकिलो विष्णुरूपेण राजकन्यामजीहरत्" इति

(१) सर्व्वे धातवो विवक्षाधीनत्वाच्चुरादौ वा पठ्यन्ते इति धातुपारायणम्।

पञ्चतन्त्रम्। "दशवर्षसहस्राणि रामो राज्यमकारयदि"ति व्यास इत्यादि।

क्रादिः कृगृदृधृप्रच्छो मुहद्रुहष्णुहनशष्णिहः।
मुहादि ङिद्धलन्तोऽनुदात्तेद्ऌङिद्द्युतादिकः॥

टीका। अथ स्वरूपेण फलं निरूपयति क्रादिरिति। क्रादिः कृश विक्षेपे, गृश निगरणे, दृङ आदरे, धृङ स्थितौ, प्रच्छ ज्ञीप्से इति पञ्च। फलन्तु अन्येषां मते क्रादिभ्यः सन इम् चिकरिषति इत्यादि। स्वमते तु स्मिङपूङरञ्ज्वशित्यादि-सूत्रे एषां ग्रहणात् क्रादेः फलाभावः। मुहद्रुहष्णुहनशष्णिहो मुहादिः। मुह्लृङ्जि वैचित्त्ये, द्रुह्लृ जिघांसे, ष्णुह्लृ उद्गारे, नश् ष्य नाशे, ष्णिह्लृ ङ्जि प्रीतौ। फलन्तु 'मुहां घङ्वे'ति मुक् मोग्धा, 'ओढोभा'विति मुट् मोढ़ा इत्यादि। द्रुहस्तु घङोऽप्राप्ति-पक्षे 'ओढोभा'वित्यनेन ढ एव नतु 'दादेर्घ' इत्यनेन घः, अन्यथा दादेर्घ इत्यनेनैवेष्टसिद्धौ मुहादावस्य पाठोव्यर्थः स्यात्।

[ ङिद्धलन्तोऽनुदात्तेत् ]

टीका। ङानुबन्धो हलन्तो हसन्तो यो धातुः सोऽनुदात्तेत् अनुदात्तस्वरानुबन्धः परिभाषित इत्यर्थः। तेषां वेदेष्वेवोच्चारण-भेदोऽस्तीति फलम्। आत्मनेपदश्चेति केचित्।

[ ऌङिद्द्युतादिकः ]

टीका। ऌङ इत्युभयानुबन्धो धातुर्द्युतादिः स्यात्। द्युतऌङ द्युत्या 'धान्सुलिद्युदि'ति परस्मैपदे अद्युतत्। लिदित्यनेनैवेष्टसिद्धौ द्युतादिपाठः प्राचामनुरोधात्।

श्विश्रिडीशीयुरुनुस्नुक्षुक्ष्णुवृङ्वृञ्विवर्जिताः ।
एकस्वरा आदिवर्णोदन्ता धातवोऽनिटः ॥

टीका। टुओश्वि गतिवृद्ध्योः, श्रिञ् सेवने, ओडीङ् गतौ, डीङ् च नभोगतौ, शीङ् स्वप्ने, युल मिश्रणे, रुल ध्वनौ, रुङ्-वधे गत्यां, णुल स्तुतौ, ष्णुल प्रस्रुत्यां, टुक्षुल क्षुते, क्ष्णुल तेजने, वृङ् सम्भक्तौ, वृनगञ वृतौ। ट इत्यनेनैवेट्सिद्धौ उभयग्रहणं स्व-रूपस्य कस्यचिद्ग्रहणार्थम्। तेन वृञगमन्थे इत्यत्रादिम् न स्यात्। स्वरादिवर्जिता एकस्वरा ये आकारान्ता ईवर्णान्ता उकारान्ता ऋकारान्ताश्च धातवस्तेभ्यः सामान्यविधानादिम् न स्यात्। यथा 'नेमेकाजाद्युदत्त' इति पाता जेता क्रेता योता कर्त्तेति। विशेष-विधानात्तु स्यादेव। यथा 'यमरमनमे'ति अयासिष्टाम्। 'स्नुक्रमोः सेटिम्पे' इति अस्नावीत् अक्षावीत् अक्ष्णावीत्। 'स्वरघ्रेन' इति करिष्यति। स्वरादेस्तु ऊयितेत्यादि।

[ इति परिभाषा ]

टीका। वक्ष्यमाणग्रन्थस्य संक्षेपनिर्वाहार्थं सङ्केतविशेषः परिभाषा इत्यर्थः।

अथ धातवो निर्दिश्यन्ते। तत्रादावदन्ताः तेषु च अपतज्वर्जेषु सर्वेषु धातुषु अकारोऽनुबन्धः, तकारस्तु सर्वेष्वेव। ननु अमालोप इत्यनेनाल्लोपस्य नित्यत्वाददन्तत्वं व्यर्थमिति चेन्न यतः "अग्लो-पित्वं स्थानिवत्त्ववशादन्तत्वप्रयोजनम्। यत्र त्वेते न विद्येते तत्रा-ग्लोपविकल्पनं। तद्बलादन्त्यदीर्घस्य युक्चेत्यज्ञापयत्वत" इति(१)।

---

(१) अस्यार्थः। अग्लोपित्वं इत्यमालोप इत्यनेन अदन्तधातोरकारलोपे धातोरग्लोपित्वं, स्थानिवत्त्वं तस्य लुप्ताकारस्य स्थानिवद्भावः। इदमयं अदन्तत्वप्रयोजनं धातोरदन्तत्वकरणफलम्। यत्र यस्मिंस्तु धातौ एते अग्लोपित्व-

यथा—अग्लोपित्वेन अजगवेघदित्यादौ न क्वसन्वद्भावौ। लोपोऽप्यादेश उच्यते इति न्यायात् स्थानिवत्त्वेन-कुष्यतीत्यादौ न गुणः गणयतीत्यादौ च न वृद्धिः। यत्र तु एते न विद्येते अग्लोपित्वस्थानिवत्त्वयोः प्रयोजनं न सम्भवति तत्र धातौ तद्बलात् अदन्तत्वस्वीकारबलात् अल्लोपविकल्पनम्। अकारस्थितिपक्षे दीर्घः पुक्च आदन्तत्वात् पश्च स्यादतोऽङ्घापयतीति सिद्धमिति केचित्। स्वमते तु अग्लोपित्वस्थानिवत्त्वयोः कार्य्यं येषु न स्यात् ते धातवो हसन्ता एव मन्तव्याः तेन अङ्घापयतीत्यादिप्रयोगाः स्वमतविरुद्धा इति बोध्यम्। नच स्वमतविरुद्धानामित्थोपन्यासोऽपि विरुद्ध इति वाच्यं, अष्टाना मतान्यालोक्य कर्त्तव्ये परमतन्यासेऽपि दोषाभावात्। अन्यथा कैश्चिदमन्यमानस्य हज्ञहताविति भौवादिकस्य पाठो विरुद्धः स्यात्। किन्तु यदि तन्मतैकवाक्यता क्रियते तदाग्लोपविकल्पोऽन्यदीर्घश्च मनीषादित्वात् साध्यः। यथा अङ्घोऽपिः हवाल्लोप इति अल्लोपः टीविभक्तेर्दिः जिघ्रीत्यङ् "नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारश्च षाट्टवर्गस्तवर्गजः" इति वचनात् ङस्य नप्रकृतिकत्वे 'स्यादौ नवद्र इति' ङकारं चित्वा किं इत्यस्य द्वित्वे कस्य चत्वे निमित्ताभावे नैमित्तिकस्याप्यभाव इति ङस्य नत्वे नस्यानुस्वारे तस्य च ञत्वे चाञ्चिकटिति। केचित्तु अङ्ग इति ङप्रकृतिं मन्वानाः चङ्कि इत्यस्य

---

स्थानिवत्त्वप्रयोजने न विद्येते तत्र तस्मिन् धातौ अग्लोपविकल्पनं विकल्पेन अकारलोपो भवति। विकल्पपक्षे तद्बलात् अदन्तत्वस्वीकारबलात् अन्त्यदीर्घं [illegible] दीर्घो भवेत्, पुक् च अकारस्य दीर्घत्वे आदन्तत्वात् [illegible] प्रत्ययेन [illegible] स्यात्। [illegible] अकारात् [illegible] अङ्घापयति। अङ्घधातोर्यथा अकारलोपे अङ्घयति तथा अकारस्थितिपक्षे अङ्घापयतीत्यपि इति विचार्यं।

खेर्द्वित्वे आडिड्डदित्याहुः। अत्र ह्रस्वसन्वद्भावयोरसम्भवान्नाग्लोपित्वं गुणवृद्ध्योरसम्भवान्न स्थानिवत्त्वमिति। केचित्तु द्वित्वेऽपि अकारलोपस्य स्थानिवत्त्वं मन्वानाः क इत्यस्य द्वित्वे अग्लोपित्वान्न सन्वत्कार्य्यं इत्याञ्चकदित्युदाहरन्ति।

---

अकारान्तवर्गः।

अङ्काङ्ग त्क पदे लक्ष्मण्यंशांस त्क विभाजने।
अर्थ त्काङ् याचनेऽन्ध त्क दृक्क्षयेऽघ त्क तत्कृतौ॥

१। अङ्कत्क पदे लक्ष्मणि। (अङ्क, अदन्त चु, प) कण्ठ्यवर्गाद्योपधः। पदं संख्यासंस्थानम्, लक्ष्म चिह्नयुक्तकरणम्। तथाच—अर्थः क्रियैव धातूना कर्त्तृव्यापारलक्षणा। आत्मनिष्ठं क्रियार्थत्वं धात्वर्थेष्वक्रियात्मसु इति वोपदेवः (१)। त, क— अङ्कयति अङ्कापयति। अङ्कयत्यरिसैन्यानि युधि दृष्टेषु सायकैरिति हलायुधः।

२। अङ्गत्क पदे लक्ष्मणि। (अङ्ग, अदन्त चु, प) कण्ठ्यवर्ग

---

(१) कर्त्तृव्यापारलक्षणा कर्त्तु क्रियाहेतुचेष्टाविशेषरूपा क्रियैव धातूनामर्थः। किन्तु धात्वर्थेषु अक्रियात्मसु गण्डिगण्डे इत्यादिवत् क्रियाभिन्नद्रव्यादिस्वरूपेषु तत्तु आत्मनिष्ठक्रियार्थत्वं आत्मनिष्ठा धात्वर्थनिष्ठा या क्रिया सैव अर्थो येषा तेषा भावस्तत्त्वं धातूनामिति शेषः। यदा धात्वर्थो द्रव्यादिस्वरूपस्तदा तन्निष्ठक्रियाविशेषमादायैव धातूनां क्रियार्थत्वमिति तात्पर्य्यम्। अतएव गण्डिगण्डे इत्यत्र "गण्डे कपोलविषयक्रियाम्। तथाच यत्र द्रव्यनिर्देशकत्वं तन्निष्ठक्रियाविशेष उपलक्ष्यते इति मैत्रेयबोपदेवौ। रमानाथस्तु कड्डुकार्कश्ये इत्यत्रात् कार्कश्य इत्यस्यानुवृत्त्या कपोलकर्त्तृककार्कश्येऽयमिति व्याख्याय गण्डति कपोलः पांशुना इत्युदाहृतवानि"ति स्वयं वक्ष्यति। केचित्तु गण्डयन्त्रस्य गण्डकर्त्तृककम्पनं चुम्बनञ्चेति व्याख्याय गण्डति कपोलं कपोतं वेत्युदाहरन्ति।

तृतीयोपधः। मदलक्ष्मव्याख्यानं पूर्ववत्। त, क—अङ्कयति अङ्कापयति।

३। अंश ल्क विभाजने। (अंश, अदन्त चु, प) तालव्योपधः। विभाजन इति भावल्युट् पृथक्कृत्यामित्यस्य रूपम्। त, क—अंशयति अंशापयति धनं वणिक्।

४। अंस ल्क विभाजने। (अंस, अदन्त चु, प) दन्त्योपधः। अन्यत् सर्व्वं अंशधातुवत्।

५। अर्थ ल्क ङ याचने। (अर्थ, अदन्त चु, आ)। ङ—अर्थयते अर्थापयते। "गावत्तृणामिवारण्ये प्रार्थयन्ति नवं नव" मिति, "प्रार्थयत्यल्पमल्पात्मा" त्यादौ प्रार्थनं प्रार्थः पश्चात् प्रार्थं करोतीति णौ परस्मैपदम्।

६। अन्ध ल्क दृक्क्षये। (अन्ध, अदन्त चु, प) दृक्क्षयो दृष्टिरहितीभावः, तेनाकर्म्मकोऽयं धातुः। तथाच—सत्ताजीवनदर्पभीतिशयनक्रीडानिवासव्ययाव्यक्तध्याननभोगतिस्थिति-जरालज्जाप्रमादोदये। मोहे स्फोटनवेगयुद्धदहनख्यातिप्ररोहाद्र्के प्रुद्धिस्वेदपलायनभ्रमपाके श्रान्तौ स्रुतौ मज्जने। हानौ जागरशोषवक्रगमनोत्साहे क्षतौ संशये स्नानौ मन्दगतौ च तृप्यपतने चेष्टाक्रुधो रोदने। हृद्दौ शब्दगतौ च सिद्धिविरतौ दर्पोपवेशे बले कम्पोद्वेगनिमेषभङ्गयतनाद्ये भातवोऽकर्म्मकाः। शैथिल्यादिषु चार्थेषु वर्त्तमानास्तु धातवः। बाधया भावमात्रस्य यतस्तस्मादकर्म्मकाः॥ कौटिल्यादिषु चार्थेषु प्रोक्ता ये ते तु धातवः। तद्गत्यावेऽकर्म्मकाः स्युस्तद्वत् कृत्या सकर्म्मका इति॥ त, क—अन्धयति, अन्धापयति।

७। अघ ल्क तत्कृतौ। (अघ, अदन्त चु, प) तत्कृतिः पापकृतिः। त, क—अघयति व्याधः। कर्म्मणोऽर्थमध्यपातादकर्म्मको-

ऽयम्। तथाच "धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात्। प्रसिद्धे-रविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया" इति गोयीचन्द्रः। धात्व-र्थेन सह कर्म्मणः उपसंग्रहादित्यर्थः। क्रमेणोदाहरणानि—नदी वहति क्षरतीत्यर्थः। अवयति व्याधः। भवति घटः। आस्ते जनः।

अवधीर त्कवज्ञायामान्दोल त्क तु दोलने।
जन त्क परिहाणे स्यादोज त्क बलतेजसोः॥

८। अवधीरत्क अवज्ञायाम्। (अवधीर, अदन्त चु, प) त, क—अवधीरयति साधुमसाधुः। (अवधीरितसुहृद्वाक्यस्य फल-मेतदिति हितोपदेशः)।

९। आन्दोल त्क तु दोलने। (आन्दोल, अदन्त चु, प) त, क—नान्दोलयन्ति परच्छिद्रं साधवः। टौदिविभक्तौ आन्दु-दोलत्। (तु शब्दः परत्र सम्बन्धज्ञापकः, एवं सर्व्वत्र)।

१०। जन त्क परिहाणे स्यात्। (जन, अदन्त चु, प) दीर्घादिदन्त्योपधः। तथाच "क्षोभमाशु हृदयं नयदूनां राग-वृद्धिमकरोन्न यदूना"मिति माघयमकम्। परिहाणं न्यूनक्रिया। त, क—ऊनयति स्वर्णं वणिक् प्रथमपरिमाणात्। परिमाण-मात्रेऽयमिति केचित्। ऊनधो ञिः अड् द्वित्वे स्वस्थानमेव नास्ति अतो नाव्लोपित्वमिति सन्देहनिरासार्थमाह। "मा भवान् ऊनिनत्। ओनेर्ऋदनुबन्धज्ञापकबलात् द्वित्वात् प्राक् प्राप्तो-ऽप्यल्लोपित्वात् स्यादिति" कामधेनौ वोपदेवः।

११। ओज त्क बलतेजसोः। (ओज, अदन्त चु, प) बलमिन्द्रियशक्तिः, तेजःप्राणशक्तिः। मा भवान् ओजिजत्।

कथ त्क वाक्यप्रबन्धे काल त्क गतिसंख्ययोः।

स्यात् कर्ब कत्र कर्त्त त्क शैथिल्ये कर्ण तक् भिदि॥

१२। कथ त्क वाक्यप्रबन्धे। (कथ धा, अदन्त चु, प) वाक्यप्रबन्धो वाक्यरचना। त, क—कथयति। (टीदिविभक्तौ अचीकथत् अचकथत्)।

१३। कल त्क गतिसंख्ययोः। (कल धा, अदन्त चु, प) (गतिरिह यापनं अन्तर्भूतण्यर्थत्वात्) त, क—कलयति कालं धीरः, यापयति गणयति चेत्यर्थः।

१४। कर्ब त्क शैथिल्ये। (कर्ब धा, अदन्त चु, प) रेफद्वययुक्तलकारः। त, क—कर्बयति कर्बापयति धूलिर्जलेन।

१५। कत्र त्क शैथिल्ये। (कत्र धा, अदन्त चु, प) रेफोपधत्वमध्यः। त, क—कत्रयति कत्रापयति धूलिर्जलेन।

१६। कर्त्त त्क शैथिल्ये। (कर्त्त धा, अदन्त चु, प) रेफोपधत्सकारः। त, क—कर्त्तयति कर्त्तापयति धूलिर्जलेन।

१७। कर्ण तक् भिदि। (कर्ण धा, अदन्त चु, प) त, क—कर्णयति, कर्णापयति। आङ्पूर्वकोऽयं श्रवणे। तथाच "देवाकर्णय येन येन सहसा यद्यत्समासादित"मिति। उपसर्गास्तदर्थाना द्योतका एव नतु वाचकाः। केवलधातोरनेकार्थस्वीकारे उपसर्गपूर्वस्यायन्यार्थो धातोरेव कल्प्यते लाघवात्। क्वचिदुपसर्गा धात्वर्थमेवानुवर्त्तन्ते। तथाच "धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते। तमेव विशिनष्टन्य उपसर्गगतिस्त्रिधा"। इति विस्तरः। क्रमेणोदाहरणानि—आदत्ते गृह्णातीत्यर्थः। प्रभूयते अत्र प्रभव एव धात्वर्थः, प्रशब्दस्तमेवार्थं द्योतयति। प्रणमति प्रकर्षेण नमतीत्यर्थः। केचित्तु अनर्थकोऽन्यः प्रयुज्यते इति चतुर्थचरणं पठन्ति तच्चिन्त्यम्।

काल त्क कालोपदेशे कुण त्काभाषमन्त्रयोः।
स्यात् कुमार कुमाल त्क केलौ केत त्क मन्त्रणे॥
निश्रावणेऽथ कूण त्क सङ्कोचेऽथ कुह त्क ङः।
विस्मायनेऽथ कूट त्क दाहे मन्त्रे क्षप त्क तु।
दौर्ब्बल्ये क्षप तक्ष्म स्यात् क्षेपे खच त्क बन्धने॥

१८। काल त्क कालोपदेशे। (काल, अदन्त चु, प) त, क—अचकालत् कालमियत्तया गणकः, एतावती वेलेति कथितवानित्यर्थः।

१९। कुण त्क आभाषमन्त्रयोः। (कुण, अदन्त चु, प) ह्रस्वो मूर्द्धन्योपधः। त, क—कुणयति। मन्त्रोऽभिमुखीकरणं, गुप्तोक्तिरित्येके।

२०। कुमार त्क केलौ। (कुमार, अदन्त चु, प) ह्रस्वो। त, क—कुमारयति। अचुकुमारत्।

२१। कुमाल त्क केलौ। (कुमाल, अदन्त चु, प) ह्रस्वो। त, क—कुमालयति। अचुकुमालत्।

२२। केत त्क मन्त्रणे निश्रावणे। (केत, अदन्त चु, प) त, क—केतयति। मन्त्रणं निमन्त्रणम्। अचिकेतत्। निश्रावणं समयोज्ञापणम्।

२३। अथ कूण त्क सङ्कोचे। (कूण, अदन्त चु, प) दीर्घो मूर्द्धन्योपधः। त, क—कूणयति। अचुकूणच्चक्षुः सङ्कुचितमभूदित्यर्थः।

२४। अथ कुह त्क ङ विस्मायने। (कुह, अदन्त

चु, घा) कुस्ती, विस्मायनं अन्यतो विस्मयोत्पादनम्  त, क, ङ—कुहयते कुहकेनेन्द्रजालिको लोकं विस्माययतीत्यर्थः। "स्नाता कुहयते विस्मापयते हेतुतो भय"मिति भट्टमल्लदर्शनाद्विस्मापने इति पाठ इत्येके।

२५। अथ कूट त्क दाहे मन्त्रे। ( कूट, अदन्त चु, प ) दीर्घो। अचुकूटत्। ( यः कूटयति शत्रूणां हृष्टा गजघटा रणे इति हलायुधः। २३४ )

२६। क्षप त्क तु दौर्बल्ये। ( क्षप, अदन्त चु, प ) सप्तमस्वरी। क्षपयति। सप्तस्वरीति विशेषणः। ( प्रचुरं प्रथितोऽप्यर्थं नासौ क्षपयति प्रभुरिति हलायुधः। २३५। अयं दान्तमितिशेषः )

२७। चप त्क म स्यात् क्षेपे। ( चप, अदन्त चु, प ) त, क—चपयति। म—चपपि चपापि, चपं चप चापं चापं। मानुबन्धसामर्थ्यात् ख्यानिवत्त्वाभावे दीर्घः। अस्मते तु अत दीर्घविधिरुपधा नापेक्षते।

२८। चप त्क बन्धने। ( चप, अदन्त चु, प ) त, क—चपयति।

खोट खोड़ तक क्षेपे खेट खेड़ त्क भक्षणे।

२९। खोट त्क क्षेपे। (खोट, अदन्त चु, प ) त, क—अचुखोटत्।

३०। खोड त्क क्षेपे। (खोड, अदन्त चु, प) त, क—अचुखोडत्।

३१। खेट त्क भक्षणे। ( खेट, अदन्त चु, प ) त, क—

अचिखेटत्। (खेटयत्यरिवीरांश्च संग्रामरसिकान् नृप इति हलायुधः। १५५। खेटयति हन्तीत्यर्थः)

३२। खेड़ त्क भक्षणे। (खेड़, अदन्त चु, प) त, क— अचिखेड़त्।

**गद त्काभ्र ध्वनौ गर्व्व त्काङ् दर्पेऽथ गृह त्काङ।**
**ग्रहे गण त्क संख्याने गवेष त क मार्गणे ॥**

३३। गद त्काभ्रध्वनौ। (गद, अदन्त चु, प) त, क— गदयति मेघः। अभ्रध्वनिर्मेघकर्तृकशब्दः।

३४। गर्व्व त्काङ् दर्पे। (गर्व्व, अदन्त चु, आ) त, क, ङ—गर्व्वयते गर्व्वापयते धनैर्नीचः। दर्पोऽहङ्कारः। (विद्याधन-सम्पन्नोऽपि यो न गर्व्वयते प्रभुरिति हलायुधः। ७१)।

३५। अथ गृह त्काङ ग्रहे (गृह, अदन्त चु, आ) सप्तमस्वरी। त, क, ङ—गृहयते। ग्रहो ग्रहणम्। (द्विषां गृहयते श्रिय इति हलायुधः। ३३)।

३६। गण त्क संख्याने। (गण, अदन्त चु, प) मूर्द्धन्यो-पधः। त, क—गणयति। (ढौदिविभक्तौ अजीगणत् अजगणत्)।

३७। गवेष तक मार्गणे। (गवेष, अदन्त चु, प) मूर्द्धन्योपधः। (मार्गणमन्वेषणम्) त, क—अजगवेषत् गुणं गुणी। (गवेषयति सत्क्रियां (यः) इति हलायुधः। २४७)।

**गोमत्क लेपने गात्र त्काङ् शैथिल्ये गुण त्क तु।**
**मन्त्रे गह त्क गहने चिव त्क चणिकेच्चणे।**
**लेख्येऽद्भुते चह त्क स्यात् शाठ्ये छद त्क संवृतौ।**

३८ । गोम त्क लेपने । ( गोम, अदन्त चु, प ) त, क—गोमयति ) अजुगोमत् गोमयेन स्थानं चेटी ।

३९ । गात्र त्क ङ् शैथिल्ये । ( गात्र, अदन्त चु, आ ) दन्त्यवर्गाद्यमध्यः । ( शैथिल्यं शिथिलीभावः ) त, क, ङ—गात्रयते गात्रापयते ।

४० । गुण त्क तु मन्त्रे । ( गुण, अदन्त चु, प ) कृत्वो मूर्द्धन्योपधः । त, क—गुणयति ।

४१ । गद्द त्क गद्दने । ( गद्द, अदन्त चु, प ) गद्दनं दुर्बोधः । त, क—गद्दयति शास्त्रं जडधीः, दुःखेन जानातीत्यर्थः ।

४२ । चित्र त्क चणिकेच्चणे लेख्येऽद्भुते । ( चित्र, अदन्त चु, प ) चणिकेच्चणं कादाचित्कदर्शनम् । त, क—चित्रयति चित्रापयति राज्ञं लोकः कदाचित् पश्यतीत्यर्थः । चित्रयति प्रतिमां लोकः । ( अद्भुतं साचर्य्यीभावः, चित्रयति लोकः आश्चर्य्यान्वितो भवतीत्यर्थः ) ।

४३ । चद्द त्क स्रात् शाठ्ये । ( चद्द, अदन्त चु, प ) ( शाठ्यं प्रतारणम् ) त, क—चद्दयति खलः ( साधुं प्रतारयतीत्यर्थः ) ।

४४ । छद त्क संहतौ । ( छद, अदन्त चु, प ) ( संहतिराच्छादनम् ) त, क—छदयति दिवं मेघः । ( छदयति सुरलोकं यो गुणैरिति हलायुधः १६ ) ।

छिद्र त्क भेदे छेद त्क छेदे तीर त्क कर्म्मणाम् ।
समाप्तावथतूण त्क सङ्कोचे तुत्थ तक् स्तुतौ ॥

४५। छिद्र त्क भेदे। ( छिद्र, अदन्त चु, प ) भेद इह रन्ध्रकरणम्। त, क—छिद्रयति छिद्रापयति भाण्ड बालक'।

४६। छेद त्क छेदे। ( छेद, अदन्त चु, प ) त, क—अचिच्छेदत्। ( छेदयत्यचितोदयमिति हलायुध:। २४६ )

४७। तीर त्क कर्म्मणां समाप्तौ। ( तीर, अदन्त चु, प ) कर्म्मणामिति स्पष्टार्थम्। ( १ ) त, क—अतितीरद्व्रतं लोक: समापितवानित्यर्थ:।

४८। अथ व्रण त्क सङ्कोचे। ( व्रण, अदन्त चु, प ) दीर्घौं, मूर्द्धन्योपध:। त, क—अवुव्रणत्।

४९। तुत्थ तक् स्तुतौ। ( तुत्थ, अदन्त च, प ) आद्ये पञ्चमस्वर: शेषे दन्त्यवर्गाद्ययुक्तस्थकार:। त, क—तुत्थयति तुत्थापयति। स्तुतिराच्छादनम्।

दु·ख त्क तत्क्रतौ दण्ड त्क तत्पाते ध्वन त्क तु।
घ·ट्ट निवास तक् स्तुत्यां प्रेङ्खोल तक चापले॥

५०। दु ख त्क तत्कृतौ। ( दु:ख, अदन्त चु, प ) विसर्गमध्य'। तथाच "काले तडिल्लताजाले घनपीनपयोधरे। कान्त: सर्व्वगुणोपेतो बालेन्दु: खे न लभ्यते"॥ इति विन्दुच्युतकम्। अस्यार्थ:—तडिल्लतासम्बद्धवति घनस्थूलमेघे काले कमनीय' सर्व्वगुणोपेतो बालेन्दु' खे आकाशे न लभ्यते। पक्षे हे बाले

( १ ) कर्म्मणामित्युपादानमस्य सकर्म्मकत्वज्ञापनार्थम् अन्यथा उष्णीषबन्ध समापने इत्यत्र समापनशब्देन यथा समाप्तीभाव उच्यते तथात्राधिसमाप्तिशब्दस्य समाप्तीभाववाचित्वेऽस्याकर्म्मकत्वापत्तिरिति शब्दकल्पद्रुमधृतातिरिक्तपाठ। कर्म्मसमाप्त्यैर्थेऽज्ञात्वर्थेभवेत् तदा धात्वर्थेनोपसङ्ग्रहादित्युक्तेरस्याकर्म्मकत्व स्यादतएव कर्म्मणामिति स्पष्टार्थमित्युक्तम् )।

३८। गोम त्क लेपने। (गोम, अदन्त चु, प) त, क—गोमयति ) चन्दुगोमत् गोमयेन स्थानं चेटी ।

३९। गात्र त्क ङ् शैथिल्ये। (गात्र, अदन्त चु, आ) दन्त्यवर्गाद्यमध्यः। (शैथिल्यं शिथिलीभावः) त, क, ङ—गात्रयते गात्रापयते ।

४०। गुण त्क तु मन्त्रे। (गुण, अदन्त चु, प) क्रुखी मूर्द्धन्योपधः। त, क—गुणयति ।

४१। गह त्क गहने। (गह, अदन्त चु, प) गहनं दुर्व्बोधः। त, क—गहयति शास्त्रं जड़धीः, दुःखेन जानातीत्यर्थः।

४२। चित्र त्क चाणिकेक्षणे लेख्येऽद्भुते। (चित्र, अदन्त चु, प) चाणिकेक्षणं कादाचित्कदर्शनम्। त, क—चित्रयति चित्रापयति राजं लोकाः कदाचित् पश्यतीत्यर्थः। चित्रयति प्रतिमां लोकः। (अद्भुतं साश्चर्य्यीभावः, चित्रयति लोकः आश्चर्य्यान्वितो भवतीत्यर्थः)।

४३। चह त्क शाठ्ये। (चह, अदन्त चु, प) (शाठ्यं प्रतारणम्) त, क—चहयति खलः (साधुं प्रतारयतीत्यर्थः)।

४४। छद त्क संवृतौ। (छद, अदन्त चु, प) (संवृतिराच्छादनम्) त, क—छदयति दिशं मेघः। (छदयति भूलोकं यो गुणैरिति हलायुधः १६)।

छिद्र त्क भेदे छेद त्क छेदे तीर त्क कर्मणाम्।
समाप्तावम्भ्रूण त्क सङ्कोचे तुत्थ तक् स्वृतौ ॥

चु, प ) द्वौ यकारयुतौकलकारमध्यौ, क्रमाद्दीर्घह्रस्वमध्यौ च। लूनिश्छेदः, पूतिः पवित्रीकरणम्। त, क—अपपल्यूलत् तृणं लोकः। पल्युलयति धनं गङ्गा।

६४। पुट क्व तु संसर्गे। (पुट, अदन्त चु, प) त, क—पुटयति पुष्पं सूत्रेण लोकः, संसृजतीत्यर्थः।

६५। पत्त क्व परिग्रहे (पत्त, अदन्त चु, प) त, क—पत्तयति, पत्तापयति।*

६६। भाम क्व कोपने। (भाम, अदन्त चु, प) त, क—अबभामत्। (भामयति कुप्यति या सा भामिनी। तथाच कोपनासैव भामिनीत्यमरः)।

भाज क्व तु पृथक्कृत्यां म्टग क्व ङ तु मार्गणे।
मह क्व पूजे मुत्र क्व प्रस्तावे मन तङ् द्युतौ॥

६७। भाज क्व तु पृथक्कृत्याम्। (भाज, अदन्त चु, प) त, क—अबभाजत् धनं भ्रातृवर्गः। (विभाजयति यो द्रव्यमिति हलायुधः। २६४)

६८। म्टग क्व ङ तु मार्गणे। (म्टग, अदन्त चु, आ) त, क, ङ—म्टगयते। मार्गणमनुसन्धानम्। "रामो म्टगं म्टगयते वनवीथिकासु" इति महानाटकम्। (सेवायै म्टगयामहे नरपशो स्वदा वराकावयमिति शान्तिशतके) कातन्त्रादौ म्टग 'अन्वेषणे इति दिवादिपरस्मैपदी धातुश्च दृश्यते, दुर्गसिंहत्रिलोचनयोरसम्मतत्वादनेनोपेक्षितः। "म्टग्यन्तः मद्दर्वों तथाप्यकरुणा व्याधा न मुञ्चन्ति मा"मिति तु चकारान्तस्यैव भावे क्विपि जिलोपे म्टगं करोतीति कण्ड्वादित्वात् के साध्यम्।

६९। मह स्क पूजे। (मह, अदन्त चु, प) त, क—महयति।

७०। मूत्र स्क प्रस्रावे। (मूत्र, अदन्त चु, प) दीर्घी। त, क—मूत्रयति स्रावयति।

७१। मन तङ् धृतौ। (मन, अदन्त चु, प) दन्त्योपधः। त, क—मनयति।

**क्षप ल्क क्षप तञ् क्षान्तौ मिश्र स्कयूत्यां रह स्क तु।**
**त्यागे रस स्क त्वास्वादे स्नेहे रूप स्क तत्कृतौ॥**

७२। क्षप ल्क क्षान्तौ (क्षप, अदन्त चु प। क्षप,
७२। क्षप तञ क्षान्तौ अदन्त, उ) द्वौ मूर्द्धन्योपधौ। त, क—क्षपयति। (क्षपयति न क्षुपाणामिति हलायुधः। अणुमात्रमनुचितं य इति शेषः। १५) त, अ—क्षपति, क्षपते।

७३। मिश्र स्क यूत्याम्। (मिश्र, अदन्त चु, प) तालव्यमध्योऽयं, दन्त्यमध्य इति वर्णदेशनायाम्। यूतिःसंयोजनम्। त, क—मिश्रयति मिश्रापयति इतेनान्नं लोकः।

७४। रह स्क तु त्यागे (रह, अदन्त चु, प) त, क—रहयति शोकं धीरः। (न क्षरि दानं विरहय्य सत्क्रियामिति भारविः)।

७५। रस स्क त्वास्वादे स्नेहे। (रस, अदन्त चु, प) दन्त्योपधः। त, क—रसयति मधु द्विरेफः। (रसयन्ति सुधाद्यानि तत्करप्रतिपालिता इति हलायुधः। यस्योद्याने पतत्रिण इति शेषः। २०२)

७६। रूप स्क तत्कृतौ। (रूप, अदन्त चु, प) तत्कृतीरूपयुक्तकरणम्। त, क—अरूरूपत् प्रतिमां शिल्पी। निपूर्व्वकः स्वरूपकथने, अनुमानं निरूप्यते इत्यनुमानखण्डम्।

रच ल्क क्षत्यां रूक्ष ल्क पारुष्ये रंह तक् गतौ ।
रूप ल्क स्याद्विस्फुरणे लज लञ्ज ल्क भासने ॥

७७। रच ल्क क्षत्याम् । (रच, अदन्त चु, प) त, क— रचयति ।

७८। रूक्ष ल्क पारुष्ये। (रूक्ष, अदन्त चु, प) दीर्घी। तथाच—स पुनातु व्रजे यत्र गोरज पातरूक्षितौ। विद्युद्वक्षिद्ध यमलौ निष्प्रेमेण तरूक्षितौ ॥ इति कीचकयमकम्। पारुष्य मस्निग्धीभाव । त, क—रूक्षयति रूक्षापयति केश ।

७९। रंह तक् गतौ। (रंह, अदन्त चु, प) त, क—रंह यति, रंहापयति।

८०। रूप ल्क स्यात् विस्फुरणे। (रूप, अदन्त चु, प) दीर्घी। मूर्द्धन्योपध । त, क—अरूरूपत् । (पदातिरन्तर्गिरि रेणुरूषित इति किराते । १ । ३४)

८१। लज ल्क भासने। (लज, अदन्त चु, प) भासन दीप्ति । त, क—लजयति।

८२। लञ्ज ल्क भासने। (लञ्ज, अदन्त चु, प) भासन दीप्ति । त, क—लञ्जयति, लञ्जापयति।

लड लाड तक क्षेपे ललल्कोप्से वरल्क च ।
वर्ण ल्क स्तुतिविस्तारशुक्लाद्यद्युक्तिदीपने ॥

८३। लड तक क्षेपे। (लड, अदन्त चु, प) त, क— लडयति, अललडत्।

८४। लाड़ तक क्षेपे (लाड़, अदन्त चु, प) त, क—लाड़यति, अललाड़त्।

८५। ललल्क्षेपे (लल, अदन्त चु, प) ईप्स इति आप-धातोः सनन्तस्य भावे अलिरूपं। ननु संख्याद इत्यनेन समान-रूपोऽपि अल् कथं न बाध्यते इतिचेन्न स्त्रीविहितप्रत्ययैः कश्चित् सरूपोऽपि न बाध्यते इति मतस्यावश्यकाश्यत्वात्। अत-एव कारणं भर्त्सनं निर्यातनं नियामनमित्यादौ ओणिश्रन्थि-ग्रन्थीत्यनेन अनट् न बाध्यते। एवं वक्ष्यमाणेषु व्रीड़ लज्जे, ईह ईहे इत्यादिष्वपि बोध्यं। त, क—ललयति धनं लोकः।

८६। वर तक च। (वर, अदन्त चु, प) रेफोपधः। त, क—वरयति। चकारादीप्से।

८७। वर्ण तक स्तुतिविस्तारशुक्लाद्युदुक्तिदीपने (वर्ण, अदन्त चु, प) उद्युक्तिरुद्योगः। त, क—वर्णयति वर्णापयति कविः स्तौतीत्यर्थः। वर्णयति तन्तुं तन्तुवायः विस्तारयतीत्यर्थः। वर्णयति प्रतिमां कारुः शुक्लादिवर्णां करोतीत्यर्थः। वर्णयति रविः उद्युङ्क्ते दीप्यते चेत्यर्थः। शुक्लाद्युक्तिदीपने इत्यपि पाठ इति केचित्।

वसत्क वासे वासत्कोपसेवायां व्यय त्क तु।
गतौ वित्त त्क च त्यागे वात त्क गतिसेवयोः॥
सुखे वेल त्क कालार्थे वुस त्क दृशि वराट तक्।
भागे वट त्क वेष्टे च वल्यूल वल्युल त्क तु॥
पल्यूलार्थेऽथ वीज त्क व्यजने वीर तङ्क तु।
शौर्य्ये व्रण त्काङ्चूर्णे व्यय्यारस्तथ त्क तु॥
दौर्व्वल्ये श्याम तक् मन्त्रे शूर त्काङ् विक्रमे शठ।

## श्वठ त्क दुर्वाचि शील तकाभ्यासेऽतिशायने ॥

८८ । वस त्क वासे । ( वस, अदन्त चु, प ) त, क—वसयति सुसुखं लोकान् राजा निवासयतीत्यर्थः ।

८९ । वासत्कोपसेवायाम् । ( वास, अदन्त चु, प ) उपसेवा गुणान्तराधानम् । त, क—अववासत् वस्त्रं चन्दनेन जनः । ( यस्या गन्धेन वासितमिति विष्णुपुराणम् ) ।

९० । व्यय त्क,तु गतौ । ( व्यय, अदन्त चु, प ) त, क—व्यययति धनं दाता । (बहु व्यययति द्रव्यमिति हलायुधः । १।७)

९१ । वित्त त्क च त्यागे । ( वित्त, अदन्त चु, प ) त, क—वित्तयति, वित्तापयति । चकारात् व्यय त्क च ( व्ययधातुरपि त्यागार्थक इत्यर्थः ) ।

९२ । वात त्क गतिसेवयोः सुखे । ( वात, अदन्त चु, प ) त, क—अववातत् । तयोरर्थः । रमानाथस्तु गतिसुखसेवनयोरिति मत्वा गतौ सुखं गतिसुखं, वातयति पान्थं वातः गच्छन्तं सुखयतीत्यर्थ इत्याह । सुखसेवनयोरिति कौमराः ।

९३ । वेल त्क कालार्थे । ( वेल, अदन्त चु, प ) कालार्थः कालोपदेशः । त, क—अविवेलत् कालमियत्तया गणकः एतावती वेलेति कथितवानित्यर्थः ।

९४ । वृन त्क दृशि । ( वृन, अदन्त चु, प) अन्तस्थादितीययुतः । त, क—वृनयति वृनापयति । दृशि दर्शने ।

९५ । वण्ट त्क भागे । ( वण्ट, अदन्त चु, प ) त, क—वण्टयति, वण्टापयति । (वण्टयन्ति च रत्नानि भूमिं वण्टापयन्ति चेति हलायुधः । विभा इति शेषः । ८८ )

९६। वट ल्क वेष्टे च (वट, अदन्त चु, प) त, क—वटयति। चकारात् भागे च।

९८। वल्यूल ल्क } पल्यूलार्थे (वल्यूल, अदन्त चु, प।
९९। वल्युल ल्क } वल्युल, अदन्त चु, प) द्वौ यकारयुक्तौ-

कलकारमध्यौ, क्रमाद्दीर्घह्रस्वमध्यौ च। त, क—अववल्यूलत्, वल्युलयति। पल्यूलार्थे लूनिपूत्योरित्यर्थः।

९९। वीज ल्क व्यजने। (वीज, अदन्त चु, प) त, क—अविवीजत् चामरेण हर्यं भृत्यः। (वीज्यते स हि समुप्त इति कुमारसम्भवे) वीज इति जान्तो गत्यर्थो भ्वादिरात्मनेपदी कातन्त्रे दृश्यते।

१००। वीर त ङु शौर्य्ये। (वीर, अदन्त चु, आ) त, ङ, क—अविवीरत। शौर्य्यमुद्यमः।

१०१। व्रण ल्क अङ्गचूर्णे। (व्रण, अदन्त चु, प) अङ्गचूर्णमङ्गभेदः। त, क—व्रणयति गात्रं बाणेन भटः।

१०२। श्रथ ल्क } दौर्ब्बल्ये। (श्रथ, अदन्त चु, प। श्रार, अदन्त चु, प। श्लथ, अदन्त चु, प।
१०३। श्रार ल्क } (आद्यो रेफयुक्तः, मध्यमो रेफोपधः,
१०४। श्लथ ल्क }

शेषोऽन्त्यस्थाद्वतीययुक्तः। त, क—श्रथयति, अशश्रारत्, श्लथयति।

१०५। श्याम ल्क मन्त्रे। (श्याम, अदन्त चु, प) त, क—अशश्यामत्। मन्त्रोऽभिमुखीकरणम्। गुप्तोक्तिरित्येके।

१०६। शूर त ङ् विक्रमे। (शूर, अदन्त चु, आ) दीर्घी। त, क—अशुशूरत। विक्रम उद्यमः। (रणे शूरयते यथेति हलायुधः। २४४)

१०८ । शठ ञ्क } दुर्व्वाचि । (शठ, अदन्त चु, प । श्वठ,
१०९ । श्वठ ञ्क } अदन्त चु, प ) शेषो वकारयुक्तः । त, क—शठयति श्वठयति नीचः कुत्सितं वदतीत्यर्थः । रमानाथस्तु सम्यग्भाषणे इति मत्वा शठयति सम्यग्वदतीत्यर्थं इत्याह । सम्यग्भाषण इति कौमराः । सम्यग्भावे इत्येके ।

११० । शील ञ्क अभ्यासेऽतिशायने । ( शील, अदन्त चु, प ) तालव्यादिः । अतिशायनमतिशयकरणम् । त, क—अशिशीलत् । उपधारणे इत्यन्ये । शीलय नीलनिचोलमिति जयदेवः । ( शीलयत्यात्मनोहितमिति हलायुधः । २४५ )

## षमष्टम ञ्क वैक्लव्ये सान्त्वसाम ञ्क सान्त्वने ।

१११ । षम ञ्क } वैक्लव्ये । (षम, अदन्त चु, प । ष्टम, अदन्त
११२ । ष्टम ञ्क } चु, प ) द्वौ मूर्द्धन्यादी । षोपदेशपाठो भ्वाद्यादीति दन्त्यत्वे कृतषकारत्वात् षत्वार्थः । त, क—सिषमयिषति, तिष्टमयिषति । एवं सर्व्वत्र । वैक्लव्यं विह्वलीभावः ।

११३ । सान्त्व ञ्क } सान्त्वने । ( सान्त्व, अदन्त चु, प ।
११४ । साम ञ्क } साम, अदन्त चु, प ) द्वौ दन्त्यादी । आद्यस्तमध्यो वकारोपधः । एतयोरन्त्यसादित्वेऽपि दन्त्यादित्वस्य फलं ष्टकसक स प्रतीघाते इत्यत्र द्रष्टव्यम् । सान्त्वनं प्रियकरणम् । त, क—सान्त्वयति सान्त्वापयति । असमामत् दीनं धनेन दाता । ( यः सामयति सामन्तः स्निग्धैरालोकनैश्च ता इति हलायुधः । ताः सीमन्तिनीः । २२३ )

## संग्राम ङ ञ तक् युद्धे स्पष्ट स्पेषे साट ञ्क तु । प्रकाशने सभाज ञ्क सेवने प्रीतिदर्शने ॥

११४ । संग्राम ङ ञ त क् युद्धे । ( संग्राम, अदन्त चु, आ, उ ) त, क, ङ—संग्रामयते । ञ—संग्रामयति, संग्रामयते । तस्यौ सिसंग्रामयिषुः श्रितेषुरिति भट्टिः । ३ । ४७ । ञित्त्वेनैवोभयपदसिद्धौ ङित्करणमफलवत्कर्त्तर्य्यात्मनेपदार्थम् । एवं सर्व्वत्र । किन्त्वेष आत्मनेपदीति प्राञ्चः । कदाचित् परस्मैपदार्थो ञकारः ।

११५ । स्तूप त्क क्षेपे । ( स्तूप, अदन्त चु, प ) त, क—स्तूपयति । स्तूपः प्राप्तुमिच्छा ।

११६ । साट त्क प्रकाशने । ( साट, अदन्त चु, प ) द्वितीयस्वरयुक्तदन्त्यसादिरयम् । त, क—असमाटत् ।

११७ । सभाज त्क सेवने प्रीतिदर्शने । ( सभाज, अदन्त चु, प ) त, क—अससभाजत् । ( सभाजयति सज्जनानिति हलायुधः । सेवते इत्यर्थः । २६४ । स्नेहात् सभाजयितुमेत्य दिनान्यमूनीत्युत्तरचरितम् )

स्थूल त्कङ् बृंहणे सूत्र त्क ग्रन्थे सत्र तङ्क तु ।
सम्बन्धे सन्ततौ सूचत्कपैशुन्ये स्वर त्क तु ॥
आक्षेपे स्तेन तक् चौर्य्ये स्तोम त्क श्लाघने स्तनत् ।
काम्यशब्दे सार तक् दौर्ब्बल्ये सुख त्क तत्क्रतौ ॥

११८ । स्थूल त्कङ् बृंहणे । ( स्थूल, अदन्त चु, आ ) दीर्घौ । त, क, ङ अतुस्थूलत । बृंहणं वृद्धिः ।

११९ । सूत्र त्क ग्रन्थे । ( सूत्र, अदन्त चु, प ) दीर्घौ, दन्त्यवर्गाद्यमध्यः । वेष्टने इत्यन्ये । त, क—सूत्रयति सूत्रापयति सूत्रेण दृब्धं लोकः ।

१२० । सत्र त ङ्क सम्बन्धे सन्ततौ । ( सत्र, अदन्त चु,

षा ) इत्यवर्गाद्यमध्यः । सन्ततिर्निर्वाहक्रियेति भट्टमल्लः । त, क, ङ—सन्तयते सन्तापयते प्रतिज्ञा साधुः । सन्ततिर्विस्तार इति गोविन्दभट्टः ।

१२१ । सूच त्क पैशुन्ये । ( सूच, अदन्त चु, प ) दीर्घी । त, क—असुसूचत् कथा लोकः कथितवानित्यर्थं इति रमानाथः । पैशुन्यमन्तर्द्रोह इत्यन्ये । ( १ )

१२२ । स्वर त्क आक्षेपे । (स्वर, अदन्त चु, प) वकारयुक्ता-द्विरेफोपधश्च । (आक्षेपस्तिरस्कारः) स्वरयत्यतिदृष्टोऽपि न कञ्चन परिग्रहमिति हलायुधः । २२२ । ( न स्वरयति नाधिक्षिपति न भर्त्सयतीति यावत्, परिग्रहं परिजनं) त, क—सिस्वरयिषति । पञ्चमस्वरयुक्त इति चतुर्भुजः । स्वरयति, सुस्वरयिषति ।

१२३ । स्तेन तक् चौर्य्ये । ( स्तेन, अदन्त चु, प ) त, क—अतिस्तेनत धनं चौरः ।

१२४ । स्तोम त्क श्लाघने ( स्तोम, अदन्त चु, प ) श्लाघन प्रशंसा । त, क—अतुस्तोमत् कवि बुधः ।

१२५ । स्तन त्काभ्रशब्दे ( स्तन, अदन्त चु, प ) त, क—स्तनयति मेघः । (स्तनितं गर्ज्जितं मेघनिर्घोषे रसितादि चेत्यमरः)।

---

( १ ) पिशुन इह सूचकः पिशुनौ खलसूचकावित्यमरोक्तेः । पिशुनस्य भावः पैशुन्यं सूचकत्वं विज्ञापनमिति यावत् । तथाच-सज्ञासाम्नेतना नाम हस्ताद्यैश्चार्थसूचनेत्यमरः । कार्य्यविज्ञापनमित्यर्थः । एवं सूचनाव्यधनेऽदृष्टे गन्धनेऽभिनयेऽपि चेति मेदिनी । गन्धन द्रोहण । गन्ध कद्द दुर्दि इत्यनेन निष्पादनात् । अभिनयं सङ्केतेन विज्ञापनमित्यर्थः । अतएव अयोरिष्टाद्भ्रमरैर्भमङ्गि प्राक्सूचितान्तःसलिलप्रवेश इति रघौ । यत्र चौर्य्ये वा विलम्बे वा ये अहारिष्टसूचका इति दीपिका । इत्यधिक पाठ ।

१२६। सार तक दौर्ब्बल्ये (सार, अदन्त चु, प) रेफोपधः। त, क—असमारत्।

१२७। सुख त्क तरक्रतौ (सुख, अदन्त चु, प) तरक्रतिः सुखक्रिया। त, क—श्रीजयदेवकवेरिति गीतं सुखयतु केशवपदमुपनीतमित्यादि।

स्फुट त्क स्याद्विसरणे स्कन्द त्क तु समाहृतौ।
स्वन स्यम तक ध्याने हिल्लोल तक दोलने॥

१२८। स्फुट त्क विसरणे (स्फुट, अदन्त चु, प) विसरणं विकसनम्। त, क—स्फुटयति चम्पककलिका। अपुस्फुटत्।

१२९। स्कन्द त्क समाहृतौ (स्कन्द, अदन्त चु, प) दन्त्यवर्गतृतीयोपधोऽयं, तच्चतुर्थोपधोऽयमिति केचित्। (१) त, क—स्कन्दयति स्कन्दापयति। अचस्कन्दत्।

१३०। स्वन तक } ध्याने (स्वन, अदन्त चु, प। स्यम,
१३१। स्यम तक } अदन्त चु, प) द्वौ मकारान्तःस्यादियुक्तौ क्रमात्। त, क—स्वनयति, स्यमयति।

१३२। हिल्लोल तक दोलने (हिल्लोल, अदन्त चु, प) अन्तःस्थतृतीयद्वयमध्यस्थदेकोपधश्चायम्। त, क—अजिहिल्लोलत् वायुर्लताम्।

इत्यकारान्तधातूनां सद्वात्रिंशच्छतं मतम्।
तुल्यावयवानां धातूनां पृथक्पठितानामप्येकत्वे संख्यासङ्गतिः॥

(अदन्तचुरादिषु अङ्कादिहिल्लोलान्ता धातवः परिगणनया त्रयस्त्रिंशदधिकशतसंख्यका भवन्ति। किन्तु स्पष त्क चान्तौ स्पशञ्च

(१) समवर्येव केचिच मन्यते इत्यधिक पाठ।

ख्यान्ताविति गणद्वये धातुद्वयस्य तुल्यावयवत्वादेकत्वे समुदायस्य सहाविंशच्छतसंख्याया नासङ्गतिरित्याशयः )।

---

## आकारान्तवर्गः।

**ख्याल् ख्यातौ कथने गार्लि स्तुतौ जन्मनि गाङ् गतौ।**
**घ्रा गन्धग्रहणे ज्या गि जरायां ज्ञा ग बोधने॥**

१। ख्याल् ख्यातौ कथने ( ख्या, अदा, प ) ख्यातिः प्रसिद्धिः। ल—ख्याति गुणी प्रसिद्धः स्यादित्यर्थः। ख्याति साधुं कथा हरेः। तथाच ख्या प्रकथने, प्रकथनं प्रसिद्धिरिति गोविन्दभट्टः। ख्या प्रकथने इति चतुर्भुजङ्गमरी।

२। गार्लि स्तुतौ जन्मनि ( गा, ह्वा, प ) र—वैदिकः। (१) लि—जगाति।

३। गाङ् गतौ ( गा, भ्वा. आ ) ङ—गाते।

४। घ्रा गन्धग्रहणे ( घ्रा, भ्वा, प ) जिघ्रति पुष्पं लोकः।

५। ज्यागि जरायां ( ज्या, क्र्यादि, प्वादि, प ) (२) जरा—गतवयोभाव। गि—जिनाति वृद्धः। जीनः, ज्यानिः। ( न जिनाति तेज इति हलायुधः। ८ )

---

(१) वैदिकेष्वेवास्य प्रयोग इत्यर्थः।

(२) परिभाषायां "गि" प्वादिरपि, अत एव अपिशब्दात् क्र्यादिश्च" इत्युक्तं तेनैव जिनातीत्यादौ क्र्यादित्वात् श्नाप्रत्ययः। स प्वादित्वादिति इत्युक्त्या जीन इत्यादौ ल्वाद्योदितः इत्येव नत्वं न। ज्यानिरित्यत्र ल्वादित्वेनैवेदित्वे कृ ग ग्लाम्लेति निविधानत्वे पुनर्ज्योपादानं क्तिस्यानन्तत्वे न कदाचित् ज्यानिरत्नानधी-कारार्थं तेन ज्यानिरित्यत्र न पक्षप्रवाद्योदित्यनेन जिरिति।

पुराणेषु प्रयोगो यथा—' पुष्पाणि घोषे कदलि वेदे ब्रह्माणि हिंसे जनाम्भारे।

६ । ज्ञाग बोधने (ज्ञा, क्या, प) ग—जानाति । "सन्दर्भ-शुद्धिं गिरा जानीते जयदेव एव" इत्यत्रानुपसर्गात् फलवत्-कर्त्तर्य्यात्मनेपदम् । "ततोऽनुजज्ञे गमन सुतस्य" इत्यत्रानुशब्द-स्योपसर्गप्रतिरूपकत्वेनानुपसर्गत्वात् । (शेषोदाहरणे कर्म्मणि प्रत्यय इत्यप्यन्ये )।

**ज्ञाक् म मारण आलोके निशाने तोषणे स्तुतौ ।**
**ज्ञाक् प्रेरणे दाल लूनौ दा तु दाने डुदाञ्लि च ॥**

६ । ज्ञाक्म मारण आलोके निशाने तोषणे स्तुतौ (ज्ञा, चु, घटादि, प ) क, म—ज्ञपयति, अज्ञपि अज्ञापि, ज्ञप ज्ञपं, ज्ञापं ज्ञाप ( ओणमोस्तु वेत्युक्ते ) आलोकोदर्शनप्रेरणम् । निशान तीक्ष्णीकरणम् । तोषण तुष्टीकरणम् । ज्ञपयति शत्रुं सूरोमारयतीत्यर्थं । ( यज्ञे सज्ञापयत्यजानिति हलायुधः । ६८ ।

भूञगि कम्पे वृञगि वरणे धृगि हृगि स्याती हनने । मृगिह धात कथितोहर्त्यां पृगिह रणे पूरणकत्याम् । सृगिह हिंसे वृगिह हत्या दृगि विदारे मृगिह नीत्याम् । भृगिह भर्त्से जृहइत्ये गृगिह शब्दे ज्या जीर्यत्ये । री रेषगतौ कृगिह गत्यां लीगि ल्योगि श्लेषणकत्याम् । ओगगिवरणे ल्वीगगि गत्या भ्रोगगिधाह कथितो भत्याम् । पञ्चाधिकविंशतिरिति गदिता प्वादिगणे धातव इह विदिता '।

(कविकल्पद्रुमे स्वदन्तगणपाठे मृधातुर्नास्ति किन्तु शृस्तृगि हिंसे इत्यनयोर्व्याख्याने शेषोदन्त्यादिर्वकारोपध तदृहितोऽपीति केचिदित्युक्तं केषाञ्चिन्मते मृधातुरपि प्वादिरस्ति तन्मतमादायैव प्वादिगणस्य पञ्चविंशतिसङ्ख्यामङ्गमनस्मिति सुधीभि र्भाव्यम् । केचित्तु धृधातुमपि प्वादिगणे पठन्ति तन्मतानुसारेण वा सङ्ख्यासङ्गति-रित्यपि चिन्त्यम ।

पाणिनीयमते तु प्वादयो द्वाविंशति । तथाच—निष्ठातकारस्य नकारविधान-प्रसङ्गे ल्वादिभ्य । ८ । २ । ४४ । इति सूत्रस्य वृत्तौ एकविंशतेर्लूञादिभ्य प्राक्-दियुक्त भट्टोजीदीक्षितेन । क्र्यादिषु प्वादयो द्वाविंशति पठ्यन्ते इत्युक्तं तत्त्व-बोधिन्या ज्ञानेन्द्रेण ।

घान्ताविति गणद्वये धातुद्वयस्य तुल्यावयवत्वादेकत्वे समुदायस्य सहाविंशच्छतसंख्याया नासङ्गतिरित्याशयः )।

---

## आकारान्तवर्गः।

**ख्याल् ख्यातौ कथने गार्लि स्तुतौ जन्मनि गाङ् गतौ।**
**घ्रा गन्धग्रहणे ज्या गि जरायां ज्ञा ग बोधने॥**

१। ख्याल् ख्यातौ कथने ( ख्या, अदा, प ) ख्यातिः प्रसिद्धिः। ल—ख्याति गुणी प्रसिद्धः स्यादित्यर्थः। ख्याति साधु कथां हरेः। तथाच ख्या प्रकथने, प्रकथनं प्रसिद्धिरिति गोविन्द भट्टः। ख्या प्रकथने इति चतुर्भुजमरौ।

२। गार्लि स्तुतौ जन्मनि ( गा, हा, प ) र—वैदिकः। (१) लि—जगाति।

३। गाङ् गतौ ( गा, भ्वा. आ ) ङ—गाते।

४। घ्रा गन्धग्रहणे ( घ्रा, भ्वा, प ) जिघ्रति पुष्पं लोकः।

५। ज्यागि जरायां ( ज्या, क्र्यादि, प्वादि, प ) ( २ ) जरा—गतवयस्कयोभाव। गि—जिनाति वृद्धः। जीन, ज्यानि। ( न जिनाति तेज इति हलायुधः। ८ )

---

(१) वैदेष्वेवास्य प्रयोग इत्यर्थः।

(२) परिभाषायां 'गि प्वादिरपि, अत एवाधिमन्द्रात क्र्यादिश्च' इत्युक्तं तेनैव जिनातीत्यादौ क्र्यादित्वात् ज्ञाभाव्य। स प्वादिर्ल्वादिश्च इत्युक्त्या जीन इत्यादौ ल्वादीत्वादिति सूत्रेण क्तस्य न। ज्यागिरित्यत्र स्वादित्वेनैवेष्टसिद्धौ कृ गृ ज्यानेति निविधानफले पुनर्ज्यापहणं क्तिस्थानजातस्य ने कदाचित् स्यानित्वस्थानङ्कीकारार्थं तेन ज्यानिरित्यत्र न पहस्पादोरित्यनेन जिरिति।

प्वादीनां संग्रहो यथा—"पूञ् पवने मोथे कञ् बिरे कञ् हिंसे लञ्चाच्छादने।

६। ज्ञाग बोधने (ज्ञा, क्या, प) ग—जानाति। "सन्दर्भशुद्धिं गिरां जानीते जयदेव एव" इत्यत्रानुपसर्गात् फलवत्कर्त्र्यात्मनेपदम्। "ततोऽनुजज्ञे गमनं सुतस्य" इत्यत्रानुशब्दस्योपसर्गप्रतिरूपकत्वेनानुपसर्गत्वात्। (शेषोदाहरणे कर्म्मणि प्रत्यय इत्यप्यन्ये)।

**ज्ञाक् म मारण आलोके निशाने तोषणे स्तुतौ।**
**ज्ञाक् प्रेरणे टाल लूनौ दा तु दाने डुदाञ्लि च॥**

६। ज्ञाक्म मारण आलोके निशाने तोषणे स्तुतौ (ज्ञा, चु, घटादि, प) क, म—ज्ञपयति, अज्ञपि अज्ञापि, ज्ञपं ज्ञपं, ज्ञापं ज्ञापं (ज्ञोमारोस्तु चेत्युक्तेः) आलोकोदर्शनमेरणम्। निशानं तीक्ष्णीकरणम्। तोषणं तुष्टीकरणम्। ज्ञपयति शत्रुं शूरोमारयतीत्यर्थः। (यज्ञे सञ्ज्ञापयत्यजानिति हलायुधः। ६८।

---

भूञगि कम्पे धृञगि धरणे मृगि वृगि स्नातौ ह्वमने। मृगिह धातु कथितोऽन्यां पृगिह रणे पूरणकाल्याम्। स्तृगिह हिंसे धृगिह ह्वयाः दृगि विदारे मृगिह नीत्याम्। भृगिह भर्त्ते जृहद्वये गृगिह शब्दे क्या जीर्णत्वे। री रेषगतौ ल्हगिह गत्यां लीगि ल्वीगि श्लेषणकाल्याम्। ब्लीगगिवरणे ल्वीगगि गत्यां भ्लीगगिधातु कथितो भयाम्। पञ्चाधिकविंशतिरिति गदिता' प्वादिगणे धातव इह विदिता'। (कविकल्पद्रुमे स्वदन्तगणपाठे मृधातुर्नास्ति किन्तु शृम्भृगि हिंसे इत्यनयोर्म्मध्यस्थाने शेषोदन्त्यादिर्वकारोपध तद्विहितोऽपीति केचिदित्युक्ते वेपाश्चिन्मते मृधातुरपि प्वादिरस्ति तन्मतमादायैव प्वादिगणस्य पञ्चविंशतिसंख्यत्वमिति सुधीभिर्भाव्यम्। केचित्तु पृधातुमपि प्वादिगणे पठन्ति तन्मतानुसारेण वा षड्‌विंशति-रित्यपि चिन्त्यम्।

पाणिनीयमते तु प्वादयो द्वाविंशति। तथाच—निष्ठातकारस्य नकारविधानप्रसङ्गे, ल्वादिभ्य। ८। २। ४४। इति सूत्रस्य वृत्तौ एकविंशतेर्लूञादिभ्य प्राग्वदित्युक्त भट्टोजीदीक्षितेन। क्र्यादिषु प्वादयो द्वाविंशति पठ्यन्ते इत्युक्तं तत्त्वबोधिन्यां ज्ञानेन्द्रेण।

चिनत्तीत्यर्थः ) चपयति कूर्म्मं कामिनी पिङ्गान् दर्शयतीत्यर्थः । चपयति खड्गं कर्म्मकारः शानयतीत्यर्थः । चपयति गुरुं शिष्यस्तोषयतीत्यर्थः । स्तुतिः केचिन्न मन्यते । चालोको ज्ञानप्रेरणमित्यनुन्यासरचितौ । अतएव कमदीश्वरोऽपि जानातेर्घटादित्वं विभाषया मन्यते । तेन ज्ञपयितुं बाधयितुमिच्छमाणो ज्ञीप्समान इति पाणिनीयरत्नौ ज्ञानप्रेरणेऽपि ज्ञसे सति ज्ञीप्समान इति प्रसिद्धम् । एवं, विज्ञप्तिरेषा मम जीवधन्यौ इत्यादिषु च विज्ञापनमेवार्थः ।

६ । ज्ञा क प्रेरणे ( ज्ञा, चु, प ) प्रेरणमिह नियोजनम् । क—ज्ञापयति भृत्यं स्वामी नियुङ्क्ते इत्यर्थः । ( आज्ञापय ज्ञातविशेष पुंसामिति कुमार सम्भवम् । ३ । ३ )

७ । दा ल लूनौ ( दा, अदा, प ) ल—दाति । लूनिश्छेदः । केचित्तु दा प लवने इति पठित्वा पित्त्वाह्रासंज्ञाभावे यगादौ दायते इत्यादि मन्यन्ते । अमते तु पित्त्वाभावाह्रासंज्ञाया दीयते इत्यादौव । ( दाति दारिद्र्यमर्थिनामिति हलायुधः । २४ )

७ । दा तु दाने ( दा, भ्वा, प ) दान दाने इति प्रसिद्धोऽयं, अस्यैव यच्छादेशः । यच्छति । ( दरिद्रान् भर कौन्तेय मा प्रयच्छेश्वरे धनमित्यादि ) ।

७ । डदाञ्जि च ( दा, ह्वा, उ ) डु—दत्त्रिमम् । ञ, लि—ददाति दत्ते । चकाराद्दाने ।

दरिद्रा चलु दुर्गत्यां द्रा ल कुत्से पलायने ।
डु धाञ्जि धारणे पुष्टौ दाने धाञ्यियुतौ ध्वनौ ॥

८ । दरिद्रा चलु दुर्गत्यां ( दरिद्रा, अदा, प ) दुर्गति-

रकिञ्चनीभावः। च, ल—उपर्य्युपरि पश्यन्तः सर्व्व एव दरिद्रति। (दरिद्रतीत्यत्र जक्षादित्वात् द्विकत्वे अन्तोऽदेरित्यनेन अदादेशः, स्वमते स्वपादेः प्रयोजनं नास्तीत्युक्तं प्राक्)।

९। द्राल स्वप्ने पलायने (द्रा, अदा, प) स्वप्नो निद्रा। निपूर्व्वक एव निद्रायामिति रमानाथः। ल—निद्राति। निद्रालुः। द्राति चौरः पलायते इत्यर्थः। (न निद्राति च सन्ध्ययोरिति हलायुधः। २५४)

१०। डुधाञलि धारणे पुष्टौ दाने (धा, ह्रा, उ) डुञिवित्मम्। ञ, लि—दधाति धत्ते। धारणं धरणं (धारणमित्यस्य आन्तत्वभ्रमनिराशार्थमिदं व्याख्यानम्) दाने—द्विपताविचितं तथाथवा इति किराते विचितं दत्तमित्यर्थः। (पुष्टौ-दधतुर्भुवनद्वयमिति रघौ। १। २६)

११। ध्माग्नियुतौ ध्वनौ (ध्मा, भ्वा, प) युतिरिह बाहुल्यान्न दीर्घः। अग्नियुतिरग्निसंयोगः। ध्वनिः शब्दोत्पत्तिहेतुभावः। धमति स्वर्णं वणिक् अग्निसंयुक्तं करोतीत्यर्थः। धमति शङ्खं जनः शब्दं करोतीत्यर्थः। अग्निफुत्कृतौ च, मुखेनैव धमेद्वह्निमिति।-(नाडीन्धमः स्वर्णकार इत्यमरः। शङ्खान् दध्मुः पृथक् पृथगित्यादि)।

प्सा ल भक्ते प्रा ल पूर्त्तौ पा पाने पा ल रक्षणे।
भा लप दीप्तौ मा ङ्लि शब्दे मा ल्च मानेऽथ मा ङ्य च॥

१२। प्साल भक्षे (प्सा, अदा, प) ल—प्साति। (मांसमप्सामौदिति भट्टिः। १५। ६)

१३। प्राल पूर्त्तौ (प्रा, अदा, प) ल—प्राति घटं जलेन लोकः। (पूर्त्तिः पूरणम्)।

१४। पा माने (पा, भ्वा, प) अस्यैव पिबादेशः, पिबति पयः पान्थः।

१४। पाल रक्षणे (पा, अदा, प) ल—पाति।

१५। भाल्प दीप्तौ (भा, अदा, प) ल—भाति। प—भा (भीपिपिचिन्तीत्यनेन पित्वात् डप्रत्ययः) (हिमाद्रिटङ्कादिव भान्ति यस्यामिति भट्टिः। १। ८)

१६। माङ्लि शब्दे (मा, ह्वा, आ) ङ, लि—मिमीते (शब्दायते दुन्दुभिरित्यर्थः। परन्तु माल्च माने इत्यत्र चकारेणास्यापि परिमाणार्थत्वमुक्तम्। तथाच—पुरःसखीनाममिमीत लोचने इति कुमारसम्भवम्। ५। १५)

१६। माल्च माने (मा, अदा, प) ल—माति भूमिं नलेन राजा। न माति मानिनो यस्य यशस्त्रिभुवनोदरे इति हलायुधः। ७८। (अयं धातुः परिमाणकरणार्थे सकर्मकः परिमितीभावार्थे चाकर्मकः। तथाच—ततो ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदइति माघः। १। २३)।

१६। अथ माङ्य च (मा, दिवा, आ) ङ, य—मायते। चकारात् माने।

म्नाभ्यासे याल् गतौ रालदाने लाल् च ग्रहेऽथ वाक्। सुखाभिगतिसेवासु स्नाद्दाल् गमनहिंसयोः॥

१७। म्नाभ्यासे (म्ना, भ्वा, प) अभ्यासः पौनःपुन्येनानुशीलनम्। मनति सन्ध्यां ब्राह्मणः (आम्नायते सम्यगभ्यस्यते

मुनिभिरसावित्याम्नायो वेद इत्याम्नायशब्दटीकाया भरतः। कचिदन्यार्थेऽपि। तथाच—त्वामामनन्ति प्रकृतिमिति कुमार-सम्भवम्। २। १३)।

१८। याल् गतौ (या, अदा, प) ल—याति।

१९। राल दाने (रा, अदा, प) ल—राति।

१९। लाल् च ग्रहे (ला, अदा, प) ल—लाति। चकारात् राल च (राधातोरपि ग्रहणार्थत्वमित्यर्थः) ग्रहो ग्रहणम्। (ताम्रालासीद्दियन्नतामिति भट्टिः। १५। ५३)

२०। अथ वाक् सुखाप्तिगतिसेवासु (वा, सु, प) क—वापयति। (सुखाप्तिरुपभोगः)।

२०। स्याहाल् गमनहिंसयोः (वा, अदा, प) ओद्याहि-रण्ययमित्येके। गमनमिह वायुकर्तृकमेव। ल—वाति वायुः (न पाति वायुस्तत्पार्श्वे तालवृन्तानिल.चिकमिति कुमार सम्भवम्। २। ३५) हिंसनं सूचनमिति चतुर्भुजः।

आल् खेदे थाल्म पाके ञिष्ठास्थाने प्यालग्रोधने।
ओहाक्लित्याग ओहाङ्लिगतावान्तास्त्रिरष्टधा॥

२१। आल् खेदे (आ, अदा, प) रेफयुक्तलाल्याहिः। ल—आति। (१)

२१। आल्म पाके (आ, अदा, घटा, प) रेफयुक्तलाल-व्यादिः। ल—अ ति। (याति श्रेष्ठं हविरभिमतं ओत्रियाणां गृहेष्विति हलायुधः। १९) म—अपयति।

---

(१) औ आपयति। तथाच "पाकादन्यत्र आपयति पार्श्वं भर्त्यं स्वामी।

२२। ञिष्ठा स्थाने ( स्था, भ्वा, प ) ञि—स्थितः अस्तीत्यर्थः। स्थानं गतिनिवृत्तिः। ( स्थिरीभाव इत्यपि ) तिष्ठति साधुधर्म्मे। पृष्ठतस्तिष्ठमान इति वीरचरिते प्रकाशार्थे आत्मनेपदविधानात् शानः। अथवा ताच्छील्ये शतुः शानः।

२३। ष्णाल शोधने ( स्ना, अदा, प ) मूर्द्धन्यादिरयं, ( वोपदेवोऽयं ) दन्त्यादिरिति केचित्। ल—स्नाति गङ्गायां धीरः। अनुपसर्गस्य णौ ज्वलह्वलेत्यादिना ह्रस्वो वा, स्नपयति स्नापयति। सोपसर्गस्य तु प्रस्नापयति।

२४। ओहाकॢ त्यागे ( हा, ह्वा, प ) ओहाक् त्यागे इति प्रसिद्धोऽयम्। अत्र हाक इति ग्रहणं सतास्यैव विषय', तेन हामागैवहाक इत्यादिसूत्रेणास्य हीयते इत्यादि। अन्यस्य हायते इत्यादि। ओ—हीनः। लि—जहाति। ( जहातु नैनं कथमर्थसिद्धिरिति भारविः। ३। १४। हातव्योऽयमसार एव विरसः संसार इत्यादिक सर्व्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मन इति शान्तिशतकम् )। अकर्म्मकश्चायं। यथा स्वार्थाद्धीनः, एवं जहाति अपैति स्वार्थो यस्मादिति जनस्वार्थो हतिः।

२४। ओहाङ् गतौ ( हा, ह्वा, आ ) ओ—हानः। ङ, लि—जिहीते। ( अपालिहीया न जहीतमं यदीति माघ'। १। ३७। धातूनामनेकार्थत्वादुत्थानार्थेऽपि, तथाच—भौमिर्दिदर्भिभुवमुज्जिहान इति भट्टिः। ३। ४७ )।

आन्ताभिरस्था।

आन्ताः आकारान्ता आत्मस्थिरस्था चतुर्विंशतिः।

---

अदेवादीनामदन्तत्व मतो वर्णन इति अनुर्वे। गोविन्दभट्टस्तु [illegible] भिर्षं ह्यदन्तचत्वारि [illegible]॥

( पूर्व्ववत् तुल्यावयवाना धातूनामेकरूपत्वे सख्यासङ्गतिरित्यनु-सन्धेयम् ) ।

---

## ऋकारान्तवर्गः ।

ऋ ऋ ल् गतावधी ल् स्मृत्यामधीङ्ल्ध्ययने किलि ।
ज्ञाने चि नृग प हिंसायां चि जयैश्वर्य्ययोः चिग ।
वासगत्योश्चिरिर्नि हिंसे, चिनृचिञ्चित्यान्तुचिक्रमिच ।

१ । ऋ गतौ ( ऋ, भ्वा, प ) ऋयति । ( ऋयमुदयति मुद्रा-भञ्जनः पद्मिनीनामित्यादि ) ।

१ । ऋल् गतौ ( ऋ, ह्वा, प ) इ—यर्ति । पृथक्पाठ-सामर्थ्यात् पूर्व्वो न ह्वित् । (१) शेषस्तु ऋ न गताविति प्रसिद्धः । चिनोऽध्यर्णावित्यादिषु ग्रहणमस्यैव । ( उदेति सविता ताम्रस्ताम्र एवास्तमेति च इति साहित्यदर्पणम् । चतुरस्तोयनिधीनियायत इति भारविः । २ । २३ । ततोऽभ्यगाद्वाधिसुत. क्षितीन्द्रमिति भट्टि ) । १ । १७ ) ।

१ । अधी ल् स्मृत्या ( अधि-इ, ह्वा, प ) अधिइयर्त्ति । अधिग्रहणमन्यपूर्व्वस्य केवलस्य च प्रयोगनिषेधार्थम् । एवं सर्व्वत्र । इ—अध्येति तव लक्ष्मण ( तव त्वामित्यर्थः स्मृत्यर्थदयेशा इति कर्म्मणि षष्ठीविधानात् ) इक स्मरणे इति प्रसिद्धोऽयं । इत्यादिकं इत्यतास्यैव ग्रहणम् ।

---

(१) व्यत्ययभावय—परोऽनुबन्ध पूर्व्वाणिहाद्भ्यर्दध्वद्भेद पूर्व्वार्थेन ऋधातोरपि ह्वकारानुबन्धित्व भवितुमर्हति, किन्तु ह्वस्यत्वादि इड्भावात् देव न तथात्वमिति ।

१। अधी ङ् ल् अध्ययने (अधि—इ, अदा, आ) अध्ययनमर्थतः शब्दतश्च गुरुतो ग्रहणात्। ङ, ल—वेदमधीते विप्रः। (सोऽध्यैष्ट वेदानिति भट्टिः। १। २)।

२। किं लि ज्ञाने (कि, ह्वा, प) र—वैदिकः। लि—चिकेति।

३। चि नगप हिंसायां (चि, स्वा, क्र्या, प) न—चिणोति। ग—चिणाति। (चिणाति दुरितं हृष्टा इति हलायुधः। ११०) प—चिया। आयुः परं चीयते इति तु कर्मकर्त्तरि साध्यम्।

३। चि क्षयैश्वर्य्ययोः (चि, भ्वा, प) चयति पापम्। (१)।

३। चि श वासगत्योः (चि, तुदा, प) श—चियति। (चियन्ति निवसन्त्यस्यामिति चितिः, चि श वासगत्योराधारे क्तिरित्यमरटीकायां भरतः। यशः चियति रोदस्योर्यस्य धर्म्मरताक्मन इति हलायुधः। ११२)।

४। चिरिँ हिंसे (चिरि, स्वा, प) रेफोपधः। र—वैदिकः। न—चिरिणोति।

---

(१) चयति व्याधिरौषधात्। चयति पापं गङ्गा इति तु अन्तर्भूतण्यर्थत्वादिति कामधेनुः।

ऐश्वर्य्यं प्रभुभाव आयत्तीकरणमिति यावत्, तथाच—आसीन्महीक्षितामाद्य इत्यस्य टीकायां महीक्षिदितिशब्दव्युत्पादनाय महीं चयन्ति ईशते इति महीक्षित चितीश्वराः, चिधातोरैश्वर्य्यार्थात् क्विप् तुगागमश्चेति मल्लिनाथ। तत्र चियन्तीति लिपिकरप्रमादपाठ। सौदादिकस्य चिधातोरैश्वर्य्यार्थाबोधकत्वात्। ऐश्वर्य्यमद्गसाधीनकरणरूपोऽर्थस्तु ईशधातो व्याख्याने दुर्गादासेन लिखित इति।

५। चि ञ ञ चित्यां (चि, स्वा, उ) चितिश्चयनं राशीकरणमिति यावत्। न, ञ—चिनोति चिनुते। (फलान्यवाचिनोत्पुष्पाणीति मुग्धबोधम्। अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषत इति भारविः। २। १९)।

५। चि ञ चित्यां (चि, भ्वा, उ) ञ—चयति चयते धनं लोकः।

५। चि क्ञि च (चि, चु, प) क, ञि—चययति चाययति। लभते तु चपयति चापयतीत्यपि। (१) चकारात् चित्याम्।

## जिरिर्न हिंसे ज्यभिभवे जि जये चाथ श्रिञ् श्रितौ।

६। जिरिर्न हिंसे (जिरि, स्वा, प) रेफोपधः। र—वैदिकः। न—जिरिणोति।

७। ज्यभिभवे (ज्रि, भ्वा, प) रेफोपधः। ज्रयति शत्रुं बली।

८। जि जये च (जि, भ्वा, प) जय उत्कर्षः लोकारश्च। उत्कर्षेऽकर्मकः, यथा—राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलय इत्यादि। लोकारे—मखैरसंख्यैरजयत् सुरालयमिति कादम्बरी। चकारादभिभवे च, जयति शत्रुं बली। अनभिधाना-

---

(१) परिभाषायां 'मितां' इत्यनेन मिकारानुबन्धधातूनां विभाषयैव घटादित्वमुक्तं तेनैव ह्रस्वविकल्पो बोध्यः। प्रक्रियारत्नमतानुसारेण नित्यघटादित्वात् इकारस्याकारपक्षेऽपि चपयतीत्येवमेव। एते धातवो विकल्पेन घटादयो भवन्ति। यथा—चनॖमि हिंसे गतौ, चिक्ॖमि चयने, फणमिण्गतौ। ध्वनॖमि शब्दे, स्तनस्तनॖमि रवे, स्वनमि तंसने। त्रपूष मिङ लज्जायां, यमक्ॖमि परिवेशने। तदभावे, दलॖमिभेदे, स्खलॖमि स्खलने चये। मिञ्च्यसु निवासे स्वादयो मत मिडन्तौ। इति मयोदयाख्याता धातवो वा घटादय इति।

दृश्यात्तवन्तयोः प्रयोगाभावः किन्तु तयोः स्थाने तिवन्तौ इति। किञ्च तुपःस्थाने तातङ् दृश्यते, यथा—भावगम्यलयः कोऽपि जयताद्वाणगोचर इत्यादि । (१) ।

९ । अथ धि श् धृतौ ( धि, तुदा, प ) श—धियति ।

पि श् गतौ डु मि ञन् क्षेपे रि श् गतौ श्रि ञ सेवने।
शि नञ् निशाने द्वायोश्वीर्गतिहृद्ध्योः श्मि ङ स्मिते ॥

१० । पि श् गतौ ( पि, तुदा, प ) श—पियति ।

११ । डु मि ञन् क्षेपे ( मि, स्वा, उ ) डु—( नानाज्ञातमिति वाक्ये ) मित्रिमं । ञ, न—मिनोति मिनुते ।

१२ । रि श् गतौ (रि, तुदा, प ) रेफादिः । श—रियति ।

१३ । श्रि ञ सेवने ( श्रि, भ्वा, उ ) ञ—श्रयति श्रयते । ( शैलं न्यशिश्रियद्धेति भट्टिः । ६ । १७ ) ।

१४ । शि नञ् निशाने ( शि, स्वा, उ ) निशानमिति श्यतेरूपं, शानजतेजे इत्यस्य नित्यमनन्तत्वात् । अनेकार्थत्वान्निशानमिह तीक्ष्णीकरणम् । न, ञ—शिनोति शिनुते अस्त्रं कर्म्मकारः । ( निशिनोत्यशिपुत्रिकामिति हलायुधः । ७६ ) ।

१५ । टु ऐ श्वो श्वि इर् गतिहृद्ध्योः ( श्वि, भ्वा, प ) तालव्यादिः । टु—श्वयथुः । ऐ—शूयात् । ओ—शूनः । इर्—अश्वत् अश्वयीत् । ( रुदतोऽशिश्वियच्चुरास्यं हेतोश्वशाश्वयीदिति भट्टिः । ६ । १८ ) ।

१६ । श्मि ङ स्मिते ( श्मि, भ्वा, आ ) मूर्द्धन्यादिः ।

(१) एवमेव काव्यकामधेनौ ।

(षोपदेशोऽयं, सिष्मिये इत्यादौ षत्वार्थः षोपदेशपाठः।) स्मितमीषद्धास्यं। ङ—स्मयते वधूः। (विपूर्व्वको विस्मयार्थः—रामं विस्मापयेत क इति भट्टिः। ५। ५८) विस्मापयन् विस्मयनीयकीर्त्तिमिति रघौ विस्मापनं विस्मापः (विस्मयोत्पादनमित्यर्थः) पश्चात् तं करोतीति णो शत्रन्तम्। (१)।

पिन् गञ् बन्धे स्मिकाङनादरे ह्रिन् बर्द्धने गतौ।
एकोनविंशतिरमी इकारान्तास्तु धातवः॥

१७। षि न् गञ् बन्धे (पि, स्रा, क्रा, ङ) बद्धयादिः। (षोपदेशोऽयं) न, ञ—सिनोति सिनुते। ग, ञ—सिनाति सिनीते।

१८। स्मि काङनादरे (स्मि, चु, क्रा) स्त्र्यादिः। क, ङ—स्मापयते।

१९। हि न् बर्द्धने गतौ (हि, स्रा, प) गतिरिहान्तर्भूतण्यर्थत्वाद्गतिप्रेरणम्। न—प्रहिणु स्वसुतमिति भट्टिः। १। २१। बर्द्धने विरलप्रयोगः।

(अमी इकारान्ता धातव एकोनविंशतिरेकोनविंशतिसंख्यया संख्येया इत्यर्थः)।

---

(१) काव्यकामधेनावप्येवम्। अत्रेदमनुमीयते यदस्य श्लोकस्य प्राचीनपाठ एवमेवासीत्। अधुना तु विस्मापयन् विस्मितमात्मवृत्ताविल्येवं समीचीनपाठ दृश्यते। विस्मयनीयकीर्त्तिमिति प्राक्तनपाठे विस्मयविषयीभूता कीर्त्तिरित्यर्थकत्वे विषयताख्यफलमादाय सकर्म्मकत्वमित्यनुसन्धेयम्।

—

## ईकारान्तवर्गः ।

**ई ल कान्ति-गति-व्याप्ति-क्षेप-प्रजन-खादने ।**
**ई ङ् य गत्यां क्षी ञ हिंसे ङ् क्री ञग् द्रव्यपर्य्यये ॥**

१ । ई ल कान्ति गति व्याप्ति क्षेप प्रजन खादने ( ई, अदा, प ) कान्तिरिच्छा, प्रजनो गर्भग्रहणम् । ल—एति गौर्गर्भं गृह्णातीत्यर्थः । नहि तरधिकदीते दिक्परार्धीनवृत्तिरिति गत्यन्तता-नित्यत्वादात्मनेपदम् । धातुरयं कैश्चिन्नमन्यते ।

१ । ई ङ् य गत्यां ( ई, दिवा, आ ) ङ, य—ईयते । भोदीयन्ते च विहिप इति हलायुधः । २३ । ( रिपुतिमिर-मुदस्योदीयमानं दिनादाविति भारविः । १ । ४६ ) ।

२ । क्षी ञ हिंसे ( क्षी, भ्वा, उ ) ञ—क्षयति क्षयते ।

३ । ङ् क्री ञग् द्रव्यपर्य्यये ( क्री, क्रया, उ ) पर्य्ययः परि-वर्त्तः । ङु—क्रीत्रिमम् । ञ, ग—क्रीणाति क्रीणीते धान्यं धनेन लोकः । ( हत्वा शत्रुप्रहारश्च तेषां क्रीणाति यः श्रियमिति हलायुधः । ११७ ) ।

**ज्री गि कि ज्यान श्रो डी ङ् य गतौ डीङ् च नभोगतौ ।**

४ । ज्री गि कि ज्याने ( ज्री, क्रया, चु, भ्वा, प ) गि—ज्रिणाति, ज्रीणः ज्रीणिः । कि—ज्राययति ज्रयति । गिकाभ्यामेव प्राप्तिकचुरादित्वे सिद्धे किपाठो भ्वादित्वार्थः । ज्यानं गतमङ्गवयोभावः ।

५। ओ डी ङ् य गतौ (डी, दिवा, आ) ओ—डीनः। ङ, य—डीयते।

५। डी ङ् च नभोगतौ (डी, भ्वा, आ) ङ—डयते पक्षी। अस्यापि निष्ठाया डीन इति कातन्त्राः। धातुपारायणिकास्तु इम्निषेधे (इमनिषेधस्थले) ओदनुबन्धडीङोग्रहणादिमि पक्षाद्दुगुणे डयित इत्याहुः। गोयीचन्द्रोऽपि डयितः डयितवानित्युदाजहार। स्वमते तु डीन इत्येव। चकारात् ओडीङ्य च (नभोगत्यर्थक इत्यर्थः)।

णी ञ प्रापणे ओ दी ङ्य क्षये दीधीङ् ज्लु देवने।
दीप्तावेवीङ्य आराधे नादरे प्रो ञ तर्पणे॥

६। णी ञ प्रापणे (णी, भ्वा उ) णोपदेशपाठो नादित्वेन प्राग्वन्न इति पाठार्थः। प्रणयति। एवं सर्वत्र। प्रापणमिह अन्तस्य रूपम्। तथाच—गृणाति लम्भयति च वहत्यपि नयत्यम् इति क्रियानिर्घण्टः। ञ—नयति नयते गा वनं गोपः प्रापयतीत्यर्थः।

७। ओ दीङ्य क्षये (दी, दिवा, आ) ओ—दीनः। ङ, य—दीयते। (दीयन्ते प्रत्यहं यस्य दुरितानि तपस्विन इति हलायुधः। ८४)।

८। दीधीङ् ज्लु देवने दीप्तौ (दीधी, अदा, आ) दीर्घभ्यः। र—वैदिकः। घ—अदीधयुः, बहुलं ब्रह्मणीति परस्मैपदे अनुभूसिद्धेरिति आन उस्, गुणस्तस्यामिति गुणः (१)।

---

(१) ननु दीधीवेव्योर्नेतुरित्यनेन गुणनिषेधे कथमत्र गुण इति चेत् सत्यं दीधीवेव्योर्नेणुरित्यनेन गुणनिमित्ते (सति) सामान्येन प्राप्तो गुण एव निषिध्यते।

९। घो धीङ्य आराधेऽनादरे (धी, दिवा, आ) अनादर इति कातन्त्रादौ। घो—धीनः। ङ, य—धीयते खलं लोकः।

१०। प्री ञ तर्पणे (प्री, भ्वा, उ) ञ—प्रयति प्रयते। (तर्पणं सन्तुष्टीकरणं, तथाच—प्रयते च भृत्यानिति हलायुधः। ७)।

प्रीक्च प्री गञ कान्तौ च प्रीङ्य प्रीतौ च पीङ्यतु।
पाने ञि भी लि भीत्यां भी ग गिष्वत्यान्ञ मीङ्यञो।
मी ञग वधे मी कि गत्यां मत्यां री गि रवे गतौ ॥

१०। प्रीक् च (प्री, चु, प) चकारात् तर्पणे। क—यं प्राययन्ति कविसूक्तिरसायनानीति हलायुधः। ७। प्रीणयत्य-पीति केचित् (१)।

१०। प्री गञ कान्तौ च (प्री, क्र्या, उ) ग, ञ—प्रीणाति प्रीणीते। चकारात् तर्पणे। तर्पणमिह प्रीतीभावः प्रीतीकर-णञ्च। प्रभुः प्रीणातु विश्वभुगित्यादि। प्रीणाति बान्धवजना-निति हलायुधः। ७।

१०। प्री ङ य प्रीतौ च (प्री, दिवा, आ) प्रीतिरिह प्रीती-भावः। तथाच—यः प्रीयते प्रणयिष्विति हलायुधः। ७। (प्रकाममप्रीयत यज्वना प्रिय इति माघः। १। १७) चकारात् कान्तौ च।

११। पी ङ्यतु पाने (पी, दिवा, आ) ङ, य—पीयते।

---

पुरुसख्यामित्यनेन व्यञ स्थाने जातत्वादगुणे ऽपि चाप्राप्तो गुणो विधीयते इति न विरोध इति कामधेनु।

(१) प्रीधातो स्वार्थे ञौ कृते प्रीधूञोर्नुग् वेति नकि प्रीणयति पक्षे प्राययतीति केषाञ्चिन्मतमिति भाव )।

१२। ञि भी ङि भीत्यां ( भी, ह्वा, प ) ञि—भीतोऽस्ति। ङि—बिभेति।

१३। भ्रीगगि भयाद्य ( भ्री, क्रा, प ) ( श्रुतिः पोषणं ) ग—भ्रीणाति भ्रीतः, भ्रीतिः। गि—भ्रिणाति, भ्रीणः, भ्रीणिः। गित्वेनैव क्यादित्वसिद्धौ ग करणं ष्वादित्वविकल्पार्थम्। चकारात् भीत्याद्य।

१४। मीङ य घो वधे } (मी, दिवा, था) मी, क्रा, उ )
१४। मीञग् वधे } ङ, य—मीयते। घो—मीनः

( मीयते हिंस्यते इति मीन इति मीनशब्दव्युत्पत्तौ भरतः ) ञ ग—मीनाति मीनीते। धातुभेदे ङञोरसङ्कर इति वोपदेवः। एवं सर्व्वत्र। (१)

---

(१) मी ङ य, मी ञ ग इत्युभयोर्यपि गुणसाधनयोग्यप्रत्यये च परे मिम्योर्यद्वणो ङाववणि मियस्तु वेति सूत्रेण आदेशे कर्त्तव्ये मतभेदो दृश्यते तथाच मुग्धबोधटीकाकारेषु दुर्गादासः—"डुमि ञ न क्षेपे, मी ङ य घो, मी ञ ग् वधे, मी कि गत्यां बिशेषानभिधानात् एषां यपि गुणसाधनयोग्यप्रत्यये च डा स्या"दित्याह। एतन्मते मी ङ य, मी ञ ग इति द्वाभ्यामेव यपि प्रमाय, घ्यां यथाक्रमं अमास्त अमासीत्, णौ मापयतीत्येवं पदानि भविष्यन्तीति।

गङ्गाधरस्तु "अत्र ■ दिवादिमीङो न ग्रहणं तदनन्तरपाठकरणात्। अतएव दिवादेर्नेति पाणिनीया"। केषाञ्चिन्मते तस्यापि ग्रहण"मिति व्याचख्यौ। एतन्मते मी ङ य इत्यस्मात् यपि प्रमीय, घ्यां अमेष्ट, णौ माययतीति।

कार्त्तिकेयसिद्धान्तेन तु "डुमि ञ न क्षेपे इति स्वादेः मी ङ य घो मीञग वधे इत्यनयोर्दिवादिक्र्यादयोश डाऽऽस्या"दित्येवं व्याख्यातम्। तर्कवागीशेनाप्य मौनमवलम्बितम्। भरतमल्लिकेन स्वकृतद्रुतबोधव्याकरणस्य स्वकृतटीकायां "मिम्योरिति डुमि ञ प्रक्षेपणे स्वादिः मीञ हिंसायां क्र्यादिः अनयोर्ग्रहणं मतु मीङ वधे इत्यस्य दिवादेः, मीनाति मिनोति दीडामिति पाणिनीयानां निर्देशात्, मिमीओर्मेति संक्षिप्तसारस्यस्य अनुबन्धवतो निर्देशात् न मीङ-

१४। मी कि गत्यां मत्या (मी, चु, भ्वा, प) (मतिर्बोधः) कि—माययति (१) मयति। (न चानुमाययत्यन्यस्त्व यत्त्वेमसि स्थितमिति हलायुधः। १४३।)

१५। री गि रवे गतौ। (री, क्र्या, प) गि—रिणाति, रीणः, रीणिः। रवः शब्दः। तथाच कातन्त्रादौ रीगतिरेषणयोः। रेषणं वृकध्वनिरिति रमानाथः। रिणाति रेषते वृक इति शब्दार्थे भट्टमल्लः।

**ओ रीङ्य स्रवणे, ली कि द्रावणे, लीङ्य ओ श्लिषि।**
**लीली गि च व्ली ग्गि गत्यां वेवी द्लुङ् वील ईलवत्॥**

१५। ओ रीङ् य स्रवणे। (री, दिवा, आ) ओ—रीणः। ङ, य—रीयते पयः।

१६। ली कि द्रावणे। (ली, चु, भ्वा, प) द्रावणं द्रवीकरणम्। कि—लाययति लयति। (विलयत्यबलानाञ्च हृदयं मदनव्यथेति हलायुधः। १८६) विभ्योर्वृणो केति लापयति लौहमग्नौ कर्मकारः। स्नेहद्रवे तु लास्योर्ल्लनाविति अग्नौ घृतमग्नौ लीनयतीत्यपि।

---

हिंसायामित्यस्य पदद्वयमिति गोयीचन्द्रेण व्याख्यातत्वात्। तेन दिवादिभीङो ज्ञेता प्रमीय। किन्तु बोपदेवादीनां मतमाश्रितो बोपदेवं, टीकाकारा अपि दिवादिभीङोऽप्ययं विधिरिति व्याचक्षते" इत्युक्तम्।

परिभाषायां "न परेपाद मध्यम" इत्युक्तेरस्य धातुद्वयमध्यवर्त्ती बोदद्वयः पृथक्कोव। तेन मीञगुणे इत्यपात् ...इति।

(१) सर्वस्वैशगन्दंपुस्तकेषु मापयतीति पाठो दृश्यते। किन्तु दुर्गादासमते मिथ्योर्वृणो लापयतीति सूत्रे मीञ गन्तव्यमित्यादि ... मापयतीति पाठोऽभिमतः।

१६। लीङ् य श्वो श्लिषि। ( ली, दिवा, श्रा ) ( श्लिषीति श्लिषधातोर्भावे क्विपि ङौ रूपम्, श्लेषोऽत्र परस्परसंयोगः ) ङ, य—लीयते चन्द्रः सूर्ये। श्वो—लीनः। ( नेन्द्रियार्थेषु लीयते इति हलायुधः। २६०। उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथा इत्युद्भटः, दिवाकरा द्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारमिति कालिदासः )।

१६। ली गि च। } ( ली, क्रा, प ) (ल्वी, क्रा, प)
१७। ल्वी गि च। } द्वावन्तःस्थतृतीयादी। द्वितीयस्तु वोयवर्गाद्योपधः। चकारात् श्लिषि। ( श्लेषोऽत्र संयोगः, धातूनामनेकार्थत्वादयं प्राप्त्यर्थश्च ) गि—लिनाति बाला लावण्यं प्राप्नोतीत्यर्थः। कर्म्माविवक्षायान्तु लिनाति जलधौ नदी। ( लिनाति धर्म्म एवासाविति हलायुधः। २६० ) लीनः, लीनिः। गि—ल्विनाति ल्वीनः ल्वीनिः। ( अयं धातुः ) अन्तःस्थाद्योपध इति रमानाथः। ल्विनाति।

१८। ल्वी ग्गि गत्या। ( ल्वी, क्रा, प ) वकारोपधः। ग—ल्वीनाति, ल्वीन, ल्वीतिः। गि—ल्विनाति, ल्वीन, ल्वीनिः। गिनैव क्रादित्वसिद्धौ गकरणं ल्वादित्वविकल्पार्थम्।

१९। वेवी र् घ् लु ङ् ईलवत् ( वेवी, अदा, आ ) ( ईलवदित्यनेन ईधातुवदयमपि कान्ति गति व्याप्ति-क्षेप-प्रजन-खादनार्थक इति सूचितम् ) र—वैदिक.। घ—अवेवयुः बङ्गलं ब्रह्मपीति परस्मैपदे अतुसुसिद्धेरिति अन उस, गुरुस्वरान्मिति गुणः। लु, ङ—वेवीते।

२०। वील ईलवत्। ( वी, अदा, प ) ल—वेति। ईलवत्

कान्तिगतिव्याप्तिक्षेप प्रजनखादने। (वियन्ति वीरस्तनानं इन्द्रो यस्य कुलाङ्गना इति हलायुधः। १८८)।

**श्री ग्नि हत्यां श्रीङ्‌ य श्यो च व्लीगि गत्याञ्च शीङ् जि।**
**स्वप्ने श्री ञग् पचि ह्री लि लज्जेऽमी पञ्चविंशतिः॥**

२१। श्री गृगि हत्यां। (श्री, क्या, प) रेफोपधः। (इतिवैरघ्नं) ग—यो श्रीणाति जयश्रियं रणमुखे इति हलायुधः। ११। श्रीतः श्रीतिः। गि—श्रिणाति श्रीणाति। श्रीणः श्रीणिः। गित्वैव क्रयादित्वे सिद्धे गकरणं प्वादित्वविकल्पार्थम्।

२१। श्री ङ्‌ य श्यो च। (श्री, दिवा, आ) रेफोपधः। ङ, य—श्रीयते। श्यो—श्रीणः। चकारात् हत्याम्। (यो यशो श्रीयते इति हलायुधः। ११)।

२२। व्लीगि गत्याञ्च। (व्ली, क्या, प) अन्तःस्थतृतीयोपधः। गि—व्लिनाति। व्लीनः व्लीनिः। चकारात् हत्याञ्च।

२३। शीङल जि स्वप्ने। (शी, अदा, आ) ल, ङ—शेते। (शेरते तेऽभि मारुतमिति माघः २।४२) जि—शयितोऽसि (श्लीश्लार्थशीङ्शीलादेः सतीति वर्त्तमाने क्तः) सण्डपे शयामीति गणकृतानित्यतया शपो लुगभावे चेति रमानाथः। वस्तुतस्तु शेते शयः पचादित्वादन् पश्चात् शय इवाचरामीति क्वौ साध्यम्।

२४। श्री ञग् पचि। (श्री, क्या, उ) तालव्यादिः। ञ, ग—श्रीणाति श्रीणीते। पचि पाके। (श्रीणात्यन्यः सुकविहृदयान् चीरखण्डप्रकारानिति हलायुधः। १८। तत्र श्रीणाति पचतीत्यर्थः)।

२५ । क्ली लि लज्जे । ( क्ली, ह्वा, प ) लि—जिह्रेति नीच-सङ्गेभ्य इति हलायुधः । ( न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्जित इति भट्टिः ६।२ ) ।

अमी पञ्चविंशतिः ।

अमी (ईकारान्ताः पञ्चविंशतिः । संख्यासङ्गतिस्तु पूर्व्वोक्तरीत्यैव) ।

---

## उकारान्तवर्गः ।

उ ङ शब्दे ऊर्णु ञ्लाच्छादने टु क्षुल क्षुते ।
कुङ् शब्दे कुल्च् कुशि ङार्त्तस्वरे क्ष्णुल तेजने ॥

१ । उ ङ शब्दे । ( उ, भ्वा, आ ) ङ—अवते गौः ।

२ । ऊर्णु ञ् ल आच्छादने ( ऊर्णु, अदा, उ ) दीर्घादि-र्दन्त्योपधः, रेफयोगान्मूर्द्धन्यः । तेन ऊर्णुनाव इत्यादौ निमित्ता-भावात् क्षलधातोर्णत्वाभावः । ल, ञ—ऊर्णोति ऊर्णौति ऊर्णुते दिवं मेघः । ( प्रोर्णुवन्तं दिशो बाणैरिति भट्टिः ५।५६ ) ।

३ । टु क्षुल क्षुते । ( क्षु, अदा, प ) क्षुतं हाचौति ख्यातम् । टु—क्षवथुः । ल—क्षौति कपी । क्षतकं कामिनि चुक्षुवे ब्रुगाक्षा इति माघः । ( जीवेति क्षुवतो ब्रूयादिति श्रुतिः ) ।

४ । कुङ् शब्दे । (कु, भ्वा, आ) ङ—कवते पक्षी । (यन्नाण्डले जनपदः कवते च सूक्तमिति हलायुधः । २० । धातूनामनेकार्थ-त्वादुच्चारणार्थे सकर्म्मकोऽयं, कवते उच्चारयति, सूक्तं वेदोक्त-स्तोत्रमन्त्रादि ) ।

४ । कुल्च् । (कु, अदा, प) ल—कौति । चकारात् शब्दे ।

४ । कु शब्दे आर्त्तस्वरे । ( कु, तुदा, आ ) षि, ङ—कुवते (तनि) अकुत (कुटादित्वाद्गुणाभावे सिलोपः) ( श्रोकान्नकौति कुवते च भयाच्च कश्चिदित्युभयत्र हलायुधः । २० । कूराश्च-क्रुपत द्विजा इति भट्टिः । ५ । २६ )।

५ । क्ष्णु स तेजने । (क्ष्णु, अदा, प) मूर्द्धन्यणोपध, क्षादिः । ( तेजनं तीक्ष्णीकरणं ) स—क्ष्णौति खड्गं कर्म्मकारः ।

**खुङ् ध्वनौ गुषि श्रो विष्ठोत्सर्गे गु घु ङ, ङ ध्वनौ ।**
**च्युक् हासे सहने च्युङ् ज्युङ् जुङ् गत्यां जु रंहसि ॥**

६ । खुङ् ध्वनौ । ( खु, भ्वा, आ ) ङ—खवते ।

७ । गु षि श्रो विष्ठोत्सर्गे । ( गु, तुदा, प ) षि—गुवति, अगुवीत् । ओ—गूनः ( दुग्वोर्दीर्घश्च )।

७ । गु ङ ध्वनौ । ( गु, भ्वा, आ ) ङ—गवते ।

८ । घु ङ ध्वनौ । ( घु, भ्वा, आ ) ङ—घवते ।

९ । ङु ङ ध्वनौ । ( ङु, भ्वा, आ ) ङ—ङवते ।

१० । च्युक् हासे सहने । ( च्यु, चु, प ) एतदाद्याश्चत्वारोऽन्तःस्थाद्योपधाः । क—च्यावयति ।

१० । च्युङ गत्यां । ( च्यु, भ्वा, आ ) ङ—च्यवते । अच्योष्ट सत्वान्नृपतिश्चुताश इति भट्टिः । ३ । २० )।

११ । छ्युङ गत्यां । ( छ्यु, भ्वा, आ ) ङ—छ्यवते ।

१२ । ज्युङ गत्यां । ( ज्यु, भ्वा, आ ) ङ—ज्यवते ।

१३ । जुङ गत्यां । ( जु, भ्वा, आ ) ङ—जवते ।

१३ । जु रंहसि । ( जु, भ्वा, प ) रंहो वेगगतिः । जवति घोटक । ( स्फुटसरोजवना जवना नदीरिति भारवियमकम् )।

**णु ल् स्तुतौ तु ल् वृत्तिहिंसापूर्त्तिषु द्रु स्रुतौ गतौ ।**
**द्रुन् दु द्वोनुपतापे दु गतौ द्यु त्वभिसर्पणे ॥**

१४। णु ल् स्तुतौ। (णु, अदा, प) ल—नौति। (तव नौमि सरस्वति पादयुगमिति। शिवविरिञ्चिनुतं शरण्य-मित्यादि)।

१५। तुल् वृत्तिहिंसापूर्त्तिषु। (तु, अदा, प) (वृत्तिर्जीविका, पूर्त्तिः पूरणं) ल—तौति तवीति।

१६। द्रु स्रुतौ गतौ। (द्रु, भ्वा, प) द्रवति (नेमस्तुमिति) दुद्रुव। स्रुतिः क्षरणं। (नदीं द्रु प्रत्यदुद्रुवदिति भट्टिः। ६। १७। विपूर्व्वकः पलायनार्थस्तथाच—नलिनीं क्षतसेतुबन्धनो जलसङ्घात इवासि विद्रुत इति कुमारसम्भवम्। ४। ६)।

१६। द्रुन् उपतापे। (द्रु, स्वा, प) र—वैदिकः। न—द्रुणोति। (द्रुणोति द्रोणवद्युद्धे शरजालेन यो रिपूनिति हला-युधः २४०।) (१)।

१७। टुद्वोनुपतापे। (दु, स्वा, प) (टु, ओ, नु एते अनु-बन्धाः) टु—दवथुः, ओ—दूनः, नु—दुनोति। उपताप इह उपतप्तीभाव उपतप्तीकरणञ्च। (आद्येऽकर्म्मकः) मन्मथेन दुनोमीति जयदेवः। (द्वितीये सकर्म्मकः) वर्षाप्रकर्षे क्षति

---

(१) कातन्त्रमते स्वादिगणे तिक तिग षघ ऋच्च क्षवि चिरि जिरि दाश दृ जिघांसायामिति पाठः। तत्र कातन्त्रधातुवृत्तिकृता रमानाथेन, दृणोति दृः दृम इति मैत्रेयभट्टमल्लप्रभृतयः। कविकल्पद्रुमे ऋच्चप्रभृतयश्छान्दसा इत्येके इत्युक्तं। तदस्य छान्दसत्वं न सर्व्वसम्मतमित्यतएव हलायुधेन लौकिकवाक्येऽप्ययं प्रयुक्त इति मन्यामहे।

कर्णिकारं दुनोति निर्गन्धतया स्म चेत इति कालिदासः। (न दुनोति परं वाचेति हलायुधः २५६)।

१७। द्रु गतौ। (द्रु, भ्वा, प) द्रवति।

१८। द्यु अभिसर्पणे (द्यु, अदा, प) अभिसर्पणमाभिमुख्येन गमनं। अ—द्यौति सिंहो मृगानिव।

**धुञ्न कम्पे जि ध्रु क्षि ध्रु स्थैर्य्ये ध्रुस्रुङ् च सर्पणे।**
**युल् मिश्रणेऽमिश्रणे युञ् ग बन्धे युङ्क निन्दने॥**

१९। धुञ्न कम्पे (धु, स्वा, उ) अ, न—धुनोति धुनुते। कम्प इह अदन्तस्य रूपं। धुनोत्यशोकं वायुरिति हलायुधः। ८।

२०। जि ध्रु क्षि स्थैर्य्ये } (ध्रु, तुदा, प) (ध्रु, भ्वा, प)
२०। ध्रु स्थैर्य्ये } (स्थैर्य्यं स्थिरीभावः) द्वौ रेफोपधौ। आद्यो दीर्घान्त इति कश्चित् (१)। जि—ध्रुतोऽस्मि। क्षि—ध्रुवति, अध्रुवीत्। (भ्वादित्वात्) ध्रवति शैलः। (ध्रुव औत्तानपादिः स्यादित्यमरोक्त ध्रुवशब्दव्युत्पत्तौ ध्रु स्थैर्य्ये क इति तट्टीकाकारः। तं ध्रुभावाद्रिणा कपिरिति भट्टिः। १४। ८१। ध्रुभाव मारितवान् अनेकार्थत्वाद्धिंसायामपीति भरतः)।

२१। ध्रुङ् सर्पणे } (ध्रु, भ्वा, आ) (स्रु, भ्वा, आ)
२२। स्रु ङ च सर्पणे } (सर्पणं गमनं) द्वौ क्रमात् रेफान्तःस्थतृतीयोपधौ। ङ—ध्रवते। स्रवते। चकारात् जि ध्रु क्षि, ध्रु स (चकारेण ध्रुधातुद्वयमपि गमनार्थकमिति सूचितं, अतएव

(१) कातन्त्रे ध्रुगतिस्थैर्य्ययोरित्यस्य व्याख्याने "ह्रस्वान्तोऽयं ध्रुता इति त्रिलोचन। धातुप्रदीपादौ ध्रुविता इत्युदाहृतं तस्मात् दीर्घान्तोऽय 'मित्युमा रमानाथेन।

ध्रु गतिस्थैर्य्ययो- रित्यन्ये) (कापीद्धं भर्त्तुरानन्दं मा न ध्रौद्धं द्रुतं वियदिति भट्टि. ६।७७)।

२३। युल् मिश्रणेऽमिश्रणे (यु, अदा, प) ल—यौति। मिश्रणे यथा—यौति काले कुलस्त्रीभिः चेलसन्तानहृद्धये (१) इति हलायुधः। १६५। अमिश्रणे समवायलक्षणे यथा—अयुतसिद्धाना अपृथक्सिद्धानामित्यर्थः। (यवयारातीरिति श्रुतावपि अरातीः सज्जनघातून् यवय पृथक् कुरु इत्यर्थः)। (२)।

२३। युञ्ग बन्धे (यु, क्र्या, उ) ञ, ग—युनाति युनीते। युनाति यो वयःस्थोऽपि न वेश्याबन्धकीजनैरिति हलायुधः। १६५। (अस्मात् ण्यां अयीयवत्)।

२३। युङक निन्दने (यु, चु, आ) ङ, क—यावयते। (यावयते बाला वृद्धमिति कातन्त्रधातुवृत्तौ)।

रुल्ध्वनौ रुङ्वधे गत्यां स्रुगतौ स्नुनृगतौ स्नुतो।
पुञ्न सन्धालोदमीड्मन्ये पुञ गतौ पु च ॥

२४। रुल्ध्वनौ (रु, अदा, प) ल—रवीति रौति।

२४। रुङ्वधे गत्यां (रु, भ्वा, आ) ङ—रवते। (गमनार्थे रविः सूर्यः)।

२५। स्रु गतौ (स्रु, भ्वा, प) स्रवति। रेफरहितोऽप्ययमिति केचित् तेन शवति।

---

(१) अत्र चात्रसन्तानवृद्धये इत्यपि क्वचित् पाठ।

(२) नेमेकाजादिति सूत्रे यवादिगणे अस्यैव पाठो नतु क्र्यादिकस्य। अतएव उतोऽवृद्धे यु नु क्षणव इत्यत्र वङ्भिरादादिकै साहचर्य्यात् यु मिश्रणे इत्यस्य सेट्कत्वं न युनातेरित्यस्त कातन्त्रधातुवृत्तौ।

२५। अनुगतौ श्रुतौ (श्रु, स्वा, प) श्रुतिराकर्णनम्। न—शृणोति गीतं लोकः। "रक्षासीति पुरापि संशृणुमहे" इति मुरारौ व्यतीहारादात्मनेपदम्। "संशृणुष्व मयाख्यात" मिति गत्यर्थतानित्यत्वात्, आख्यातशब्दस्य क्रियाविशेषणत्वेनाकर्मकतया 'समोगम्यृच्छ' इत्यादिना वा स। (मुग्धबोधे भ्वादावस्य पाठात् क्वचिद्भ्वादिकत्वमपीति सूचितम्। तेन "श्रवति राक्षसनिस्वन-माहत" इत्यादि सिद्धम्।)

२६। षुञभिषवस्नानसन्धानपीडनमन्थे (षु, स्वा, उ) मन्थ्यादिः। न, अ—सुनोति सुनुते। सन्धा सन्धानम्। अन्त इह स्नानं मङ्गलस्नानं वा। तथाच षुञ अभिषवे इति प्राहुः। अभिषवः पीडनं मन्थनं चेति त्रिलोचनादयः। स्नानश्चेति दुर्गः। सन्धानं मङ्गलस्नानं चेति धातुप्रदीपः। (सोमं सुनोति यज्ञेषु परलोक-जिगीषयेति हलायुधः। तत्र सोमं सोमलता सुनोति निष्पीड-यति, यज्ञे सोमलता निष्पीड्य तद्रसं पिबतीत्यर्थः) (मङ्गलस्नानं यथा—राज्ञा सूयते मङ्गलपूर्व्वकं स्नायते यस्मिन् क्रतौ स राज-सूयः क्रतुरिति)।

२६। षु जगतौ (षु, भ्वा, उ) अ—सुषाव सुषुवे।

२६। षु च (षु, भ्वा, प) सवति। चकारात् गतौ।

**षुल् चैश्वर्य्यप्रसवयोः ष्यल्प्रसुत्यां ट्वाल्स्तुतौ।**
**सुध्वर्थे सुञ्गतौ स्नुग् न ञुद्वृतौ स्रुद्रवत् ज्ञलि।**
**ह्नोमेऽदने ह्वङ्ल् चौर्य्ये त्रयस्त्रिंशदुदन्तकाः॥**

२६। षुल् च ऐश्वर्य्यप्रसवयोः (षु, अदा, प) ल—सौति। (प्रसौति विजयं धर्म्म इति हलायुधः २६) चकारात् पुक

(भौवादिकस्य षुधातोरपि ऐश्वर्य्यप्रसवावर्थावित्यर्थः। अतएव कातन्त्रधातुवृत्तौ षु प्रसवे इत्यत्र प्रसवति पुत्रं मातेत्युक्तम्। ऐश्वर्य्यमीश्वरीभावः। अस्यायमर्थो न सर्व्वैर्मन्यते। प्रसवो गर्भ-मोचनम्)।

२७। ष्णुल् प्रस्नुत्या (ष्णु, अदा, प) प्रस्नुतिः क्षरणं। क— स्नौति दुग्धं स्तनात्।

२८। टुञल् स्तुतौ (ष्टु, अदा, उ) मूर्द्धन्यादिः। (षोपदेशोऽयम्) अ, ल—स्तवीति स्तौति स्तुते।

२९। सुव्यर्थे (सु, भ्वा, प) दन्त्यादिः। सवति। व्यर्थे— गत्यैश्वर्य्यप्रसवेषु (अयं धातुः पूर्व्वोक्तषुधातोरर्थे प्रयुज्यते इत्यर्थः) (स च प्रसवति श्रियमिति हलायुधः २६) (१)।

२९। सुञगतौ (सु, भ्वा, उ) अ—सुषाव सुसुवे।

३०। स्कुञ्ञुकृतौ (स्कु, क्र्या, स्वा, उ) ग, अ स्कुनाति स्कुनीते। न, अ—स्कुनोति स्कुनुते चुस्काव (अत्रासतसकार-त्वान्न षत्वमिति दर्शितं) उद्धृतिरुद्धरणं। आस्रवने इति प्राञ्चः तथाच स्कुनाति च स्कुनीते च स्कुनोत्यास्रवतेऽपि च। स्कुन्दते स्कुन्दते चापि षड़ाप्लवनवाचिन इति भट्टमल्लः। आवरणे इति पाणिनीयाः। स्कुनाति शत्रुं बाणेन भटः आच्छादयतीत्यर्थं इति

(१) ननु "सेकसीकसृपेत्यादिना दन्त्याजन्तषादीनां मूर्द्धन्यादित्वविधानात् कथमयं दन्त्यादिरिति चेत्, तत्रैव स्पेर्ग्रहणेन दन्त्याजन्तसादीनाञ्च क्वचित् दन्त्यादित्वसूचनात्। अन्यथा स्पेर्दन्त्यान्तसादित्वेनैव सिद्धे तत्र तस्य पृथक्ग्रहण-मनर्थकं स्यात्। तेन सान्त्व सामतृक सान्त्वने इत्यादीनामजन्तषादित्वेऽपि दन्त्यादित्वं सिद्धं। न च स्पेर्वकारस्य कथं दन्त्यत्वमिति वाच्यं उद्दृष्टो यत्र विद्येते यो वः प्रत्ययसन्निजः। अन्त्यस्थं तं विजानीयात् तदन्यो वर्ग्य उच्यते इति स्वरषादित्युक्तेः स्फक्प्रतीघाते इति धातुव्याख्यानावसरे दुर्गादासेन।

रमानाथः। (राममध्यद्रवज्जिष्णुरस्कुमाश्चैपुरटिभिरिति भट्टिः। १७। ८२)।

३१। खु द्रुवत् (खु, भ्वा, प) स्रवति। द्रुवत् स्रुतौ गतौ (पूर्व्वोक्तद्रुधातुरिव स्रुतिगतिरूपार्थवाचकः)।

३२। हुलि होमेऽदने (हु, ह्वा, प) होमो देवतासम्प्रदानकवह्न्यधिकरणकवस्तुत्यागः। नि—जुहोति घृतमग्नौ ऋत्विक्। अदनं भोजनम्। प्रयोगोऽप्ययं "चिराय सन्तर्प्य समिद्भिरग्निं यो मन्त्रपूतां तनुमप्यहौषी"दिति रघुः। "जटाधरः सन् जुहुधीह पावक"मिति किराते प्रीणनार्थोऽपि।

३३। क्रुङ् लु चौर्य्ये (क्रु, अदा, आ) ङ, लृ—क्रुते। (स्पादित्वाददादित्वं सिद्धं, तस्य तदन्तर्गतत्वात्। चौर्य्यमलापनयनं। अतएव क्रुङ अपनयने इति धातुप्रदीपे कातन्त्रे च पाठः। निजुक्रुवुः चपाटतामिति भट्टिः। ५, ६४)।

त्रयस्त्रिंशदुदन्तकाः।

(उकारान्ता धातवस्त्रयस्त्रिंशत्संख्यकाः। संख्यासङ्गतिस्तु पूर्व्ववदिति)।

---

## ऊकारान्तवर्गः।

**कूङिङार्त्तस्वरे क्रूञ्ग शब्दे गू ञो गि विट्सृजौ।**
**णूघिस्तवन ञो टूङ्य खेदे द्रूञ्गञ् वधे गतौ॥**

१। कूङिङार्त्तस्वरे (कू, तु, आ) घि, ङ—कुवते, अकुविष्ट। (आकूतमभिप्रायः। अयं धातुः कैयटादौनां सम्मत इति धातुप्रदीपः)।

२। क्नूञ् शब्दे (क्नू, क्रा, उ) दन्त्यनोपधः। अ, ग—क्नूनाति क्नूनीते। ऋकारान्तोऽयमिति जैमिनिः। नकाररहितो क्रकारान्त इति रमानाथः। दीर्घान्त इति कौमराः। (दन्त्यनोपधो दीर्घान्तो धातुप्रदीपे पठितः)।

३। णू णो शि विट्कृतौ (णू, तुदा, प) ओ—णूनः। शि—णुवति अणुवीत्। विट्कृतिर्हदनं (मलत्याग इत्यर्थः)।

४। णूशि स्तवने (नू, तुदा, प) ऋकारान्तोऽयमिति वररुचिः। शि—नुवति, अनुवीत्।

५। ओ दूङ्य खेदे (दू, दि, आ) खेद इह उपतप्तीकरणं उपतप्तीभावश्च। ओ—दूनः। ङ, य—दूयते दैन्यं जनमिति चतुर्भुजः। (दुर्जनोक्त्या न दूयते इति हलायुधः। २५६। तथा दीनं विधातर्मां कथं पश्यन्दूयसे इति रघुः। ९। ७०)

६। दूञ्गञ बधे गतौ (दू, स्वा, क्रा, उ) न, ञ—दूणोति दूणुते। ग, ञ—दूणाति दूणीते।

धूञिक् कम्पे धूञ्गि धूञच् पूङ् शोधे पुङ्य पूञ्गिच।

७। धूञिक् कम्पे (धू, तुदा, चु, प) कम्प इह अन्तस्य रूपम्। शि—धुवति मारुतो मालतीलताम्। अधुवीत्। क—धावयति। वायुर्विधूनयति केशरपुष्परेणूनिति चुरादौ हलायुधः। ८। प्रीधूञोर्नन् वेत्यत्र धूञग्रहणादस्य कथं नक्विति चेन्न, स्वार्थविहितस्य ञेर्ञकारेण सम्बन्धस्य वाच्यत्वात् (१)। अन्यथा कम्पप्रेरणे धूनयतीत्यादिप्रयोगा नस्युः। धूनोतीत्यादीना साध्या इति चेत् स्वभावात् कम्पप्रेरणार्थानां तेषां (प्रेरणार्थे) ञौ कृते कम्पप्रेरणस्य प्रेरणमेवार्थः स्यात्। किञ्च कम्पनाया धूनय-

(१) कार्यिविनि नकारागमं मन्यते इत्युक्तं कातन्त्रधातुवृत्तौ।

तौल्यादीनामावश्यकत्वात् तत्सूत्रे अकारः प्राचीनमतानुवादार्थ एव। ( धाधूतवनराजिभिरिति रघुः १।३८ )।

७। धूनगि अ च } ( धू, स्वा, क्र्या, उ ) ( धू, भ्वा, उ )
७। धूञ् च } चकारात् कम्पे। स च इहापि कम्पप्रेरणम्। न, ञ—धूनोति चम्पकवनानीति हलायुधः। ८। धूनुते। गि, ञ—धुनाति वायुरश्वत्थम्। धुनीते मन्मूर्ध्नं तिलकुसुमरन्ध्रापि पवन इति। धूनः धूनिः। ञ—धवति चन्दनमञ्जरीश्च इति हलायुधः। ८। धवते।

८। पूङ् शोधे ( पू, भ्वा, धा ) शोध इह शुद्धीकरणम्। ङ—पवते मामिनं गङ्गा।

८। पूङ् य च } ( पू, दि, धा ) ( पू, क्र्या, उ ) आद्यः
८। पूञ् गि च } कैश्चिन्न मन्यते। चकारात् शोधे। ङ, य—पूयते। ञ, गि—जाह्नवी नः पुनातु। पुनीते। पूवर्जनादस्य ह्लादित्वाभावात् पूतः पूतिः। क्वचित् श्नाप्रत्ययस्यापि प्वादित्वात् ह्रस्व इति वररुचिः। तेन—स्मरणात् पुनते पापं धारणात् पूर्व्वसञ्चितम्। दर्शनाल्लभते मोक्षमेतद्योगस्य लक्षणमिति।

## ब्रूञ्‌ब्रुक्तौ भूकाङ् भूञप्राप्तौ भूक्शुद्धिचिन्तयोः। मिश्रणे भू तु सत्तायां मूङ्बन्धे लूगिञ्छिदि॥

६। ब्रूञ् उक्तौ ( ब्रू, अदा, उ ) न, ञ—ब्रवीति ब्रूते। विब्रूतिः कटके क्तेत्यत्र परविहितकार्यस्यानित्यत्वान्न वचादेशः।

१०। भू काङ् प्राप्तौ } ( भू, चु, धा ) ( भू, भ्वा, उ ) क, ङ—
१०। भूञप्राप्तौ } भावयते। ञ—भवति भवते धनं

धीरः । भवत्येव हि सत्ताया प्राप्तिसम्बन्धजन्मस्विति भट्टमल्ल । भवते दुरितचयं ययोक्तक्रतुभिर्भाव्यते च नाकलोकमिति हलायुधः । ५० । केचिदमुं भूधात्वात्मनेपदिनं मत्वा प्राप्तौ परस्मैपदं सत्तार्थस्यैवानेकार्थत्वात् समादधते ।

१० । भूक्सुद्धिचिन्तयोर्मिश्रणे (भू, चु, प) क—द्रव्यवद्भावयति द्विपस्य सर्व्वानिति हलायुधः ५० । तयोऽर्थः ।

१० । भू त सत्ताया ( भू, भ्वा, प ) सत्ता इह द्विविधा उत्पत्तिर्विद्यमानता च । भवति मनुष्योऽथवा विष्णु ।

११ । भू ङ वन्धे ( भू, भ्वा, आ ) पवर्गपञ्चमादिः । ङ—भवते । ( बद्धे सन्दानितं भूतमित्यमर )।

१२ । लूगिञ् छिदि ( लू, क्या, उ ) गि, ञ—लुनाति लुनीते । लूनः लूनिः । (लुनीहि नन्दनमिति माघः १ । ५१)।

## पूङ्‌ल पूयोङ् सूतौ पूष् चेपे ऊतस्त्रयोदश ।

१३ । पूङ्‌ल सूतौ } ( पू, अदा, आ ) ( पू, दि, आ )
१३ । पूयो ङ सूतौ } द्वौ सद्वन्त्यादी । ङ, ल—सूते । य, ङ—सूयते । ओ—सूनः । सूतिर्गर्भमोचनम् । सूते पुत्त्रं नारी । अन्यत्रापि—धर्म्ममर्थः प्रसूयते । ( यस्य पृथ्वी प्रसूतेऽर्थं धर्म्ममर्थः प्रसूयते इति हलायुधः । २६ )।

१३ । पूष् चेपे ( पू, तु, प ) सद्वन्त्यादिः । श—सुवति । ऊतस्त्रयोदश ।

(ऊकारान्ता धातवस्त्रयोदशसंख्यकाः । सख्यासङ्गतिस्तु पूर्व्ववदिति)

---

## ऋकारान्तवर्गः ।

**ऋर्न हिंसे ऋलिंगत्याम्रप्रापे च क्षञन् वधे ।**
**क्षञ्कृतौ क्षञ्दडु च गृ इसेके इर्लिं भासि च ॥**

१। ऋर्न हिंसे (ऋ, स्वा, प) र—वैदिकः। न—ऋणोति। रेफादिस्तृतीयस्वरान्तोऽयमिति केचित्। (केचिदिमं रिधातुं पठन्तीत्यर्थः) (ऋणोति यरयौं ऋस्त्रामिति हलायुधः। ४५। यस्य कीर्त्तिरिति पूर्व्वेण सम्बन्धः, ऋणोति व्याप्नोतीत्यर्थः)।

१। ऋलिं गत्यां (ऋ, ह्वा, प) र—वैदिकः। लि—इयर्त्ति। अपो लुक्करणादस्य यङ्यानयोरेव ऋच्छादेशः। इयृच्छत, इयृच्छानः। (यस्य कीर्त्तिरियर्त्ति द्यामिति हलायुधः। ४५)।

१। ऋ प्रापे च (ऋ, भ्वा, प) प्रापः प्राप्तिः। ऋच्छति धनं क्षतौ। चकारात् गत्याञ्च। (दिक्षुखानि च ऋच्छतीति हलायुधः। ४५)।

२। क्ष ञ न वधे (क्ष, स्वा, उ) ञ, न—क्षणोति क्षणुते। (क्षणोति किरणं शत्रोरिति हलायुधः। ४४)।

२। क्षञ् कृतौ (क्ष, भ्वा, उ) ञ—करति करते। अयं केश्चिन्न मन्यते।

२। क्ष ञ द डु च (क्ष, तना, उ) ञ, द—करोति कुरुते। डु—कृत्रिमम्। चकारात् कृतौ। अम्रादगुणिमकारो ऽप्यगुणो वा वक्तव्य इति वररुचिः। तेन "किं करोमि क्वं कुर्मि कात्र गच्छामि माधव। दुर्य्योधनविहीनन्तु शून्यं सर्व्वमिदं जग"दिति।

३। ग्ट सेके ( ग्ट, भ्वा, प ) गरति तरुं मेघः।

४। घृ सेके ( घृ, भ्वा, प ) घरति तरुं मेघः।

४। घृलि भासि च ( घृ, ह्वा, प ) चकारात् सेके च। र—वैदिकः। लि—जघर्त्ति घृतं दीप्यते चरति वेत्यर्थः।

## घृक् सेके च्छादने जृ न्यक्कारे जागृ ह्लु जागरे।

४। घृक् सेके च्छादने ( घृ, चु, प ) क—घारयति।

५। जृ न्यक्कारे ( जृ, भ्वा, प ) न्यक्कारस्तिरस्करणं। जरति धवं स्मरः।

६। जागृ ह्लु जागरे ( जागृ, श्रदा, प ) च—जाग्रति। लु—जागर्त्ति। "दिवो निरीक्षमाणस्य नास्ति जागरतो भय"-मिति पचादित्वादनि जागर इवाचरतीति क्वौ श्रवन्तम्।

## दृङ् आदरे हृ स्वगने ध्वृ कौटिल्ये धृ ग्रङ् स्थितौ।

७। दृङ् आदरे ( दृ, तुदा, श्वा ) आदरः प्रीत्या सम्भ्रमः। ङ, श—द्रियते गुरुं लोकः। आतुबन्धोऽयमित्येके।

८। हृ स्वगने ( हृ, भ्वा, प ) वकारोपधः। हरति। स्वगनं संवरणम्। वरणे इति प्राञ्चः। वरणं स्वीकारः स्वगनञ्चेति गोविन्द-भट्टः। ( हरन्ति श्राहणति रक्षिणोऽस्मामिति घञि हारं। घञन्तोऽपि क्वचिन्नपुंसकमिति धातुप्रदीप इत्यमरटीकायां भरतः)।

९। ध्वृ कौटिल्ये ( ध्वृ, भ्वा, प ) वकारोपधः। कौटिल्यमिह कुटिलीकरणं। ध्वरति तृणं वायुः।

१०। धृ ग्रङ् स्थितौ ( धृ, तुदा, श्वा ) श, ङ—ध्रियते।

( म्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखमिति माघः । २।३५। म्रियते कुसुमप्रसाधनं तव तच्चारुवपुर्न दृश्यते इति कुमारसम्भवम् । ४ । १८ )।

### धृञ् च धृत्यां धृक् च धृ ङवध्वंसे पृ लि पालने ।

१० । धृञ् च धृत्या ( धृ, भ्वा, उ ) ञ्—धरति धरते । चकारात् धृशङ् च ( तौदादिको धृधातुरपि धारणार्थे वर्त्तते इत्यर्थः )।

१० । धृक् च (धृ, चु, प) क—धारयति । चकारात् धृत्याम् ।

१० । धृङ् अवध्वंसे ( धृ, भ्वा, आ ) अवध्वंसः पतनम् । ङ—धरते पत्रं वृक्षात् । गोविन्दभट्टस्तु अविध्वंसने इति पठित्वा विध्वंसनं स्रंसनं तस्याभावोऽविध्वंसनं स्थापनमिति व्याख्याति ।

११ । पृ लि पालने ( पृ, ह्वा, प ) लि—पिपर्त्ति । ( पिपर्त्ति पृथिवीञ्च य इति हलायुधः । ३७ )।

### पृक् च पूर्त्तौ पृ न प्रीतौ पृशङ् व्यायामके स्मृ लि ।
### टु डु भृञ् भृति पुष्ट्योर्मृशङ् मृतौ हृञ् हृतौ ॥

११ । पृक् च पूर्त्तौ ( पृ, चु, प ) पूर्त्तिः पूर्णीकरणम् । क—पारयति पयसा कुम्भं लोकः । चकारात् पृ लि च ( पूर्त्त्यर्थक इत्यर्थः ) ( पारयत्यर्थिनामाशामिति हलायुधः । ३७ )।

११ । पृ न प्रीतौ ( पृ, स्वा, प ) न—अतिथीन् पृणोतीति हलायुधः । ७ ।

११ । पृ शङ् व्यायामके (पृ, तुदा, आ) व्यायामको व्यापारः । श, ङ—धर्म्मे व्याप्रियते नित्यमिति हलायुध । ३७ ।

१२। भृलि टु डु ञ् भृतिपुष्ट्योः } (भृ, ह्वा, उ)
१२। भृ ञ भृतिपुष्ट्योः } (भृ, भ्वा, उ)

भृतिर्भरणं, पुष्टिः पोषणं । लि, ञ—बिभर्त्ति शशिनं शम्भुर्बिभृते जनकः सुतम् । टु—भरथुः । डु—भृत्रिमम् । भ्वादिपक्षे भृतिः-पूरणम् । ञ—भरति भरते कुम्भमद्भिर्जनः । (यो भुजाभ्यां भुवो भारं भरते भरतोपमः । बिभर्त्ति च यशोराशिं भूयांसं यस्य भूरपीति कश्चिदस्योदाहरणे भ्वादिपक्षेऽपि धारणार्थत्वमुपलभ्यते । "भरणं पोषणं पूरणं चे"ति कातन्त्रधातुवृत्तौ रमानाथः) (१)।

१३। मृङ् मृतौ (मृ, तुदा, आ) मृतिः प्राणत्यागः । ङ, म्रि—म्रियते प्राणी । ङित्त्वेऽप्यस्य "मृङटोर्देम"मिति नियमेनान्यत्र परस्मैपदम् । ममार, मर्त्ता, मरिष्यति, अमरिष्यत् । (२)।

१४। वृण ञ वृतौ । } (वृ, क्र्या, स्वा, उ)
१४। वृ ञ वृतौ । } (वृ, भ्वा, उ)

ण, ञ—वृणाति वृणीते । न, ञ—वृणोति वृणुते । ञ—वरति वरते । वकारस्य दन्त्यत्वात् संवृणोतीत्यादौ नानुस्वारस्य मकारः । ओष्ठ्यत्वाच्च वुवूर्षतीत्यादौ "ऋदिरघा"वित्युर् । नच

---

(१) भृलि टु डु भृञ् भृतिपुष्ट्योरिति गणपाठे "न परेषाञ्च मध्यम" इत्युक्तेः लि टु डु एते भौवादिकस्य भृधातोर्नानुबन्धाः किन्तु "परोऽनुबन्धः पूर्व्वेषामेकवाक्यस्थधातूनामि"ति कथनात् ञकारो ह्वादिस्थधातोरप्यनुबन्धः एवमन्यत्रापि द्रष्टव्यमिति ।

(२) नच मृधातोः परस्मैपदित्वेन पाठेऽपि "शदोऽदिम"मित्यादिवत् "मृङटोर्येम"मिति नियमाद्विभक्तिविशेषेष्वात्मनेपदविधानमपि कथं ङानुबन्धः कृत इति वाच्यं वेदे स्वरभेदार्थकत्वात् । कातन्त्रधातुवृत्तावप्येवमेवाशयो व्यञ्जित इति ।

दन्त्यस्य कथमोष्ठ्यकार्य्यमिति वाच्यं यतः स्वभावादोष्ठ्यस्य वकारस्य चोष्ठ्यकार्य्यं स्वाभाविकमेव, क्वचिद्दन्त्यकार्य्यमपीति दन्त्यमध्ये पाठः। नह्येकवर्णस्योभयस्थानं सम्भवति। (वृणोति हृणो-तीति, धर्म्मं वृणीतेऽध्वरे इति, वरति ब्रातीन् यथार्हैर्धनैरिति, निवरते नित्यं प्रियोपद्रवमिति च हलायुधः। ११)।

## वृक् चाथ वृङ् ग सम्भक्तौ स्तृ ञ शब्दोपतापयोः।

१३। वृक् च (वृ, वृ, प) क—वारयति। चकाराद्वृतौ (वृद्धे वारयति हिम इति हलायुधः, । ११। अत्र वारणार्थत्वं धातूनामनेकार्थत्वात्)।

१४। अथ वृङ् ग सम्भक्तौ (वृ, क्या, आ) ङ, ग—वृणीते। सम्भक्तिः सेवनम्। "वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः" इति भारविः। २। ३०।

१५। स्तृ ञ शब्दोपतापयोः (स्तृ, भ्वा, प) इत्यादिवकारोऽधः। ञ—अस्तारीत् पिकः, अस्तार्षीत् खलं राजा।

## स्तृञ् स्तृतौ स्तृक् च स्तृर्लि स्तृगतौ स्तृ स्मृतौ स्तृम।
## क्रैर्क्याः स्तृ स्तृन् प्रीतिरक्षायापने ह्व धृ वत् ह्वलिर्।
## प्रसह्यवत्यौ हृञ् हृत्यास्दन्त्यास्त्वेकविंशतिः॥

१६। स्तृञ् स्तृतौ (स्तृ, स्वा, उ) न, ञ—स्तृणोति स्तृणुते। स्तृतिराच्छादनम्। (तच्छिरोभिः स्तृणोति गाः। स्तृणुते लिदशावासं यः कुन्देन्दुनिभैर्गुणैरिति हलायुधः। ७४)।

१७। स्तृक् च (स्तृ, चु, प) क—स्तारयति। चकारात् स्तृतौ।

१७। सर्त्ति गतौ (स, ह्वा, प) र—वैदिकः। लि—सर्सर्त्ति।

१७। सृ गतौ (स, भ्वा, प) सरति। "नालानं करिणा सस्रे त्रिपदीच्छेदिनामपी"ति रघौ कर्म्मकर्तृत्वादिति रमानाथ', तच्चिन्त्यं कर्त्तृस्थभावधातूना तन्निषेधात् (१)। वस्तुतस्तु गणसूत्रानित्यत्वादात्मनेपदम्। नालानैरिति वा पाठ्यम्। तत्र कर्म्माविवक्षाया भावे प्रत्ययः।

१८। स्मृ स्मृतौ (स्मृ, भ्वा, प) स्मरति। स्मृतिर्ज्ञानविशेषः। तथाच—संविज्ञयवती द्वेधा स्मृत्यनुभवभेदिकेति तार्किकाः। तेन णौ अञ्जरान्तकर्त्तुः कर्म्मत्वम्। गुरु' शिष्यं शास्त्रं स्मारयति।

१८। स्मृ म औत्कण्ठ्ये (स्मृ, भ्वा, प) म—स्मरयति। उत्क उत्कण्ठितः तस्य भाव औत्कण्ठमुत्कण्ठा। आध्याने इति माधः, आ समन्तात् ध्यानमाध्यानमिति कश्चित्। उत्कण्ठेति काशिकावृत्तिशोपदेवौ। उत्कण्ठापूर्व्वकं स्मरणमिति वृद्धाः। "सुहृदनुस्मरयन्तमशुचपं त्रिपुरदाह"मिति भारविः। ५। १४।

१६। स्तॄञ् प्रीतिरक्षामाप्याने (२) } (स्तॄ, स्वा, प)
१८। स्पॄञ् प्रीतिरक्षामाप्याने } (स्पॄ, स्वा, प)
द्वौ क्रमाद्दन्त्योष्ठ्यवर्गाद्योपधौ। न—स्तृणोति। तस्तार। न—

---

(१) उक्तञ्च कर्म्मकर्त्तृप्रकरटीकाया—आतिदेशिकमनित्यमिति न्यायात् कर्त्तृस्थभावधातूनां नस्यादिति बोध्य' तेन स्वाद्यते घोदन स्वयमेव, गम्यते ग्राम स्वयमेव इत्यादि न स्यात्। तथाच—कर्म्मस्थ पचतेर्भाव कर्म्मस्थाच भिदादय। बुधस्तु भाव कर्त्तृस्थ कर्त्तृस्थाच गमादय इति प्राञ्च।

(२) यद्यपि पूर्व्वोक्तस्तृञस्तृतादित्वादनन्तरमेवाय पठितुमुचितस्तथापि एकार्थयो स्तृ स्पृ इत्युभयो पृथगर्थकथनगौरवभयादिह व्युत्क्रमेण पठित। उक्तञ्च प्राक् परिभाषाटीकाया "एत स्तृञस् ततादिविति स्तृ स्पृञ प्रीतिरक्षामाप्याने

स्तृणोति। पस्तार। ग्रेपस्तु बोध्यवर्गपञ्चमोपध इति दुर्गरामौ। स्तृणोति। (१)।

२०। ह्वृ ध्वृवत् (ह्वृ, भ्वा, प) ध्वृवत् कौटिल्ये। (ध्वृधातुरिव कौटिल्यार्थकः) ह्वरति लतां वायुः।

२१। हृ खि र प्रसह्याकृत्या (हृ, ह्वा, प) प्रसह्याकृतिर्बलात्कारः। खि—जहर्ति धनं दस्युः। र—वैदिकः।

२१। हृञ् हृत्याम् (हृ, भ्वा, उ) हृतिर्देशान्तरप्रापणा। ञ—हरति हरते गां वनं गोपः।

## ऋदन्तास्त्वेकविंशतिः।

(ऋकारान्ता धातव एकविंशतिसंख्यया संख्येयाः। संख्यासङ्गतिस्तु पूर्ववत्)।

---

## ऋकारान्तवर्गः।

**ॠगि गत्यां कॄञ्गि हिंसे कॄश्विक्षेपेऽथ कॄक ङ।**
**विज्ञाने गॄङ्क विज्ञाये च गॄश् निगरणेऽथ गॄ।**
**गिशब्दे जॄगिकि ज्याने जॄ दूर्षश्य च झॄय्य च॥**

१। ॠगि गत्याम् (ॠ, क्रा, प) गि—ऋणाति, ईर्णः, ईर्णिः। (ऋणाति फणिना पुरमिति हलायुधः। ४५। यस्य कीर्त्तिरिति पूर्व्वेण सम्बन्धः)।

---

स्त्वेतयोर्मध्ये धातीनां पाठेऽपि बोध्य' मिति। चात पूर्व्वोक्तषोडशसंख्यकस्तु धातुपाठ्याद्यमपि षोडशसंख्यया गणित इति बोध्यम्।

(१) स्तृणोति, पस्तार, विस्तायामथेर्कमित्युक्तं कातन्त्रधातुवृत्तौ रमानाथेन।

२। कॄञ् गि हिंसे ( कॄ, क्र्या, उ ) ञ, गि—कृणाति कृणीते, कीर्णः कीर्णिः। ( कृणाति तुरगान् रणे इति हलायुधः। ४४ )।

२। कॄश् विक्षेपे ( कॄ, तुदा, प ) श—किरति। अस्यापि निष्ठाया कीर्ण इति। खल्वाद्योदिदित्यत्र ऋच्छ्वर्जनसामर्थ्यात् येन केनापि प्रकारेण रेफान्तान्निष्ठातस्य न इति व्याख्यानात् ऋदिरणाविति इरि उरि च कृते रान्तत्वान्निष्ठातस्य न स्यात्। एवं गॄश निगरणे इत्यादेरपि गीर्ण इत्यादि बोध्यम्। (बाणावलि किरत्याजाविति हलायुधः। ४४ )।

२। अथ कॄ कङ विज्ञाने ( कॄ, चु, आ ) क, ङ—कारयते।

३। गॄ ङ् क विज्ञापे च ( गॄ, चु, आ ) विज्ञापो विज्ञापनं। चकारात् विज्ञाने च। ङ, क—गारयते सूक्ष्ममर्थं सुधीः।

३। गॄ श निगरणे ( गॄ, तुदा, प ) निगरण भक्षणं। श—गिरत्यन्नं लोकः। "दैवात्ततो विगलितो गिलितो बकेन" इति ■ अस्मात् डाहोः कभावे इति भावे कप्रत्यये ऋदिरणाविति इरि यकश्यात्रेफस्य लकारे गिल इति स्थिते लेः डत्याख्याने इति ञौ कर्म्मणि क्ते सिद्धम् ( १ )। ( सत्यं सङ्गिरते यश्च इति हलायुधः। २५८ )।

२। अथ गॄ गि शब्दे ( गॄ, क्र्या, प ) शब्द इह व्यक्तवाक्य। गि—गृणाति वाक्य लोकः। गीर्ण गीर्णिः। ( गृणाति शुभग वच इति हलायुधः। २५८ )।

---

(१) कातन्त्रधातुवृत्तावप्येवमुक्तं। तद्यथा—दैवात्ततो विगलितो गिलितो बकेन इत्यत्र अवर्णैक डलयोरैकत्व स्मरणात् गिल इति स्थिते कारितान्ता-दिष्टा।

४ । जॄ गि कि ज्याने ( जॄ, क्रा, चु, भ्वा, प ) गि—जृणाति, जीर्णः, जीर्णिः । कि—जारयति जरति । ज्यानं गतवयस्त्वयो भावः । (जृणाति न यस्य शक्तिरिति हलायुधः । ६) ।

४ । जॄ दूर्पश्च च (जॄ, दिवा, प ) दूर्—अजरत् अजारीत् । प—जरा । म—जरयति । य—जीर्य्यति । चकारात् ज्याने । ( जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः । धनाशा जीविताशा च जीर्य्यतोऽपि न जीर्य्यतीति हितोपदेशः ) ।

५ । झॄय च ( झॄ, दिवा, प ) प—झरा । य—झीर्य्यति । चकारात् ज्याने ।

## तॄ तरेऽभिभवे प्लुत्यां दॄगि दॄम् भियि दॄ यगि ।
## विदारे नॄगि नॄम् नीतौ ञि पॄगि लितु पालने ।

६ । तॄ तरेऽभिभवे प्लुत्यां ( तॄ, भ्वा, प ) तरः प्लवनपूर्व्वक-देशान्तरगमनम् । प्लुतिर्मज्जनाभावः । ( तरे यथा ) तरति नदीं भेलया पान्थः । ( अभिभवे यथा ) तरति सकलदुःखं वामनं भावयेद् यः । ( प्लुतौ यथा ) तरति शुष्ककाष्ठं जले न मज्जतीत्यर्थः । (तामवारोहयत् पत्नीं रथादवततार चेति रघुः । १।५४) ।

७ । दॄगि भियि ( दॄ, क्रा, प ) गि—दृणाति, दीर्णः, दीर्णिः । ( न भातवादैर्न विद्विपादर इति भारविः । १ । २२ ) ।

७ । दॄम् भियि ( दॄ, भ्वा, प ) दरति । म—दरयति । (दरन्ति दिगभोगाश्च यस्य दिग्विजयोदये इति हलायुधः ।७१) ।

७ । दॄ यगि विदारे ( दॄ, दिवा, क्रा, प ) य—दीर्य्यति । गि—दृणाति, दीर्णः, दीर्णिः । ( न विदीर्णे कठिनाः खलु

क्लिय इति कुमारसम्भवम् । ४ । ५ । दृणाति च रणे रिपूनिति हलायुधः । ७३ ) ।

८ । नॄ गि नीतौ ( नॄ, क्या, प ) गि—नृणाति, नीर्णः, नीर्णिः ।

८ । नॄम् नीतौ ( नॄ, भ्वा, प ) नरति । म—नरयति । नीतिः प्रापणा ।

९ । ञि पॄगिलि ञ पालने ( पॄ, क्या, ह्वा, प ) ञि—पूर्त्तोऽस्ति । "ह्लादोदिदि"त्यत्र पॄवर्जनान्न निष्ठातस्य नः । गि—पृणाति (१) । लि—पिपर्त्ति । ( अपारीत् स रुद्धीतोल्को हतद्वेषान् अवझमानिति भट्टिः । १५ । १०० ) ।

पॄक् च पूर्त्तौ वॄगि हत्यां भर्त्स्यां भॄगि भर्त्तौ भर्जि ।
भर्त्से मॄगिवधे वॄगिञ् हत्यां शॄ स्तॄगि हिंसने ॥

९ । पॄक् च पूर्त्तौ ( पॄ, चु, प ) क—पारयति । चकारात् ञि पॄ गि लि च ( पूर्त्त्यर्थक इत्यर्थः ) ।

१० । वॄगि हत्यां भर्त्सां ( वॄ, क्या, प ) गि—वृणाति, वूर्णः, वूर्णिः ।

११ । भॄगि भर्त्तौ भर्जि भर्त्से (भॄ, क्या, प) गि—भृणाति, भूर्णः, भूर्णिः । भर्जि भर्जने । ( कर्म्मवीजानि सर्व्वाणि योगाभ्यासाद्भृणाति इति हलायुधः । ९७ । भृणाति दहतीत्यर्थः ) ।

१२ । मॄगि वधे ( मॄ, क्या, प ) गि—मृणाति, मूर्णः,

---

(१) क्तौ तु पूर्त्तिरित्येव मनीषादित्वात् निर्रिति पाठान्तरं चिन्त्यं, पॄधातोः क्तौ पूर्ण्णिरिति बोपदेवेनोदाहृतत्वात् । "यस्मात् क्तिर्णोऽभिधीयते इति टीका । क्षीरस्वामिना पूर्त्तिमाव्युत्पत्तये क्तिरभिधीयते" इति कातन्त्रधातुवृत्तौ ।

,स्तूर्णिः। ( युद्धे स्तृणाति शत्रूणामस्त्राणीति हलायुधः। १०५)।

१३। वृगिञ् वृत्यां (वॄ, क्र्या, प) गि, ञ—वृणाति वृणीते, वूर्णः, वूर्णिः।

१४। शृगि हिंसने } ( शॄ, क्र्या, प )

१५। स्तृगि हिंसने } ( स्तॄ, क्र्या, प )

आद्यस्तालव्यादिः शेषो दन्त्यादिर्ऋकारोपधः। तद्भिन्नोऽपीति केचित्। गि—शृणाति, शीर्णः, शीर्णिः। स्तृणाति, स्तूर्णः, स्तूर्णिः।

स्तॄञगि च्छादने प्रोक्ता ऋकारान्तास्तु षोडश।

१६। स्तॄञगि च्छादने ( स्तॄ, क्र्या, उ ) ञ, गि—स्तृणाति स्तृणीते। स्तीर्णः, स्तीर्णिः।

प्रोक्ता ऋकारान्तास्तु षोडशः।

( ऋकारान्ता धातवः षोडशसंख्यया संख्येयाः। संख्या-सङ्गतिस्तु पूर्ववत् )।

---

एकारान्तवर्गः।

देङ् पालनेऽथ धेट् पाने मेङ् प्रतिदान एञवे।
स्यूतौ व्येञौ वृतौ ह्वेञौ स्पर्द्धे शब्दे षडेपराः॥

१। देङ् पालने ( दे, भ्वा, आ ) ङ—दयते दीनं दाता।

२। अथ धेट् पाने (धे, भ्वा, प) धयति। ट—स्त्रियामीवर्णः। स्तनन्धयी। (धयागस्य देवराडब्रवीत्। मामयं धास्यति(पास्यति)। ततोऽसौ मान्धाता नामतोऽभवदिति विष्णुपुराणम्)।

३। मेङ् प्रतिदाने (मे, भ्वा, आ) प्रतिदानं परीवर्त्तः। ङ—मयते धान्येन माषं लोकः।

४। ऐ ञ वे स्यूतौ (वे, भ्वा, उ) स्यूतिस्तन्तुसन्तानः। ऐ—ऊयते। ञ—वयति वयते तन्त्रं तन्तुवायः।

५। व्ये ञै वृतौ (व्ये, भ्वा, उ) ञ—व्ययति व्ययते। ऐ—वीयात्। वृतिः संवरणम्।

६। ह्वे ञै स्पर्द्धे शब्दे (ह्वे, भ्वा, उ) स्पर्द्धः पराभिभवेच्छेति वोपदेवः। ञ—ह्वयति ह्वयते मल्लो मल्लमभिभवितुमिच्छतीत्यर्थः। ह्वयति जनं लोक आह्वयतीत्यर्थः। ऐ—हूयात्। गोविन्दभट्टस्तु स्पर्द्धाविषये व्यक्तवाकोऽयमित्याह। (बन्धुप्रियां बन्धुजनो जुहावेति कुमारसम्भवम् १।२६)।

षडेपराः—

(ए एकारः परः परवर्त्ती येषां ते, एकारान्ता धातव इत्यर्थः, षट् षट्संख्यकाः)।

---

## ऐकारान्तवर्गः।

### कै शब्दे क्षै क्षये खै तु स्थैर्य्ये खननहिंसयोः।

१। कै शब्दे (कै, भ्वा, प) कायति। एषामादन्तत्वेन दिवादौ पाठेऽपीष्टसिद्धौ भ्वादावैकारान्तत्वेन पाठो गणकृतमनित्यमिति ज्ञापयति। तेन श्यधातोरात्मनेपदानित्यत्वे शपो लुकि च (१) य्वोर्लोप इति यलोपे पराशब्दस्य रेफस्य वक्तव्याल्लकारे

(१) लुगद्वयोऽप इत्यत्र व्यक्तम् इति गणनिर्देशात् गणकृतमनित्यमित्युक्तेः कदाचिददादिभिन्नादपि शपो लुक् स्यादित्याशयेनोक्तं शपो लुकि च इति।

"एष कालः समुत्पन्नो यः पलाति स जीवती"ति सिद्धम्। वेदेपूच्चारणभेदार्थो भ्वादौ पाठ इति केचित्। (कायति नासत्यवचनमिति नैषधे)।

२। चै चये (चै, भ्वा, प) चादिः। चायति। (चै कः चामः। चायति द्विषतां कुलमिति हलायुधः। ११२)।

३। खै तु स्थैर्ये खननहिंसयोः (खै, भ्वा, प) खायति।

गै गाने ग्लै क्षमेऽथो जै क्षये त्रैङ् पालनेऽथ दैप्।
शोधने द्यै न्यक्करणे ष्ट्यै स्वप्ने ध्यै तु चिन्तने॥

४। गै गाने (गै, भ्वा, प) गीतं गायति गायनः।

५। ग्लै क्षमे (ग्लै, भ्वा, प) अन्तःस्थतृतीयोपधः। क्षमो हर्षक्षयः। ग्लायति लोकः शोकात्। अनुपसर्गस्य णौ "ग्लास्नले"त्यादिना वा ह्रस्वः। ग्लपयति ग्लापयति। सोपसर्गस्य तु प्रग्लापयति।

६। अथो जै क्षये (जै, भ्वा, प) जायति।

७। त्रैङ् पालने (त्रै, भ्वा, आ) दन्त्यवर्गाद्यादिः। ङ— त्रायते। चक्रिस्त्वादि इति त्रायते त्राः विष् पश्चात् त्रा इवाचरेति क्वौ साध्यम्। केचिद्दादौ त्रा इति पठन्ते इति क्रमदीश्वरः।

८। अथ दैप् शोधने (दै, भ्वा, प) पित्त्वाद्दासंज्ञाभावे यगादौ दायते इत्यादि। शोधनमिह शुद्धीकरणम्। दायति ताम्रमम्लेन लोकः। अवपूर्वः शुक्लीभावे। छिन्द्ते खेतते लौषिस्तुः शुक्लत्वेऽवदायतीति भट्टमल्लः। (योऽवदायति कीर्त्तिस्तेति हलायुधः। २४। अवदायति विशुद्धां कीर्त्तिमर्ज्जयतीत्यर्थः)।

९। द्यै न्यक्करणे ( द्यै, भ्वा, प ) अन्तःस्थाद्युक्तः। द्यायति दुष्टं लोकः। ( न्यक्करणं तिरस्कारः )।

१०। द्रै स्वप्ने ( द्रै, भ्वा, प ) द्रायति।

११। ध्यै तु चिन्तने ( ध्यै, भ्वा, प ) ध्यायति धीरो विष्णुम्।

**ध्रै तृप्तौ प्यैङ वृद्धौ पै शोषे स्त्यै कान्तिसंचये।**
**रै शब्दे ओ वै शोषे श्रै स्वेदे श्रैम् पचने मतः।**

१२। ध्रै तृप्तौ (ध्रै, भ्वा, प) रेफोपधः। ध्रायति लाभाल्लोकः प्रीतः स्यादित्यर्थः।

१३। प्यैङ वृद्धौ ( प्यै, भ्वा, आ ) अन्तःस्थाद्योपधः। ङ— प्यायते।

१४। पै शोषे ( पै, भ्वा, प ) पायति धान्यमातपात्।

१५। स्त्यै कान्तिसंचये ( स्त्यै, भ्वा, प ) स्त्यायति चन्द्रो दिवसे।

१६। रै शब्दे ( रै, भ्वा, प ) रेफादिः। रायति।

१७। ओ वै शोषे (वै, भ्वा, प) वकारादिः। ओ—वानः। ( वाति वातः पुरे यस्य तावन्मात्रेण भीतवत्। उद्वायति यथा स्त्रीणां स्वेदार्द्रं सुरते वपुरिति हलायुधः। २१४ )।

१८। श्रै स्वेदे ( श्रै, भ्वा, प ) रेफोपधः। श्रायति रौद्राल्लोकः।

१९। श्रैम् पचने मतः ( श्रै, भ्वा, प ) रेफोपधः। म— श्रपयति। ( भक्तं श्रायत्यनुपमरसं मूल्यमुत्तस्य मांसम्। राष्ट्रे यस्य श्रपयति जनः सुस्थितो हव्यकव्यमिति हलायुधः। १८ )।

· श्यैङ् गतौ षै क्षयेऽथ स्तै वेष्टे ष्ट्यै संहतौ ध्वनौ ।
स्त्यै च स्रै पचि सै त्वित्यामैदन्ताः पञ्चविंशतिः ॥

१९ । श्यैङ् गतौ (श्यै, भ्वा, आ) तालव्यादिरन्तःस्थाद्योपधः । ङ—श्यायते । (१) (पथश्चाश्यानकर्द्दमानिति शोपार्थे रघुः । ४ । २४ ) ।

२० । षै क्षये (षै, भ्वा, प) मूर्द्धन्यादिः । सायति ।

२१ । अथ स्तै वेष्टे (स्तै, भ्वा, प) प्रकृत्या दन्त्यवर्गाद्योपधः । स्तायति दृक्षं लता । अनुपसर्गस्य णौ "ज्वलह्वले"त्यादिना ह्रस्वो वा । स्तपयति स्तापयति । सोपसर्गस्य तु प्रस्तापयति । (यः स्तायति जगत् सर्व्वं विसतन्तुनिभैर्गुणैरिति हलायुधः । २।१८ । स्तायति वेष्टते व्याप्नोतीत्यर्थः ) ।

२२ । ष्ट्यै संहतौ ध्वनौ (ष्ट्यै, भ्वा, प) अन्तःस्थाद्ययुक्तदन्त्यवर्गाद्यमध्यः । षयोगात्, तेन तयौ तिष्ट्यासति ताष्ट्यायते । संहतिः समूहः । ष्ट्यायति लोकः, एकत्र समूहायते शब्दायते वेत्यर्थः । दन्त्यविधौ षोपदेशत्वेन वर्ज्जनाच्च दन्त्यः ।

२३ । स्त्यै च (स्त्यै, भ्वा, प) दन्त्यादिरन्तःस्थाद्ययुक्तसमध्यः । स्त्यायति तिस्त्यासति । चकारात् संहतिध्वन्योः । (स्त्यानावनद्धघनशोणितशोणपाणिरिति वेणीसंहारनाटकम् ) ।

२४ । स्रै पचि (स्रै, भ्वा, प) रेफयुक्तः । स्रायति । पचि पाके ।

---

(१) यथावत् क्तो गत्यर्थे योगं इत, सर्वार्थे योगं जल, व्यन्यम ग्लाम, प्रतियोन अभियोन अभिग्लान अवयोन व्यवग्लान एतानि पदानि 'गत्यर्थे ग्लोजि" "प्रते" "अभ्यवाद्य' एतैर्मुग्धबोधसूत्रै साध्यानि ।

२५ । सै चित्या ( सै, भ्वा, प ) सायति । चिति' क्षय: ।

## ऐदन्ताः पञ्चविंशतिः—

( ऐकारान्ता धातवः पञ्चविंशतिसंख्यकाः । संख्यासङ्गतिस्तु पूर्ववत् ) ।

---

## ओकारान्तवर्गः ।

छोय् लूनौ ज्योङ् नियमव्रतादेशोपनीतिषु ।
दोय च्छेदे शोय् निशाने षोय् नाशे पञ्च ओपराः ॥

१ । छोय्लूनौ ( छो, दिवा, प ) लूनिश्छेद । छ्यति धान्यं लोकः ।

२ । ज्योङ् नियमव्रतादेशोपनीतिषु ( ज्यो, भ्वा, आ ) व्रतस्यादेशो व्रतादेशः। उ—ज्यवते यात्रिको नियमी स्यादित्यर्थः। ज्यवते पण्डितो जनं व्रतमुपदिशतीत्यर्थः । ज्यवते पुत्रं विप्र उपनयते इत्यर्थः ।

३ । दोय च्छेदे ( दो, दिवा, प ) उ—शिरोऽवद्यति विद्विषामिति हलायुधः । २४ ।

४ । शोय निशाने ( शो, दिवा, प ) निशानमित्यल्पीकरणम् । उ—श्यति शस्त्रं शूर । ( मुराणि दुर्गाणि निशातमायुधमिति माघ. । तत्र निशातमिति निपूर्व्वकशोधातो. कर्म्मणि क्तः, पक्षे निशितमपि ) ।

५ । षोय् नाशे ( षो, दिवा, प ) मूर्द्धन्यादिः । नाश इह नष्टीकरणम् । स्यति यमो जन्तून् ।

## पञ्च ओपराः—

( ओपरा ओकारान्ता धातवः पञ्च पञ्चसंख्यकाः )। इत्यन्ताः।

---

## कान्तवर्गः।

**अकिक् लक्ष्मण्यकिङ् गत्यां चाकृम वक्रगतेऽर्कक।**
**तापस्तुत्योः कक्क हासे ककिङिच्छागर्व्वचापले॥**

१। अकिक् लक्ष्मणि (अङ्क, चु, प) लक्ष्म चिह्नयुक्तकरणम्। इ, क—अङ्कयति वस्त्रं रजकः। नोपधपाठेऽपि ञेर्नित्यत्वात् "इसुङ्नोलोपोऽणा" वित्यस्याप्राप्तौ यगादौ अङ्कते इत्यादिसिद्धावपि इदित्पाठस्तुरादेर्ञेरनित्यत्वज्ञापनार्थः। तेन अङ्कतीत्यपि स्यात्। तथाच वोपदेवः—"सिद्धे नित्यञिजन्तत्वान्नित्यनुमृत्वे किताभिदित्। ञिजनित्यत्वबोधार्थं न दृष्टोऽनुम् विधिः क्वचिदि"ति। अस्यार्थः—किता कानुबन्धधातुना नित्यञिजन्तत्वात् नित्यअन्तत्वात् नित्यनुमृत्वे नित्यनकारवत्त्वे सिद्धे इदित् इदनुबन्धकरणं ञिचो ञेरनित्यत्वबोधनार्थं, किन्तु अनुमविधिर्नकाराभावः क्वचिदपि न दृष्ट इति।

१। अकिङ् गत्याञ्च (अङ्क, भ्वा, आ) चकाराल्लक्ष्मणि च। इ—अङ्कते। ङ—अङ्कते पुण्यतीर्थेषु दृषयुग्मानि धार्मिक इति हलायुधः। १६०। ( अङ्कते दानार्थं चिह्नितानि करोतीत्यर्थः) (१)।

---

(१) तस्यक्रमाणां पृथक्पठितानामप्येकार्थे अस्यादङ्कतिरिति टीकाकार-

१। चक्क वक्रगते (चक्क, भ्वा, प) म—चक्कयति। चक्कति सर्पः।

२। चर्क क तापस्तुत्योः (चर्क, चु, प) एककककारप्रकृतिकः, पश्चाद्रेफनिमित्तं द्वित्वं विभाषया वक्तव्यम्। तेन क—चर्क्कयति चर्कयति। एवं सर्व्वत्र।

३। कक्क हासे (कक्क, भ्वा, प) कोपधः। कक्कति।

४। कक डिच्छागर्व्वचापले (कक, भ्वा, आ) इच्छेह लप्या। गर्व्वः कैश्चिन्न मन्यते। चापलं चपलीभावः। ङ—ककते काकः सलष्यश्चपलो वा स्यादित्यर्थः।

कांक ङ व्रजने कुक् ङ त्वादाने क्ष्विक्क कङ् वधे।
चक अङ् म प्रतीघाततृप्त्योश्चीककि मर्शने॥

४। कांक ङ व्रजने (कङ्क, भ्वा, आ) ङ—कङ्कने। ङ—कङ्कते। (कङ्कः पक्षिविशेषः। कंकिलौल्येऽच् इत्यमरटीका)।

५। कुक् ङ त्वादाने (कुक्, भ्वा, आ) ङ—कोकते। (कोको व्याघ्रविशेषः, कोकते मेषादीनादत्ते इत्यमरटीका)।

६। क्ष्विक्क कङ् वधे (क्ष्विक्क चु, आ) सुहृन्त्योपधः। क, ङ—क्ष्विक्कयते।

७। चक अङ् म प्रतीघाततृप्त्योः (चक, भ्वा, उ, आ) (प्रतीघातो व्याघातः) अ—चकति चकते खलः साधुं (व्याहन्तीत्यर्थः) ङ—चकते अनसूयतीत्यर्थः। म—चकयति।

८। चीक कि मर्शने (चीक, चु, भ्वा, प) कि—चीकयति चीकति। मर्शनं स्पर्शः। (१)

---

वचनादीदृग्धातवोऽभियुक्तेन गणनीया अन्यथा मूलकारनिरूपितसंख्याव्याघातः स्यादिति बोध्यम्।

(१) तथाच—चन्द्रावतीतरङ्गाहाश्चीकयन्ति च यदपुरिति हलायुधः। १८२।

चक्क चिक्क चुक्क वर्त्तौ टकि क् वन्धेऽथ टीक टिक्।
ढौक त्रौक तिक्कङ् गत्यां तिक् नास्कन्दे वधे तकि।
दौस्थे तक् सहने हासे तर्कक् दीप्तौ त्वकिङ् गतौ॥

९। चक्क क् वर्त्तौ ⎫ (चक्क, चु, प)
१०। चिक्क क् वर्त्तौ ⎬ (चिक्क, चु, प)
११। चुक्क क् वर्त्तौ ⎭ (चुक्क, चु, प)

त्रयः कोपधाः क्रमादाद्यतृतीयपञ्चमस्वरमध्याश्च। वर्त्तिः पीड़नम्। क—चक्कयति, चिक्कयति, चुक्कयति शत्रुं शूरः।

१२। टकि क् बन्धे (टङ्क, चु, प) इ, क—टङ्कयति।

१३। अथ टीकङ् गत्यां ⎫ (टीक, भ्वा, आ)
१४। टिक्कङ् गत्यां ⎪ (टिक, भ्वा, आ)
१५। ढौकङ् गत्यां ⎬ (ढौक, भ्वा, आ)
१६। त्रौकङ् गत्यां ⎪ (त्रौक, भ्वा, आ)
१७। तिक्कङ् गत्यां ⎭ (तिक, भ्वा, आ)

तृतीयचतुर्थौ चतुर्दशस्वरिणौ, चतुर्थो रेफमध्यश्च। क—अटिटीकत्। अटिटेकत्। अडुढौकत्। अतुत्रौकत्। अतितेकत्। ङ—टीकते। टेकते। ढौकते (यान्तं वने रात्रिचरी डुढौके इति भट्टिः। २।२३) त्रौकते। तेकते।

१७। तिक्नास्कन्दे वधे (तिक्, स्वा, प) न—तिक्नोति।

१८। तकि दौस्थ्ये (तङ्क, भ्वा, प) इ—तङ्कते। दौस्थ्यं दुःखेन जीवनम्। तङ्कति दीनः दुःखेन जीवतीत्यर्थः।

---

वायवः स्पृशन्तीत्यर्थः। भट्टमल्लस्तु मर्षण इति मूर्द्धन्यषकारमध्यं पठित्वा क्षमार्थे-माह इत्यपि पाठ.।

**बुक्क कि श्वादिशब्देऽथ मस्क मक्कङ् गतौ मकिङ् ।
भूषे रेक्ङ शङ्कायां रक् लक क् स्वाद आपने ।**

२७। बुक्क कि श्वादिशब्दे ( बुक्क, चु, भ्वा, प ) पञ्चमस्वरी कोपधश्च। चुरादिपक्षे कथने, भ्वादिपक्षे कुक्कुरादिकर्तृकशब्देऽयमिति रमानाथः। कि—बुक्कयति वचो वक्रं लोकः, बुक्कति श्वा।

२८। अथ मस्क ङ् गतौ } ( मस्क, भ्वा, आ )
२९। मक्क ङ् गतौ } ( मक्क, भ्वा, आ )

आद्यो दन्त्यमध्य इति गदसिंहः। क्विपि संयोगादिलोपे मक्। मूर्द्धन्यमध्य इत्येके। क्विपि संयोगान्तलोपे मट्। शेषः कोपधः। ङ—मस्कते, मक्कते।

३०। मकि ङ् भूषे ( मङ्क, भ्वा, आ ) इ—मङ्क्यते। ङ—मङ्कते शारो जनम्। गत्यर्थोऽप्ययमिति रामः।

३१। रेक् ङ शङ्कायाम् (रेक, भ्वा, आ) शङ्का संशयारोपः। ङ—अरिरेकत्। ङ—रेकते पुरुषत्व स्थाणौ, स्थाणुर्वा पुरुषो वेति संशयमारोपयतीत्यर्थः। रिरेके।

३२। रक क् स्वाद आपने } ( रक, चु, प )
३३। लक क् स्वाद आपने } ( लक, चु, प )

स्वादो रसोपादानम् ( आपनं प्राप्तिः ) क—राकयति लाकयति मोदकं बालकः।

**लोक क् दीप्तौ लोक ङीच्चे वस्क वक्कङ् गतौ वकिङ् ।
कौटिल्येऽपि च टक् ङ स्वादाने वल्क क भाषणे ।**

३४। लोक क् दीप्तौ ( लोक, चु, प ) ङ—अलुलोकत्। क—लोकयति।

३४ । लोकृ दीप्ते (लोक, भ्वा, आ) अ—अलुलोकत् । ङ—लोकते । विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः इत्यादौ विलोकनं विलोकः पश्चात्तं करोतीति णौ साध्यम् ।

३५ । वस्कङ् गतौ } (वस्क, भ्वा, आ)
३६ । वष्कङ् गतौ } (वष्क, भ्वा, आ)

आद्यो दन्त्यमध्य इति गदसिंहः । क्विपि वस् । मूर्द्धन्यमध्य इत्येके । क्विपि वट् । शेषः कोपधः । ङ—वस्कते, वष्कते ।

३७ । वकिङ् कौटिल्येऽपि च (वङ्क, भ्वा, आ) कौटिल्यमिह कुटिलीभावः कुटिलीकरणञ्च । इ—वङ्क्यते । ङ—वङ्कते काष्ठं कुटिलं स्यादित्यर्थः । वङ्कते काष्ठं जनः कुटिलं करोतीत्यर्थः । अपिशब्दात् गतौ च । चकारः पादपूरणार्थः ।

३८ । वृक ङ तु आदाने (वृक, भ्वा, आ) ङ—वर्कते । (यङि) वरीवृक्यते । (वृको व्याघ्रविशेषः, वर्कते मेषादीनादत्ते इति कः)

३९ । वल्क क भाषणे (वल्क, चु, प) अन्तःस्थतृतीयोपधः । क—वल्कयति । भाषणं कथनम् ।

शकृञ शकनिरू शक्तौ शकि ङ त्रासशङ्कयोः ।
श्यक् स्रक् श्वकिङ शुक् सर्पे शीकङ् सेके च शीकर्कि ।
आमर्षे च स्रोकङ सङ्घाते शुल्क क् च सर्जने ।
वर्ज्जने श्वल्क क् च भाषे षेक ष्वक्क ङसर्पणे ।

४० । शक ञर शक्तौ } (शक, दि, उ)
४० । शकृनिरू शक्तौ } (शक, स्वा, प)

शक्तिर्दिवादिपक्षे क्षमा, स्वादिपक्षे सामर्थ्यम्। य, ञ—शक्यति शक्यते दुःखं दीनः। न—शक्नोत्यशक्यमप्यार्णो विजेतुं य इति हलायुधः। ६३। ङर—अशकत् अशाकीत् अशकीत्। लिदित्त्वे-नाङाभित्यं ङ इत्यन्ये। ऊ—शकिष्यति शक्ष्यति। पृथक् पाठादाद्यो न स्वादिः। द्वावेवाभिमावित्यन्ये। षष्ठस्वरानुबन्धः केषाञ्चिदनुरोधात्। द्वावेव सकर्मकौ। तथाच—शक्योऽस्य मन्यु-र्भवता विनेतुमिति रघौ। रजःपरिणामभेदो न शक्यते प्रत्याख्यातुमिति तत्त्वकौमुद्यां वाचस्पतिमिश्रः। शक्या मखेनापि सुदोऽमराणामिति नैषधम्।

४०। शकि ङ त्रासशङ्कयोः (शङ्क, श्वा, था) त्रासो भयं, शङ्का संशयारोपः। इ—शङ्कते व्याघ्राज्जनेन। ङ—शङ्कते पुरुषत्वं स्थाणौ, स्थाणुर्वा पुरुषो वेति संशयमारोपयतीत्यर्थः।

४१। श्वकिङ् सर्पे (श्वङ्क, भ्रा, था)
४२। श्रकिङ् सर्पे (श्रङ्क, भ्रा, था)
४३। श्लकिङ् सर्पे (श्लङ्क, भ्रा, था)
४४। शुक सर्पे (शुक, भ्रा, प)

चत्वारः क्रमाद्रेफान्तःस्थतीयवकारमध्यमसरयुक्ताद्याः। इ—श्वङ्कते। श्रङ्कते। श्लङ्कते। ङ—श्वङ्कते। श्रङ्कते। श्लङ्कते। शोकति। सर्पो गतिः।

४५। शीकृ ङ सेके च (शीक, श्वा, था) ऋ—अशिशीकत्। ङ—शीकते। चकारात् सर्पे च। (शीकन्ते शीकरैः सर्व्वे वायवो दक्षिणोदधेरिति हलायुधः। (८३)।

४५। शीक कि आमर्षे च (शीक, चु, भ्रा, प) कि—

शीकयति शीकति। आमर्षः स्पर्शः। तथाच 'चन्द्रावती तरङ्गार्द्रैः शीकयन्ति च यद्वपु'रिति हलायुधः। १८३। वायवः स्पृशन्तीत्यर्थः। भट्टमल्लस्तु आमर्षणा इति मूर्द्धन्यषमध्यं पठित्वा क्षमार्थमाह। चकारात् सेके च।

४६। श्लोकृ ङ सङ्घाते (श्लोक, भ्वा, आ) सङ्घात इह छन्दोविशिष्टवाक्यरचनम्। (१) क—अशुश्लोकत्। ङ—श्लोकते कविः।

४७। शुल्कक् च सर्ज्जने वर्ज्जने (शुल्क, चु, प) पञ्चमस्वरी अन्तःस्थतृतीयोपधः। क—शुल्कयति। चकारात् श्लोकृ ङ च (सर्ज्जनवर्ज्जनार्थ इत्यर्थः) सर्ज्जनमर्ज्जनम्। शुल्क श्लोक इत्येतयोरेतावर्थौ केचिन्न मन्येते।

४८। श्वल्कक् च भाषे (श्वल्क, चु, प) वकारयुक्ततालव्यादिरन्तःस्थतृतीयोपधः। क—श्वल्कयति। चकारात् शुल्कक् च (भाषार्थ इत्यर्थः) भाषः कथनम्।

४९। षेकृ ङ सर्पणे } (षेक, भ्वा, आ)
५०। ष्वक्क ङ सर्पणे } (ष्वक्क, भ्वा, आ)

द्वौ मूर्द्धन्यादी, शेषो वकारयुक्तादिः कोपधः। आद्यस्य षोपदेशविधौ वर्ज्जनेऽपीह पाठः कस्यचिदनुरोधात्। क—असिषेकत्। ङ—सेकते। ष्वक्कते। षिष्वक्किषते, षाष्वक्कते। दन्त्यविधावस्य वर्ज्जनान्न दन्त्यः। चान्द्रादयस्तु इमं (वकारशून्यं) पञ्चमस्वरिणं मत्वा षुक्कते, षुषुक्किषते, षोषुक्कते इत्याहुः।

---

(१) आनुपूर्व्व्या पदानां ग्रथनमिह सङ्घातः। श्लोकते कविः आनुपूर्व्व्या पदानि ग्रथ्नातीत्यर्थ इत्युक्तं कातन्त्रधातुवृत्तौ।

**ष्टक स्तक प्रतीघाते सीक व्यामर्षे सीकङ् ।**
**सेके स्वकि स्वस्कङ् च गत्यां स्वेक् सेक मित्यपि ।**

५१ । ष्टक् म प्रतीघाते } ( ष्टक, भ्वा, प )
५२ । स्तक् म प्रतीघाते } ( स्तक, भ्वा, प )

षोपो दन्त्यादिः । ननु सेक सीक स्रपित्यादिना दन्त्याजन्तसादीनां मूर्द्धन्यादित्वविधानात् कथमयं दन्त्यादिरिति चेन्न तत्रैव स्रप-ग्रहणेन दन्त्याजन्तसादीनाञ्च क्वचित् दन्त्यादित्वसूचनात् । अन्यथा स्रपेर्दन्त्यसकारान्तसादित्वेनैव सिद्धे तत्र तस्य पृथक्ग्रहणमनर्थकं स्यात् । तेन सान्त्व सामत्व सान्त्वने इत्यादीनामजन्तसादित्वेऽपि दन्त्यादित्वं सिद्धम् । न च स्रपेर्वकारस्य कथं दन्त्यत्वमिति वाच्यम्, चटूटौ यत्र विद्येते यो वः प्रत्ययसन्धिजः । अन्तःस्थं तं विजानी-यात् तदन्यो वर्ग्य उच्यते इति स्मरणात् । म—तिष्टकयिषति, तिस्तकयिषति । (१) ।

५३ । सीक कि व्यामर्षे (सीक, चु, भ्वा, प) कि—सीकयति, सीकति । व्यामर्षि स्पर्शे । प्रमादान्तु तालव्यादौ दृश्यम् । (२) ।

५३ । सीक ङ सेके ( सीक, भ्वा, आ ) ङ—असिसीकत् । ङ—सीकते ।

५४ । स्वकि ङ गत्या } ( स्वङ्क, भ्वा, आ )
५५ । स्वस्क ङ च गत्यां } ( स्वस्क, भ्वा, आ )

द्वौ क्रमाद्रेफवकारयुक्तादी, षोपो दन्त्यसोपधः । ङ—स्वङ्कते ।

---

(१) अत्र षोपदेशाभावादकृतसकारतया जिस्लो स्वेरितिनियमविषयत्वेऽपि किलादित्यनेन षत्वं न स्यादिति समस्तपदोदाहरणतात्पर्य्यम् ।

(२) व्यामर्षशब्द स्पर्शार्थ इति सीक कि व्यामर्षे च इत्यत्र प्रमाणीकृतमित्यर्थ ।

ङ—स्वङ्कते, स्वक्कते। चकारात् सीक ङ च (गत्यामित्यर्थः)।

५६। स्वेक ङ् गत्यां } (स्वेक, भ्वा, आ)

५७। सेक ङ ह्यत्यपि } (सेक, भ्वा, आ)

ऋ—असिस्वेकत, असिसेकत्। ङ—स्वेकते, सेकते। ह्यतिशब्दः पादपूरणार्थः। अपिशब्दात् गत्याम्।

## हिक्क ञ् कूजेऽथ हिक्क क् ङ हिंसे कान्तोनपष्टिका।

५८। हिक्कञ् कूजे (हिक्क, भ्वा, उ) कोपधः। ञ—हिक्कति हिक्कते। कूजोऽव्यक्तशब्दः। हिक्कायामेवेति भट्टमल्लः। हिक्कति लोकः।

५८। अथ हिक्क कङ हिंसे (हिक्क, चु आ) कोपधः। क, ङ—हिक्कयते।

## कान्तोनपष्टिका।

ऊनषष्टिरेव ऊनषष्टिका। (कान्ता चासौ ऊनषष्टिका चेति विग्रहः। अथवा कान्तानां ऊनषष्टिका) अत्र संख्यायामेको नास्तीति चिन्त्यम्। (१)।

---

## खान्तवर्गः।

## दुखिखोख्युख्युखगतावोखृ शोषालमर्थयोः।

---

(१) वोपदेवेन कान्ता यातव ऊनषष्टिरित्युक्तम्। परिगणनयात्र चष्टपञ्चाश-द्भवन्तीति सुधीभिर्भाव्यमिति।

१ । ऋख गतौ (ऋख, भ्वा, प)
१ । ऋखि गतौ (ऋङ्ख, भ्वा, प)
२ । ईखि गतौ (ईङ्ख, भ्वा, प)
३ । उखि गतौ (उङ्ख, भ्वा, प)
३ । उख गतौ (उख, भ्वा, प)

द्वावाद्यौ ह्रस्वादी, तृतीयो दीर्घादिः, शेषौ पञ्चमस्वरादी । पुनः पाठादाद्यो नेदनुबन्धः । (१) । ऋखति । ऋ—ऋङ्खते । ईङ्खते (२) उङ्खते । ओखति ।

४ । ओखृ शोषालमर्थयोः (ओख, भ्वा, प) लुङ्—मा भवान् ओचिखत् । अत्र द्वित्वात् प्राक्प्राप्तो ह्रस्व ऋदित्वान्न स्यात् । शोषः स्नेहरहितीभावः । ओखति पङ्कमातपात् । अलमर्थो भूषणं सामर्थ्यं निवारणञ्च ।

कखे कक्ख खक्ख हासे शख् गतौ द्राख ध्राखृ तु ।
शोषार्थे नख् मख मखि रखि रख् रिखि सर्पणे ॥

५ । कख् से हासे (कख, भ्वा, प)
६ । कक्ख हासे (कक्ख, भ्वा, प)
७ । खक्ख हासे (खक्ख, भ्वा, प)

द्वावन्त्यौ कोपधौ । शेषः खादिः । ण—कखयति । ए—अकखीत् । कक्खति । खक्खति ।

---

(१) मूले ऋख ऋखि इति पाठे परोऽनुबन्ध इकारो न कथं पूर्वस्येति महामिश्राचार्यमिदं वचनम् ।
(२) माधवकौमुद्योः ऋ्युङ्ख धातुस्थाने पाठः ।

८। गाख् गतौ ( गाख, भ्वा, प ) प्रगाखति।

९। द्राख् शोषार्थे } ( द्राख, भ्वा, प )
१०। ध्राख् च शोषार्थे } ( ध्राख, भ्वा, प )

आद्यौ दन्त्यवर्गतृतीयादिः। द्वौ रेफयुक्तौ। लङ—अद्राखत्, अध्राखत्। शोषार्थे शोषालमर्थयोरित्यर्थः।

११। नख सर्पणे ( नख, भ्वा, प )
१२। मख सर्पणे ( मख, भ्वा, प )
१२। मखि सर्पणे ( मङ्ख, भ्वा, प )
१३। रखि सर्पणे ( रङ्ख, भ्वा, प )
१३। रख सर्पणे ( रख, भ्वा, प )
१४। रिखि सर्पणे ( रिङ्ख, भ्वा, प )

द्वितीयतृतीययोश्चवर्गपञ्चमादी। प्रणखति। मखति। लृ—मङ्खते। लृ—रङ्खते। रखति। लृ—रिङ्खते।

**राख् लाखृशोषृवत्लिख् श लेखने लिखि खरू लखि।**
**वखि वख् खमि शाख् श्लाखृ व्याप्तौ खान्तैकविंशतिः॥**

१५। राखृ शोषृवत् } ( राख, भ्वा, प )
१६। लाखृ शोषृवत् } ( लाख, भ्वा, प )

लङ—अरराखत्। अललाखत्। शोषृवत् शोषालमर्थयोरित्यर्थः।

१७। लिख श लेखने ( लिख, तु, प ) श—लिखति पुस्तकं लेखकः। अयं विभाषया कुटादिरिति केचित् तेन "लिखितुं विश्वसृजोऽपि शक्तिशानि"रिति, लिखितव्यं लेखितव्यं लिखनं लेखनमित्यादि सिद्धम्।

१७। लिखि स्रपि } (लिङ्ख, भ्वा, प)
१८। लख स्रपि } (लख, भ्वा, प)
१८। लखि स्रपि } (लङ्ख, भ्वा, प)
१९। यखि स्रपि } (यङ्ख, भ्वा, प)
१९। वख स्रपि } (वख, भ्वा, प)

द्रु—लिङ्खते। लखति। द्रु—लङ्ख्यते। द्रु—यङ्ख्यते। वखति। स्रपि गतौ।

२०। श्राखृ व्याप्तौ } (शाख, भ्वा, प)
२१। श्लाखृ व्याप्तौ } (श्लाख, भ्वा, प)

द्वौ तालव्यादी। शेषोऽन्त:स्थतृतीययुक्तः। ऋ—अशशाखत्। अशश्लाखत्।

## खान्तैकविंशतिः।

(खान्ताश्चासावेकविंशतिश्चेति विग्रहः)।

---

## गान्तवर्गः।

### अगस वक्रगतेऽगीगि गत्यां कग्मे क्रियासु तु।

१। अगम वक्रगते (अग, भ्वा, प) म—अगयति। अगति सर्पः।

१। अगि गत्याम् } (अङ्ग, भ्वा, प)
२। द्रुगि गत्याम् } (द्रुङ्ग, भ्वा, प)

शेषस्तृतीयस्वरादिः। द्रु—अङ्ग्यते। द्रु—द्रुङ्ग्यते। द्रुङ्गितम्।

३। कग्मे क्रियासु (कग, भ्वा, प) म—कगयति। ए—अकगीत्। क्रियासु क्रियामात्रे। कगति लोकः गच्छतीत्याद्यर्थः।

जुगि त्यागे त्वगि गते त्वगि कम्पे गते तगि ।
स्खलने च तिग्नहिंसास्कन्दयोर्मंगि सर्पणे ॥

४। जुगि त्यागे ( जुङ्, भ्वा, प ) ङ्—जुङ्गते।

५। त्वगि गते ( त्वङ्, भ्वा, प ) ङ्—त्वङ्गते।

६। त्वगि कम्पे गते ( त्वङ्, भ्वा, प ) वकारमध्यः। ङ्—त्वङ्गते। कम्पचलनम्।

७। तगि स्खलने च ( तङ्, भ्वा, प ) ङ्—तङ्गते। चकारात् कम्पगत्योश्च।

८। तिग्न हिंसास्कन्दयोः ( तिग, स्वा, प ) न—तिग्नोति। आस्कन्दः कैश्चिन्न मन्यते।

९। मगि सर्पणे ( मङ्, भ्वा, प ) ) ङ्—मङ्गते।

मार्गक् संस्कारे च मार्गयन्वेपे शुगि वर्जने।

१०। मार्गक् संस्कारे च ( मार्ग, चु, प ) क—मार्गयति। चकारात् सर्पणे च।

१०। मार्गयन्वेपे (मार्ग, चु, भ्वा, प) अन्वेपोऽनुसन्धानम्। कि—मार्गयति मार्गति मुखं सुधीः। मार्गन्ता हे देवभावानित्यात्मनेपदं गणकृतानित्यत्वात्। (वरं वरेण्यो नृपतेरमार्गीदिति भट्टिः। १।१२)।

११। शुगि वर्जने ( शुङ्, भ्वा, प ) अन्तःस्थाद्यादिः। ङ्—शुङ्गते।

रग्मे शङ्के रगक् रकत् रग्रिग् खिगि गतौ लिगिक्।
चिवे लगि गतौ खञ्ज्ञे लग्मे सङ्के लगक् रके ॥

१२। रगे शङ्के (रग, भ्वा, प) अ—रगयति। ए—अरगीत्। शङ्कः शङ्का। रगति रोगी कुपथ्येभ्यः।

१२। रगक् रक्वत् (रग, चु, प) क—रागयति। रक्वत् स्वादाप्त्योः। (रकधातोर्यथा स्वादापने अर्थौ तथास्यापीत्यर्थः)।

१२। रगि गतौ (रङ्ग, भ्वा, प)
१३। रिगि गतौ (रिङ्ग, भ्वा, प)
१४। लिगि गतौ (लिङ्ग, भ्वा, प)

इ—रङ्गते। इ—रिङ्गते। इ—लिङ्गते। (लक्ष्मीमालिङ्गति स्नेहात् यः सदा धरणीपतिरिति हलायुधः। २४१)।

१४। लिगिक् चित्रे (लिङ्ग, चु, प) इ, क—लिङ्गयति शब्द स्त्रीपुंनपुंसकैः शाब्दिकः, चित्रं करोतीत्यर्थः। (आलिङ्गयति रत्नांशुजालैव मणिकुट्टिममिति हलायुधः। २४१)।

१५। लगि गतौ खञ्जे (लङ्ग; भ्वा, प) इ—लङ्गते। खञ्जो गतिवैकल्यम्।

१५। लगे सङ्गे (लग, भ्वा, प) अ—लगयति। ए—अलगीत्। लगत्यधर ओष्ठे।

१५। लगक् रके (लग, चु, प) क—लागयति। रकै स्वादाप्त्योः। (रकधातुवत् स्वादाप्तिरूपार्थद्वयवाचक इत्यर्थः) रके इति रकक् स्वाद आपाने इत्यस्य औरनित्यत्वे भावेऽलिरूपम्।

वगि खञ्जे वुगि त्यागे वलग श्यगि स्नगि व्रजे।

१६। वगि खञ्जे (वङ्ग, भ्वा, प) इ—वङ्गते।
१७। वुगि त्यागे (वुङ्ग, भ्वा, प) इ—वुङ्गते।

१८। वल्ग व्रजे (वल्ग, भ्वा, प)
१९। श्रगि व्रजे (श्रङ्ग, भ्वा, प)
२०। श्लगि व्रजे (श्लङ्ग, भ्वा, प)

आद्योऽन्तःस्थतृतीयोपधः, शेषौ क्रमाद्रेफान्तःस्थतृतीययुक्ततालव्यादी। वल्गति। अयं प्लुतगताविति भट्टमल्लः। इ—श्रङ्गते। इ—श्लङ्गते।

## षग ष्टग सग स्थगे संवृतौ स्वगि सर्पणे।

२१। षगे संवृतौ (षग, भ्वा, प)
२२। ष्टगे संवृतौ (ष्टग, भ्वा, प)
२३। सगे संवृतौ (सग, भ्वा, प)
२४। स्थगे संवृतौ (स्थग, भ्वा, प)

द्वावाद्यौ मूर्द्धन्यादी, द्वितीयस्तमध्यः षयोगाट्टः, अन्त्यौ दन्त्यादी, शेषःथमध्यः। स—सिषगयिषति, तिष्टगयिषति, सिसगयिषति, तिस्थगयिषति। ए—असगीत्, अस्तगीत्, अस्थगीत्। (असगीदिति षोपदेशाषोपदेशयोरुभयोरुदाहरणम्) द्वितीयो दन्त्यवर्गद्वितीयमध्य इति केचित्। (ष्टक इत्यत्र ठक इति केषाञ्चिन्मतमित्यर्थः) तिष्ठगयिषति, अतिष्ठगत्।

२५। स्वगि सर्पणे (स्वङ्ग, भ्वा, प) वकारमध्यः। इ—स्वङ्गते।

## ह्रग ह्लगे संवरणे गान्ताः स्युः सप्तविंशतिः।

२६। ह्रगे संवरणे (ह्रग, भ्वा, प)
२७। ह्लगे संवरणे (ह्लग, भ्वा, प)

द्वौ कमाद्रेफान्तःस्वतृतीयमध्यौ । म—ऋगयति, ऋगयति । ए—अऋगीत, अऋगीत् ।

गान्ताः स्युः सप्तविंशतिः ।

---

## घान्तवर्गः ।

अर्घ मूल्ये ऽघि ङ गतौ निन्दारम्भजवेष्वथ ।
स्याद् गगघ घगघ हसने चघ तिघ् दघ घातने ।

१ । अर्घ मूल्ये ( अर्घ, भ्वा, प ) अर्घति गा गोपः । ( मूल्यं कथयाम् ) ।

२ । अघिङ् गतौ निन्दारम्भजवेषु ( अङ्घ, भ्वा, आ ) ङ्—अङ्घते । ङ—अङ्घते । जवो वेगगतिः । अङ्घते वायुर्वेगेन गच्छतीत्यर्थः । जवे एव केचित् पठते ।

३ । अथ स्याद् गगघ हसने ( गगघ, भ्वा, प )
४ । घगघ हसने ( घगघ, भ्वा, प )
अथ शब्द आनन्तर्ये । द्वौ कण्ठ्यवर्गतृतीयोपधौ । गगघति । घगघति ।

५ । चघ घातने ( चघ, स्वा, प )
६ । तिघ घातने ( तिघ, स्वा, प )
७ । दघ घातने ( दघ, स्वा, प )
म—चघ्नोति, तिघ्नोति, दघ्नोति । दघ घाते इति कौमराः पठन्ति । तदेकवाक्यत्वे कर्त्तव्ये घातनमिति हन्त्यर्थस्य पाणिक चुरादित्वेन (१) हन्तेः स्वार्थणौ रूपं बोध्यं हननमित्यर्थः । किञ्च

(१) घातको हनिभावार्थो थकितो वा चुरादय इत्युक्ते ।

हिंसन इति पाठेनैवेष्टसिद्धौ घातनपाठो हिंसाप्रेरणार्थः स्यान्न वेति काकदन्तान्वेषणवद्विफलं, त्रयाणामेव कातन्त्रादावसम्मतत्वात् ।

दघि त्यागेऽवने द्राघृ ङ श्रमायामशक्तिषु ।

८। दघि त्यागेऽवने ( दङ्घ, भ्वा, प ) इ—दङ्घते । अवनं रक्षणम् ।

९। द्राघृ ङ श्रमायामशक्तिषु ( द्राघ, भ्वा, आ ) श्रमः खेदः, आयामो दीर्घकरणं, शक्तिः सामर्थ्यम् । लङ—अद्राघत । ङ—द्राघते जनः, खिद्यतीत्यर्थः । द्राघते वस्त्रं जनो दीर्घं करोतीत्यर्थः । द्राघते धावितुं वाजी, समर्थः स्यादित्यर्थः । ( द्राघते वपुरत्यर्थं यद्वियोगे ममोद्यतामिति हलायुधः । १०९ ) (१)

ङधाघृ शक्तौ मघिङ कैतवाघ्यर्थयोर्मघि ।
भूपे रघिक् भासि रघिङ् गमने राघृ लाघृङ ।
शक्तौ लघिङ्ङ्भुग्गत्योर्लघि शोषे लघिक् त्विषि ।

१०। ङधाघृ शक्तौ ( धाघ, भ्वा, आ ) ङ—धाघते । लङ—अधाघत ।

११। मघिङ कैतवाघ्यर्थयोः ( मङ्घ, भ्वा, आ ) कैतवमिह कितवक्रिया अक्षक्रीडनादिः । इ—मङ्घते । ङ—मङ्घते अक्षैः कितवः । अघ्यर्थौ गतिनिन्दारम्भजवाः । (२) कैतवजवयोरेवायमिति केचित् ।

---

(१) कविरहस्ये १०९ श्लोके द्राघतीति परस्मैपदप्रयोगोऽप्यस्ति तत् सुधीभिर्भाव्यम् ।

(२) अघिङ गतौ निन्दारम्भजवेष्विति माधवोक्तत्वात् ।

११। अघि भूषे ( अङ्घ, भ्वा, प ) इ—अङ्घते ।

१२। रघिक् भासि ( रङ्घ, चु, प ) इ, क—रङ्घयति। भासि दीप्तौ ।

१२। रघिङ् गमने ( रङ्घ, भ्वा, आ ) इ—रङ्घते । ङ—रङ्घते। (१)

१३। राघ ङ शक्तौ } ( राघ, भ्वा, आ )
१४। लाघ ङ शक्तौ } ( लाघ, भ्वा, आ )

ऋ—अरराघत् । अललाघत् । ङ—राघते। लाघते। शक्ति सामर्थ्यम ।

१५। लघिङ् भक्षुगत्योः ( लङ्घ, भ्वा, आ ) इ—लङ्घते। ङ—लङ्घते। अभुक् भोजनाभावः। तथाच "ये गुणा लङ्घते प्रोक्तास्ते गुणा लघुभोजन"इति वैद्यकम्। लङ्घते उपवासे इत्यर्थः ।

१५। लघि शोषे ( लङ्घ, भ्वा, प ) इ—लङ्घते। शोष इहाल्पीकरणम्। "य व्याधिरसिदीप्ताग्निं कदाचिन्न न लङ्घते"ति हलायुध। ६७। गत्यर्थम् "अन्ये त्वलङ्घिषु शैलानि"ति भट्टौ। १५।३०।

१५। लघिक् त्विषि ( लङ्घ, चु, प ) इ, क—लङ्घयति। त्विषि दीप्तौ।

वघि ङ्ङ्घ्यर्थके श्रिघ्याघ्राणे श्लाघृ ङ कत्थने ।

---

(१) रङ्घते रेफादिरयं, उणादौ रघुरित्युक्त कातन्त्रधातुवृत्तौ। मल्लिनाथेन तु अवेक्ष धातोर्गमनार्थमर्थविस्तकार नाम्ना रघुमालसम्भवमिन्नसटीकायां वघि धातुना निष्पादित ।

१६। वषिङ् आध्ययके (वङ्घ, श्वा, आ) ङ्—वङ्घते।
ङ—वङ्घते। आध्यर्थको गतिनिन्दारम्भजवाः। (आध्यर्थाना समूह इति कपि आध्यर्थकः) जवे एव केचित् पठन्ते। (१)

१७। शिघ्याघ्राणे (शिङ्घ, श्वा, प) ङ्—शिङ्घते। (शिरस्युपशिशिङ्घ च, इन्द्रजितं रावण इति शेषः, इति भट्टिः ।१४।५२।)।

१८। श्लाघ ङ कत्थने (श्लाघ, श्वा, आ) अन्तःस्थतृतीयधुक्तताळव्यादिः। कत्थनं प्रशंसा। ङ—अशश्लाघत्। ङ—श्लाघते गुणिनं गुणी। (श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिप इति भट्टिः ।८।७२)।

## ष्टिघ ङास्कन्दे पष् सघ हिंसे षान्तास्तु विंशतिः।

१६। ष्टिघ ङास्कन्दे (ष्टिघ, स्वा, आ) आस्कन्द् आस्कन्दनम् (आक्रमणम्) अभियोग इति भट्टमल्लः। न, ङ—स्तिघ्नुते (शत्रुं बली)। (२) तिष्टिघे।

२०। पघ हिंसे } (पघ, स्वा, प)
२०। सघ हिंसे } (सघ, स्वा, प)
शेषो दन्त्यादिः। न—सघ्नोति। असीषघत्, असीसघत्।

षान्तास्तु विंशतिः।

---

(१) चषि वषि गत्याक्षेपे। गत्याक्षेपो वेगगतिरिति कातन्त्रधातुवृत्तौ।
(२) मूले स्तिघ्नुते नहीं पाठ्य दस्युदाहृतम्। तदर्थमङ्गतिम् चिन्तनीयोऽ्यम्।

## चान्तवर्गः।

**अर्चक् पूजे अर्च चाचि चाचि अच् अु गतेऽञ्चु च।**
**श्लिष्टोक्तौ चाञ्च क व्यक्ता वुचि थ्वं समवायने॥**

१। अर्चक् पूजे ( अर्च्च, चु, प ) क—अर्चयति। गोवर्द्धनस्त्विममात्मनेपदिनं मत्वा "विभ्राजसे मकरकेतनमर्चयन्ती"त्यादि स्खलितमित्याह।

१। अर्च च (अर्च, भ्वा, उ) अ—अर्चति अर्चते। चकारात् पूजे। ( प्राणार्चुरर्च्यां जगदर्चनीयमिति भट्टौ।२।२०। भक्त्यार्चयति यो विप्रान् गुरून् देवांस्तथार्चति। अर्चन्ते चरणौ यस्य मौलिरत्नांशुभिर्नृपा इत्युभयत्र हलायुधः।११६। )।

२। अचि च (अञ्च, भ्वा, प) इ—अञ्चते। चकारात् पूजे। अञ्चु गतिपूजनयोरिति पूजार्थो यः स एवायम्। इदित्पाठः पूजाया न लोपाभावार्थः। उदनुबन्धाभावश्च (१) लुभश्चपूजार्था-श्चेत्यादिना क्त्वाप्रत्ययस्य निष्ठायाश्च नित्येड्विधानात्।

२। अचि अ गते ⎫ ( अञ्च, भ्वा, उ )
२। अच् अु गते ⎭ ( अच्, भ्वा, उ ) इ—अञ्चते। अ—अञ्चति अञ्चते। अ—अचति अचते। उ—अचित्वा अक्त्वा। (न्यञ्चते मत्स्य एं मोञ्चो यथाग्याञ्चन्ति चारव इति हलायुधः।।१२३)।

---

(१) ग्रन्थान्तरे अञ्चुगतिपूजनयोरित्युदात्तादावेव गत्यर्थे पूजार्थे च उदनुबन्ध एव एवानुपात् पठित। अत्र तु पूजार्थे उदनुबन्धो नास्तीति तद्विरोधमाशङ्क्याह उदनुबन्धाभावश्चेति। पूजार्थत्वाद्धातो लुभश्चेत्यनेन क्त्वाप्रत्ययस्य निष्ठेड्विधानमाश्रित्य तदभावे उदनुबन्धस्य फलाभावात् अन्यथा अञ्चु गतौ अञ्चु पूजे इति गणद्वयपाठोऽपि स्यादिति।

२। चस्तु च म्लिटोक्तौ च (चञ्, भ्वा, प) (चस्तुति म्रक-टम्) ञ—अश्लिला चक्ता। चस् चेति चकारात् पूर्व्वौ च म्लिटोक्तौ। म्लिटोक्तो चेति चकारादस्तु गते च। म्लिटोक्तिरव्यक्तशब्दः।

३। चञ्च क व्यक्तौ (चञ्च, चु, प) व्यक्तिरिह विशेषणं (विशिष्टीकरणम्) क—चञ्चयति बुद्धिं सुधीः विशिनष्टीत्यर्थः। (चञ्चयन्ति सदा यत्र गुणाः सम्मोतिशायिन इति हलायुधः। १२३)।

४। उचिर्य समवायने (उच, दि, प) ऊरुादिः। इर्—औचत् औचीत्। अयं पुषादिरिति दुर्गः। (समवायनं मेलनम्) उच्यति केशः स्नानात्।

## ऋच् श स्तुत्यां कुच ञ्रोधपर्ककौटिल्यलेखने।

५। ऋच् श स्तुत्याम् (ऋच, तुदा, प) श—ऋचति। आनर्च्च।

६। कुच ञ् रोधपर्ककौटिल्यलेखने (कुच, भ्वा, प) ञ—कोचः कुचः। रोधः क्रियानिरोधः जडीभाव इत्यर्थः। चस्मिन्नर्थे एव प्रायो वर्त्तते। यस्मिन् समुदिते राज्ञि जनः सङ्कोचति चिता-विति हलायुधः। १४०। (१) पर्कः सम्पर्कः।

## कुच् तारशब्दे क्रुच शि सङ्कोचे कच् रवे कचि।
## कच् ङ बन्धत्विषोः क्रुञ्च गत्यां कुञ्च च वक्रणे।
## तौच्क्ये खच ग भूतिपूत्योस्तप्तौ ग्लुञ्चु दूर्गतौ॥

६। कुच तारशब्दे (कुच, भ्वा, प) तारशब्द उच्चैःशब्दः। कोचति ढक्का। भट्टमल्लस्तु तारे शब्दे च कोचतीति नानार्थे पठति। तन्मते तारश्चिक्कणता। कोचनि काञ्चीं वणिक् चिक्कणयतीत्यर्थः।

(१) समुदिते इत्यत्र प्रमुदिते इति जन इत्यत्र तम इति च क्वचित् पाठ।

११ । ग्लुञ्चु दुर्गतौ ( ग्लुच, भ्वा, प ) अन्तःस्थतृतीययुक्त-पञ्चमस्वरौ । उ—ग्लुञ्चित्वा ग्लुक्ता । इर्—अग्लुचत् अग्लुञ्चीत् ।

ग्रुच ग्लुचिरु चौर्य्ये च चञ्चुतौ चर्च्च केङ्समः ।

१२ । ग्रुचिरु चौर्य्ये च　( ग्रुच, भ्वा, प )
१३ । ग्लुचिरु चौर्य्ये च　( ग्लुच, भ्वा, प )

द्वौ क्रमाद्रेफान्तःस्थतृतीययुक्तपञ्चमस्वरिणौ । इर्—अग्रुचत् अग्रोचीत् । अग्लुचत् अग्लोचीत् । उ—ग्रोचित्वा ग्रुक्ता । ग्लोचित्वा ग्लुक्ता । चकारात् गतौ च ।

१४ । चञ्चुतौ ( चञ्च, भ्वा, प ) उ—चञ्चित्वा चक्ता । इति गतिः । ( चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्येति वेणीसंहारम् ) ।

१५ । चर्च्च केङ्समः ( चर्च्च, चु, प ) इङ्समः अध्ययने ( चर्च्चधातुः अधीङ्ल अध्ययने इतिगणपठितस्य इङ्धातोः समानार्थक इत्यर्थः ) ।

चर्च्च जर्च्च झर्च्च शुक्तौ भर्त्से तनुचु ध सङ्कुचि ।

१५ । चर्च्च शुक्तौ भर्त्से　( चर्च्च, तु, प )
१६ । जर्च्च शुक्तौ भर्त्से　( जर्च्च, तु, प )
१७ । झर्च्च शुक्तौ भर्त्से　( झर्च्च, तु, प )

त्रयो रेफोपधाः । श—चर्च्चती चर्च्चन्ती । जर्च्चती जर्च्चन्ती । झर्च्चती झर्च्चन्ती । गुणस्थानरहितानां तुदादिपाठफलन्तु शतन्तानामादीयोरिति नुमो विभाषा, वेदेशूच्चारणभेदश्च । भर्त्सनम् ।

१८। तनूचु ध सङ्कचि ( तनूच, भ्वा, प ) उ—तञ्चित्वा तक्ता। ध—ततचिम व्योम विस्तृतम्।

**तनूच् त्वञ्चुतौ त्वच् श इत्यां पिच्चक् छेदे डु ओपृपच।**
**पाके पचौ ङ पचि ङ व्यक्तीकारे पचिक् ततौ।**

१८। तनूचु दूतौ } ( तनूच, भ्वा, प )
१९। त्वनूचु दूतौ } ( त्वनूच, भ्वा, प )

शेषो वकारयुक्तः। उ—तञ्चित्वा तक्ता। त्वञ्चित्वा त्वक्ता। दूति गतिः।

२०। त्वच् श इत्याम् ( त्वच, तु, प ) वकारयुक्तो दन्त्यवर्गाद्यादिः। श—त्वचन्ती त्वचती। इतिः संवरणम्। त्वचति कवचेन वीरः। ( त्वचति आवृणोतीति त्वक्, त्वचेः क्विप् )।

२१। पिच्चक् छेदे ( पिच्च, चु, प ) चद्वयान्तः। क—पिच्चयति। ( नागसीसकयोगेष्टवप्राणि त्रपुपिच्चटमित्यमरः। पिच्च्यते कुट्यते इति शकटादित्वोऽटन्निति क्षीरस्वामी )।

२२। डु ओपृ पच पाके ( पच, भ्वा, उ ) पाको विक्लित्त्यनुकूलव्यापारः। डु—पक्त्रिमम्। उ—पचति पचते तण्डुलानोदनं लोकः। ओ—पक्वा। ध—पचा।

२२। पचौ ङ व्यक्तीकारे } ( पच, भ्वा, आ )
२३। पचि ङ व्यक्तीकारे } ( पञ्च,भ्वा, आ ) औ—पक्ता।

ङ—पचते। इ—पञ्चते। ङ—पञ्चते स्वगुणं भिक्षुकः।
(यो वाग्मी वादिना मध्ये वाचमुच्चैः प्रपञ्चते इति हलायुधः।१४०)।

२२। पचिक् ततौ ( पञ्च, चु, प ) ततिर्विस्तारः। इ, क—पञ्चयति धीरो ग्रन्थार्थम्। ( प्रपञ्चयन्ति यत्कीर्तिं दिङ्मुखेषु महाजना इति हलायुधः। १४० )।

पृच् कि संयमने पृच् धी च सम्पर्के पृचील् ङ च।

२३। पृच् कि संयमने (पृच, चु, आ, प) संयमनं बन्धनम्। कि—पर्चयति पर्चति दुष्टं राजा।

२३। पृच् धी च सम्पर्के (पृच, रुधा, प) सम्पर्क इह सम्पृक्तीकरणं सम्पृक्तीभावच। ध—पृणक्ति मधुना गरम्। सम्पृणक्ति न पापिभिरिति हलायुधः। २८। ई—पृक्तः। पपर्च। (वागर्थाविव सम्पृक्ताविति रघुः) चकारात् पृच कि च (चौरादिक-पृचधातुरपि सम्पर्कार्थक इत्यर्थः। तथाच—सम्पर्चयति न क्षुद्रैर्न सम्पर्चति वस्तैरिति हलायुधः। २८)।

२३। पृचील् ङ च (पृच, अदा, आ) ई—पृक्तः। ल, ङ—पृक्ते। परीपृच्यते। चकारात् सम्पर्के। सचेह सम्पृक्तीभावः। सम्पृक्ते नाभियस्तैवं इति हलायुधः। २८। सम्पृक्ते मधुना चूर्णं भियगिति तु अन्तर्भूतण्यर्थत्वादिति चतुर्भुजः।

मचि कुञ्चाय पृत्यर्चाभाःसु मच् ङ च कल्कने। दम्भे शाठ्ये मुच् मुचि ङ् च मुचक मोचे मुच् लृश् पत्नौ। मोचे म्रुच् म्लुच् दुर्गत्यां म्रुञ्च म्लुञ्च मञ्च मुञ्च च॥

२४। मचिङ्कुञ्चायपृत्यर्चाभाःसु (मच, भ्वा, आ) इ—मञ्चते। ङ—मञ्चते। कुञ्चाय चर्चाभावः। (धृतिधारणं, भादीप्तिः। ग्रथनं मञ्चपर्यङ्केत्यमरः)।

२४। मच् ङ च कल्कने दम्भे शाठ्ये (मच, भ्वा, आ) कल्कनमिति कल्कं करोतीति णौ रूपं चूर्णीकरणमित्यर्थः। ङ—मचते तण्डुलं पिला। चकारात् मचि ङ च (मचिधातु-रपि कल्कनदम्भशाठ्येष्वर्थेषु वर्त्तते इत्यर्थः)।

२५। मुच ङ च } (मुच, भ्वा, आ)
२५। मुचि ङ च } (मुच, भ्वा, आ) द्वौ पञ्चमस्वरिणौ।
ङ—मोचते। इ—मुञ्चते। ङ—मुञ्चते। पुनः पाठात् पूर्व्वौ नेदित्। तथाच "एक एवेत् पाठबलाद्बाध्योऽनेकेषु धातुषु। बाधे लाघवमिष्टं हि स प्रति प्राक्प्रसञ्जित इति वोपदेवः। अस्यार्थः—(अनेकेषु) द्वयोर्बहुषु धातुषु वा, पाठबलात्; एकेन निर्व्वाहेऽपि सजातीयस्य पुनः पाठबलात्, एक एव (१) इत् बाध्यः सम्बन्धरहितः कार्य्यः। हि यस्मात् बाधे सम्बन्धाभावे लाघवमिष्टम्। सर्व्व-धातुना सम्बन्धे एकेनैवेष्टसिद्धौ पृथक्पाठो गौरवमिति सम्बन्धाभावे लाघवम् (२)। स बाधः प्रति प्राक्प्रसञ्जितः (प्राक्प्रसक्तिर्यस्य स तं प्रति भवतीति शेषः) पूर्व्वप्रसक्तस्यानुबन्धस्य पूर्व्वप्रसक्तेन धातुना सम्बन्धो नास्तीति। यत्र तु एकेन(धातुना) निर्व्वाहो न स्यात् तत्र एकोऽपि (अनुबन्धः) न बाध्यते इति बोध्यम्। तेन भ्रमिर्, भ्रन्सय, भ्रमुअण चाले इत्यादौ सर्व्वेऽनुबन्धाः पूर्व्वस्य स्युरेव। चकारात् कल्कन दम्भयाद्येषु।

२५। मुच क मोचे (मुच, चु, प) क—मोचयति। मोचस्त्यागः। (यस्य प्रमोचयति पापचयस्य काये इति हलायुधः। ४८)।

२५। मुच् ऌ षपञ्जौ मोचे (मुच, तुदा, उ) मोचस्त्यागः। ऌ—अमुचत्। ष, प, ञ—मुञ्चति मुञ्चते धनं दाता। औ—

---

(१) एवकारेण इकारोऽत्र पूर्व्वस्य न बाध्य इत्यर्थः।

(२) अत्र मुचि ङ च इत्यस्य इकारेण सह मुच ङ च इत्यस्य यदि सम्बन्धः स्यात्तदा द्वावप्यात्मनेपदिनौ धातू स्याताम्। तर्हि पृथक् पाठः पौनरुक्त्यरूप गौरवमावहति। तत्सम्बन्धाभावे तु तथाविधगौरवाभावाल्लाघवमिति तात्पर्य्यं बोध्यम्।

मोक्ता । बन्धनरहितीभावेऽकर्मकोऽयम् । आलानात् मुक्तो गजः, अत्र कर्त्तरि क्तः। एवं पापात् मुक्त इत्यादौ पापबन्धनात् मुक्त इत्यर्थः।

२६। म्रुचु दूर् गत्याम् } (म्रुच, भ्वा, प)
२७। म्लुचु दूर् गत्याम् } (म्लुच, भ्वा, प) द्वौ क्रमाद्रेफान्तःस्थतृतीययुक्तौ। उ—म्रोचित्वा म्रुक्ता, म्लोचित्वा म्लुक्ता। दूर्—अम्रुचत् अम्रोचीत्। अम्लुचत् अम्लोचीत्।

२८। म्रुञ्च च (म्रुञ्च, भ्वा, प)
२९। म्लुञ्च च (म्लुञ्च, भ्वा, प)
३०। मञ्च च (मञ्च, भ्वा, प)
३१। मुञ्च च (मुञ्च, भ्वा, प)
द्वावाद्यौ क्रमाद्रेफान्तःस्थतृतीययुक्तादी। तृतीय आद्यस्वरी। अन्ये पञ्चमस्वरिणः। सर्वे ओद्यवर्गशेषाद्या नोपधाः। उ—म्रुञ्चित्वा म्रुक्ता। म्लुञ्चित्वा म्लुक्ता। मञ्चित्वा मक्ता। मुञ्चित्वा मुक्ता। चकारात् गत्याम्। कातन्त्रादौ द्वितीयो न दृश्यते। रेफयुक्ताद्यस्वरी म्रञ्च इत्यधिकोऽपि दृश्यते।

## टु डु याचृञ् याचने रिच् कि सम्पर्कवियोगयोः।

३२। टुडु याचृञ् याचने (याच, भ्वा, उ) याचनमात्मने दानार्थं प्रेरणम्। टु—याचथुः। डु—याचित्रिमम्। ऋ—अययाचत्। ञ याचति याचते नृपं भूमिं विप्रः। ग्रहणार्थं प्रेरणेऽपि—याचति वित्तं गुरवे शिष्यः।

३३। रिच् कि सम्पर्कवियोगयोः (रिच, चु, भ्वा, प) कि—रेचयति रेचति। रिक्के रिपुर्यदाक्रान्तो धनैर्मन्त्रैश्च रेचति। रेचयन्ति च यन्नारीनयनान्यश्रुवारिभिरिति हलायुधः। ९८।

**रिचिर्ऋधौ विरेके रुच् ङ ल्ट प्रीतिप्रकाशयोः ।**

३३ । रिचिर्ऋधौ विरेके ( रिच, रुधा, ञ ) विरेकः पौनः-पुन्येन पुरीषोत्सर्ग इति चतुर्भुजः । इर्—अरिचत् अरैचीत् । ञ, ध—रिणक्ति रिङ्क्ते अतिसारकी । औ—रेक्ता । (हलायुधोदाहरणन्तु प्राक्दर्शितम् ) ।

३४ । रुच् ङ ल्ट प्रीतिप्रकाशयोः ( रुच्, भ्वा, आ ) प्रीतिरिच्छानुरागविशेषः । यत्र यस्यानुरागस्तस्य सम्प्रदानत्वम् । ङ—रोचतेऽन्नं बुभुक्षवे । ल्ट—अरुचत् । ( इयमिष्टगुणाय रोचता रुचिरार्था भवतेऽपि भारतीति भारविः । २।५ ) ।

**लोचृक भासि लोचृ ङीक्षे लुञ्चापनयने वचौ ।**
**वाचि वच् कच सन्देशे वञ्चौ वाचि विचिर्लिधौञ् ।**
**पृथक्त्वे व्यचशि व्याजे सम्बन्धे काङ् वञ्च वञ्चने ॥**

३५ । लोचृक् भासि ( लोच, चु, प ) ऋ—अलुलोचत् । क—लोचयति । भासि दीप्तौ । तथाच चुरादौ ( कातन्त्रे इति शेषः ) घट पुट लुट तजि पिजि लजि भजि लघि त्रसि पिसि कुसि ( १ ) दशि घट घटि दडि बर्ह वेलृह गुप धूप विच्छ चीव पुथ लोक लोचृ णद कुप तर्क वृधु वृतु भासार्था इति प्राहु । भासार्था दीप्त्यर्था इति धातुप्रदीपः । स्वमतेऽपि तर्कदीप्त्यादिषु स्फुटनिर्देशादुन्नियदेते दीप्त्यर्था एव । किन्तु पुरुषोत्तमशरणदेवौ भाषार्था इति मूर्द्धन्यषकारं मत्वा एतान् वचनार्थानाहतु ।

---

( १ ) कुशि इत्यपि । क्रसि इत्येके इति कातन्त्रधातुवृत्तौ ।

३५। लोचृ ङ दर्शने ( लोच, भ्वा, आ ) ईतः पर्यालोचनं प्रणिधानमिति यावत्। अ—अलुलोचत्। ङ—लोचते कार्य्यं सुधी। ( आलोचते सदा नीतिमिति हलायुध. । २४८ )।

३६। लुञ्चापनयने ( लुञ्च, भ्वा, प ) (अपनयनं दूरीकरणम्) सोऽलुञ्चीत् कर्णनासिकमिति भट्टिः। १५।५७।

३७। वचौ वाचि ( वच, भ्वा, प ) औ—वक्ता। अयं सेमित्येके। वचिता। न वचत्यनृतं वच इति हलायुधः। ८४।

३८। वञ्चक् च सन्देशे (वच, चु, प) सन्देशो वचनविशेषः। वाचयत्यखिला लिपिमिति हलायुधः। ८४। चकारात् वचोच ( सन्देशार्थक इत्यर्थः )।

३७। वचू वाचि ( वच, अदा, प ) ल—वक्ति। औ वक्ता। नास्यन्तोर्ध्व. प्रयोग इति जौमराः। अस्मादन्तिविभक्तिर्न प्रयुज्यते इत्यालङ्कारिकाः।

३८। विचिर्लि औञ् पृथक्त्वे (विच, जुहो, रुधा, उ) इर्—अविचत् अवैक्षीत्। लि, ञ—वेवेक्ति वेविक्ते मूर्खात् पण्डित पृथक् स्यादित्यर्थः। विज इति जान्तो यः स एव चान्तोऽपि मद्यते कस्यचिदनुरोधात्। तेन निजा खेरेणुरित्यस्य हत्तौ विजग्रहणेनैवास्य ग्रहणात् खेर्गुणः। ध, ञ—विनक्ति विङ्क्ते। विविनचूमि दिवः सुरानिति भट्टिः। ६।३६। पृथक्करोमीत्यर्थः। औ—वेक्ता।

३९। व्यच षि व्याजे सम्बन्धे (१) (व्यच, तुदा, प) व्याज-

---

(१) सम्बन्धे इत्यत्र सम्भ्रमे इति क्वचित् पाठ। पाणिनीये कातन्त्रे च व्यच व्याजीकरणे इत्येक एवार्थ पठित।

स्खलः । णि—विचति सन्तं स्खलस्खलयतीत्यर्थः । अविचीत् ( अत्र व्यचोनिरञ्जिट्सीति ञिः ) विव्याच ।

४० । कङ वञ्च वञ्चने (वञ्च, चु, आ) वञ्चनं विसंवादः । मिथ्या-कथनमिति वररुचिः । क, ङ—वञ्चयते साधुं नीचः ( यो न वञ्चयते किञ्चित् सदा सत्यपरायणः इति हलायुधः । १७१ ) ।

वञ्चु गत्यां वर्च्चङ् दीप्तौ व्रश्चूश् छेदे वृचीध् वृतौ ।

४० । वञ्चु गत्याम् ( वञ्च, भ्वा, प ) क्त—वञ्चित्वा वक्त्वा ।

४१ । वर्च्चङ् दीप्तौ ( वर्च्च, भ्वा, आ ) ङ—वर्च्चते । ( वर्च्च-स्तेजः । ( १ ) ।

४२ । व्रश्चूश्छेदे ( व्रश्च, तुदा, प ) दन्त्यसोपधः, चयोगात्तालव्यः । तेन क्विपि व्रश्चाजेति षत्वे निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात्तालव्यस्य दन्त्यत्वे सयोगादेः सस्य लोपे व्रट् इति । तथाच—"न कारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्च षाट्टवर्गस्तवर्गजः" इति वोपदेवः । अस्यार्थः—धातुषु मध्ये झलि झसि परे अनुस्वारपञ्चमौ नकारजौ ज्ञेयौ, तालव्यशकारश्च दन्त्यसकारजातः, मूर्द्धन्यषकारात् परटवर्गोऽपि तवर्गजातो ज्ञेय इति । एवं शिष्ठास्थाने इत्यादीनाञ्च षकारादिप्रकृतित्वे तस्थौ इत्यादि बोध्यम् । ञ—अव्रश्चीत् अव्राक्षीत् । श—वृश्चति । ( वृश्चते छिद्यते इति मथेः सकि वृच इत्यमर-टीकायाम् । वव्रश्चुराजुघूर्णुश्चेति भट्टिः । १४।७७ । हरिराक्षसाः परस्परमिति शेषः ) ।

४३ । वृचीध् वृतौ ( वृच, रुधा, प ) ईृ—वृक्नः । ध—वृणक्ति । वरीवृच्यते । वर्ज्जनार्थीयमित्येके ।

---

( १ ) अयमोष्ठ्यादिरपीति कातन्त्रधातुवृत्तौ ।

**श्वच श्वच शचिङ् गत्यां शचङ् वाचि शुचिर्यञी ।**
**शौचे विशरणे क्लेदे शुच् शोके षच् ङ सेचने ॥**

४४ । श्वचङ् गत्याम् (श्वच, भ्वा, आ)
४५ । श्वचिङ् गत्याम् (श्वञ्च, भ्वा, आ)
४५ । शचिङ् गत्याम् (शञ्च, भ्वा, आ) द्वावादौ वकारयुक्तादौ । पुनः पाठाद्द्योनिदनुबन्धः ङियस्तु शर्म्मे । एक-एवेत् पाठबलादिति नियमात् । किन्त्वत्र मध्यमोऽपीदनुबन्धो भ्रान्तैः पठ्यते तद्धेयम्, अन्यथा आम्रेडितानुबन्धत्वादाद्यस्य ङानु-बन्धानुपपत्तेः । ङ—श्वचते । इ—श्वञ्चते । शञ्चते । ङ—श्वचते । शचते ।

४५ । शचङ् वाचि (शच, भ्वा, आ) ङ—शचते । (पुलो-मजा शचीन्द्राणीत्यत्र शच व्यक्तायां वाचि अच्, गौरादित्वादी-वित्यमरटीकायाम्) ।

४६ । शुचिर्यञी शौचे विशरणे क्लेदे (शुच, दिवा, उ) शौचं शुद्धिः । विशरणं भेदः । क्लेद आर्द्रभावः । इर् अशुचत् अशोचीत् । य, ञ—शुच्यति शुच्यते लोक स्नानात् । शुच्यति गात्र शाम्यः । शुच्यति वस्त्रमम्भसा । ई—शुक्तः । शुचिर् पूतीभावे इति माधः । रमानाथस्तु एतदनुरोधादेतानर्थान् व्याख्याति । (१) ।

४६ । शुच् शोके (शुच, भ्वा, प) तालव्यादिः । शोचति । शोक पुत्रादेर्मरणाद्दुःखानुभवः । किं शोचते हाभ्युदये वताश्चा-

---

(१) शौचे विशरणे क्लेदे पूतीभावोऽत्र कथ्यते इति वोपदेव इत्युक्तं रमानाथेन ।

निति भट्टिः । ३।१२। प्रियतमा मां शोचते इति महानाटके गणकृतानित्यत्वादात्मनेपदम् । (१) ।

४७। षच् ङ सेचने ( षच, भ्वा, आ ) मूर्द्धन्यादिः । ङ—सचते जलं मेघः ।

षच् सम्बन्धे पञ्चगतौ पिच् पषौञ् चरणेष्टु च ।
ङ प्रसादे चकारान्ताः पञ्चाशत् समुदीरिताः ॥

४७। षच् सम्बन्धे ( षच्, भ्वा, प ) सचति । ( सक्तुः ) (२) ।

४८। पञ्च गतौ ( पञ्च, भ्वा, प ) सञ्चति ।

४९। षिच पषौ ञ चरणे ( षिच, तुदा, उ ) प, श. ञ—सिञ्चति सिञ्चते । औ—सेक्ता । सिषिचुरवनिमम्बुधारा इति भारविः ।

५०। ष्टुच ङ प्रसादे ( ष्टुच, भ्वा, आ ) मूर्द्धन्यादिस्तमध्यः । प्रसादः प्रसन्नीभावः । ङ—स्तोचते जलं शरदि । तोष्टुच्यते । षस्याधोमूर्द्धन्य णा इति केचित् स्तोचते तोष्टुच्यते ।

चकारान्ताः पञ्चाशत् समुदीरिताः ।

( चकारान्ता धातवः पञ्चाशत्संख्यकाः कथिताः ) ।

---

(१) व्यतीहारे आत्मनेपदमिति क्वचित् पाठः ।

(२) समवाये च इत्यते 'अपि वाचिगुणेन च यत् सचते' इत्युक्तं कातन्त्र-धातुवृत्तौ । तत्र सम्बन्धार्थे आत्मनेपदित्वेन पाठः सुधीभिर्भाव्यः ।

आञ्छि आयामेऽयोछि शुञ्छे उछीश् बन्धसमापने।
वर्ज्जनेऽतिक्रमेऽथ ऋच्छॅश् मूर्त्तौ गमनमोहयोः॥

१। आञ्छि आयामे (आञ्छ, भ्वा, प) इत्यादौ (गणपाठे छकारस्य) द्वित्वाभावः प्रकृतिभ्रमनिरासार्थः। रू—आञ्छ्यते। आयामोऽदीर्घकरणम्। आञ्छति कटं शिल्पी। (तायदाञ्छति पद्मणा नाभ्यता धूलिपङ्क्तिरिति हलायुध। २१६)।

२। उयोछि शुञ्छे (उञ्छ, तुदा, प) एतदाद्यास्त्रयो ह्रस्वाद्याः। रू—उञ्छ्यते। श—उञ्छन्ती उञ्छती। उञ्छ उद्धृतधान्यशेषापहरणम्। सुखम यस्समुञ्छन्ति यद्द्वेषे व्रतिनो द्विजा इति हलायुध। (१) उञ्छ स्फोटनमित्येके।

२। उछीश् बन्धसमापने वर्ज्जनेऽतिक्रमे (उछ, तुदा, प) रू—उच्छः। श—उच्छन्ती उच्छती। चत्वारोऽर्थाः। समापने उच्छति रात्रिः। भरण्या व्युष्टायामुषसि जनयामास तनयमिति। व्युष्टाया समाप्तायामित्यर्थः।

३। ऋच्छॅश् मूर्त्तौ गमनमोहयो (ऋछ, तुदा, प) श—ऋच्छन्ती ऋच्छती। मूर्त्तिः कठिनीभावः, मूर्त्तिः काठिन्यकाययोरित्यमरात्। ऋच्छति घृतं कठिनं स्यादित्यर्थः। ऋच्छति दृष्टो

(१) उछि उञ्छे। कतीयस्वरादयमोऽस्मि। उञ्छन स्फोटनमित्येके। उद्धृतधान्यशेषापहरणमित्यन्ये। सुखम यस्समुञ्छन्ति यद्द्वेषे व्रतिनो द्विजा इति हलायुध इत्येव कातन्त्रधातुवृत्तावपि। राजश्री शौरीन्द्रमोहनठाकुरमुद्रित कविरहस्ये तु सुखं यस समुञ्छन्ति यद्द्वेषे वतिनो द्विजा। मोञ्छन्ति मधुरेनैवामरेन हीनता प्रजा इत्येव पाठो दृश्यते।

गच्छति मुह्यति वेत्यर्थः। मोहस्थाने इन्द्रियप्रलयं पठन्ति प्राञ्चः। सच्छति इन्द्रियं प्रलीयते इत्यर्थ इति रमानाथः।

**जर्छ झर्छश भर्त्सोक्त्योः प्रछौश् ज्ञीप्से चर्चो पिच्छ।**
**मिच्छश् बाधे म्लेच्छ्कि देश्योक्तौ मुर्छो मोह उच्छ्रये॥**

४। जर्छश भर्त्सोक्त्योः ( जर्छ, तुदा, प )

५। झर्छश भर्त्सोक्त्योः (झर्छ, तुदा, प) श—जर्च्छन्ती जर्च्छती।, झर्च्छन्ती झर्च्छती। भर्त्सस्सम्भर्जनम्।

६। प्रछौश ज्ञीप्से ( प्रछ, तुदा, प ) ज्ञीप्सो ज्ञातुमिच्छा, ज्ञपकर इत्यस्येव ज्ञानपक्षे निष्पादनात्। औ—अप्राक्षीत्। श—पृच्छति वार्त्तां गुरु शिष्यः। (पप्रच्छ कुशलं राज्ञे राज्याश्रममुनिं मुनिरिति रघौ। १। ५८)।

७। चर्चो पिच्छ श बाधे ( पिछ, तुदा, प )

८। मिछश बाधे (मिछ, तुदा, प) श—पिच्छन्ती पिच्छती। मिच्छन्ती मिच्छती। बाधो विहतिः।

९। म्लेछ कि देश्योक्तौ (म्लेछ, चु, उभ, प) अन्तःस्थतृतीययुक्तादिः। देश्या ग्राम्या उक्तिर्देश्योक्तिरसंस्कृतकथनमित्यर्थः। कि—म्लेच्छयति म्लेच्छति मूढ़। अन्तर्वह्नमसौ विद्वान् म्लेच्छति ह्रतव्रतः। न म्लेच्छयति सर्वज्ञो विवादे वादिभिः सहेति हलायुधः। १८७। अनेकार्थत्वादव्यक्ताव्देऽपि। तथाच अथ म्लिष्टमविस्पष्टमित्यमरः। म्लेछ व्यक्तायां वाचीति प्राञ्चः। तत्र रमानाथस्तु "म्लेच्छति पटुव्यक्तं वदतीत्यर्थः। अव्यक्तायामिति पाठे कुत्सितायां वाचीत्यर्थः। तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्त्तिता इति भाष्यवचनेन नञोऽप्राशस्त्यार्थत्वा"दित्यन्तमाह।

१०। मुर्च्छा मोह उच्छ्राये (मुर्छ, भ्वा, प) पवर्गाद्यादिर्द्वन्त्यौ। तेन क्विपि राच्छोर्लोप इति छलोपे मूः मुरौ मुरः। क्त—मूर्च्छितं मूर्त्तं तेन। प्रमूर्च्छितः प्रमूर्त्तः सः (आकारादिढे वा) मोहो ध्यानरहितोभावः। उच्छ्रायो वृद्धिः। मूर्च्छति रोगः। मुमूर्च्छ सत्यं रामस्य समानव्यसने हराविति रघुः।

## युच्छ प्रमादे लाञ्छि लच्छ लक्षणे विच्छक त्विषि।

११। युच्छ प्रमादे (युच्छ, भ्वा, प) अन्तःस्थप्रथमादिः पञ्चमस्वरौ। प्रमादोऽनवधानता। युच्छति पापे साधुः। ओष्ठ्यवर्गाद्यादिरिति रमानाथः। (पुच्छ इत्यर्थः) पचादित्वादनि पुच्छो लाङ्गूलम्। ओष्ठ्यवर्गाद्यादिरिति त्रिलोचनः। (मुच्छ इत्यर्थः) मुच्छति।

१२। लाञ्छि लक्षणे } (लाञ्छ, भ्वा, प)

१३। लच्छ लक्षणे } (लच्छ, भ्वा, प) पूर्व्वौ द्वितीयस्वरौ। इ—लाञ्छ्यते। लच्छति इयं चकोरं गोपः (चिह्नयुक्तं करोतीत्यर्थः) (कलङ्काङ्कौ लाञ्छनञ्चेत्यमरः)।

१४। विच्छक त्विषि (विच्छ, चु, प) क—विच्छयति। त्विषि दीप्तौ।

## विच्छश गतौ वाञ्छि कामे ख्वुर्छ स्फुर्च्छत विस्मृतौ।

१४। विच्छश गतौ (विच्छ, तुदा, प) विच्छायति विच्छायते। आयान्तत्वादुभयपदमिति वोपदेवः। (सनः पमे धोर्व्वायात्) पक्षे श—विच्छति, विच्छन्ती, विच्छती। (यत्र विच्छति तद्गृहे यत्र विच्छायति स्वयम्। विच्छायते ततोऽन्यत्र नृपतीना सुखाश्रयः। इति हलायुधः। १२०)। (१)

(१) विच्छाययति तत्रान्यो नृपतीना सुखाश्रयमिति पाठस्तु चिन्त्यः।

१५। वाछि कामे (वाञ्छ, भ्वा, प) इ—वाञ्छति धनं जनेन।

१६। स्तुर्च्छी विस्मृतौ } (स्तुर्च्छ, भ्वा, प)

१७। स्फुर्च्छी विस्मृतौ } (स्फुर्च्छ, भ्वा, प) द्वौ दन्त्यादी, ङ्कस्विनौ, क्रमेण वकारौष्ठ्यवर्गद्वितीययुक्तौ च। क्विपि स्तूः स्तुरौ स्तुरः। स्फूः स्फुरौ स्फुरः। भा—स्तूर्च्छितं स्तूर्णं तेन। प्रस्तूर्च्छितः प्रस्तूर्णः सः। स्फूर्च्छितं स्फूर्णं तेन। प्रस्फूर्च्छितः प्रस्फूर्णः सः। (भावादिष्टे वा) स्तूर्च्छति स्फूर्च्छति कथां मद्यपः।

## ऊर्च्छी कौटिल्यके ह्रीछ लज्जे छान्तोनविंशतिः।

१८। ह्रुर्च्छी कौटिल्ये (ह्रुर्च्छ, भ्वा, प) ङ्कस्वी। क्विपि ह्रूः ह्रुरौ ह्रुरः। भा—ह्रूर्च्छितं ह्रूर्णं तेन। प्रह्रूर्च्छितः प्रह्रूर्णः सः। ह्रूर्च्छति खलः कुटिलः स्यादित्यर्थः। ह्रूर्च्छति चौरः अपसरतीत्यर्थ इति धातुप्रदीपः।

१९। ह्रीछ लज्जे (ह्रीछ, भ्वा, प) रेफयुक्ताद्यचतुर्थस्वरी। ह्रीच्छति वधूः।

छान्तोनविंशतिः।

( संख्यासङ्गतिस्तु पूर्ववदिति )।

---

जान्तवर्गः।

अज क्षेपे गतेऽजिक् तु भास्यर्ज्ज त्वर्ज्जनेऽर्ज्जक।
संस्कारेऽञ्जू घ जि व्यक्तिगतिम्रक्षण ईजि तु ॥
ईज् ङ कुत्से गतावुब्जशार्ज्जवेऽथोर्ज्जिक् जीवने।
चलेऽथार्ज्जिङ् गतिस्थैर्य्योर्ज्जनार्ज्जन ऋज्यिङ् भजि ॥

१। अज क्षेपे गतौ (अज, भ्वा, प) अजति। (क्षेपे अजनम्। गतौ वातमजः)।

१। अजिक् भासि (अञ्ज, चु, प) इ, क—अञ्जयति। भासि दीप्तौ। (व्यञ्जयन्ति च गोदानं यद्देशे याज्ञिका द्विजा इति हलायुधः। २२८)।

२। अर्ज्ज तु अर्ज्जने (अर्ज्ज, भ्वा, प) अर्ज्जनमलब्धस्य लाभः। यथयार्ज्जति यः स्थिरमिति हलायुधः। १००।

२। अर्ज्जक संस्कारे (अर्ज्ज, चु, प) क—अर्ज्जयति किमपि लोकः, संस्करोतीत्यर्थः। प्रति यत्ने इति माघः (१)। अर्ज्जयति धनं मर्त्तिजन इति रमानाथः। (सर्व्वोऽप्यर्ज्जयति द्रव्यमात्मनः प्रीतिहेतवे इति हलायुधः। १००)।

३। अञ्जू षजि व्यक्तिगतिम्रक्षणे (अञ्ज, रुधा, प) ऊ—अञ्जिष्यति आङ्क्ष्यति। ष—अनक्ति। जि—अक्तोऽस्ति। व्यक्तिः स्फुटीकरणम्। शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यतामिति माघः। १।२६। अभ्यनक्ति तैलेन गात्रं जनः।

४। ईजि तु ङ कुत्से गतौ } (ईञ्ज, भ्वा, आ)

४। ईज ङ कुत्से गतौ } (ईज, भ्वा, आ) द्वौ दीर्घादी। इ—ईञ्जते। ङ—ईञ्जते, ईजते। कुत्सः कैश्चिन्न मन्यते।

५। उज आर्ज्जवे (उज, तुदा, प) कुशादिरोष्ठ्यवकारोपधः। तेन "र्व्वनचूतयो"ति दीर्घो न स्यात्। "स्वादौ नषद्र"इति उजिजिषति। ऊर्णूञ्जोर्दीर्घपाठसामर्थ्यात् स्वरादेर्न दीर्घ इति

(१) अर्ज्ज प्रतियत्ने रघुभो वातव्ये।

केचित् (१)। दन्त्यवकारवत्त्वात् न्यूजतीत्यत्र दीर्घ इत्यपरे। य—उब्जन्ती उब्जती। आर्ज्जवमवक्रीभावः। उब्जति साधुरवक्रः स्यादित्यर्थः। (२)।

६। अथोर्ज्जक् जीवने बले (ऊर्ज्ज, चु, प) दीर्घादिः। क—ऊर्ज्जयति जनो जीवति बली स्यादित्यर्थः। (ऊर्ज्जस्वलः स्यादूर्ज्जस्वी य ऊर्ज्जोतिशयान्वित इत्यमरः। ऊर्ज्जक् जीवने बले चेत्यस्मात् सर्वोरित्यः सर्वाद्याप्, ऊर्ज्जोबलं पराक्रमो वा तदतिशय-युक्तस्तत्र द्वे इति तट्टीकाकारः। ऊर्ज्जयन्ति च दानेन सम्मानेन पदातय इति हलायुधः। २१५)।

७। अथर्ज्जङ् गतिस्थैर्य्योर्ज्जनार्ज्जने (ऋज, भ्वा, आ) ङ—अर्ज्जते। ऊर्ज्जनं जीवनं बलवद्भावश्च। (ऋजुः, ऋजेः कुरित्यमरटीकायाम्)।

७। ऋजिङ् भृजि (ऋञ्ज, भ्वा, आ) ऋसादिः। भृजि भर्ज्जने। इ—ऋञ्जते। ङ—भृञ्जते तण्डुलान् लोकः।

एजृङ् दीप्तावेजृ कम्पे ओलजुत्क्षेपणे ऋजिङ्।
तञ्चि त्वजि त्वजप् सङ्गागत्योः चीज् कूज हिक्कने॥

८। एजृङ् दीप्तौ (एज, भ्वा, आ) क—मा भवानेजिजत्। ङ—एजते।

---

(१) उब्जेर्दस्ये बलोपधेति व्यञ्जनि (चयि) बकारलोपे ओजो बलमिति कातन्त्रधातुवृत्तिः।

(२) ऋषभच् तयोति सूत्रेण रेफोपरे उकारस्य दीर्घसम्भवेऽपि ऊर्ण ऊर्ज्ज इत्यनयोर्दीर्घपाठेन बकारे रेफे च परे हुस्वादीनां धातूनामादिस्वरस्य दीर्घो न स्यादिति ज्ञापितं तेन उब्जयानर्तस्यादिरेवेति बोपाल्लिदायय इति स्फुटितार्थं।

८। एजृ कम्पे (एज, भ्वा, प) घ—मा भवानेजिजत्। एजति वायुना वृक्षः। (एजते राजचिह्नैर्य एजयत्यखिलं जगदित्युभयत्र हलायुधः। २६६)।

९। ओलजुत् क्षेपणे (ओलज्ज, भ्वा, प) अन्तःस्थतृतीय-मध्यः। इ—ओलज्जति धूलिर्वायुना।

१०। ध्वजिक् तर्क्के (ध्वज, चु, प) तक्को दुःखेन जीवनम्। इ, क—ध्वञ्जयति दीनः।

१०। ध्वजिप् म ङ दागत्योः } (ध्वञ्ज, भ्वा, श्रा)
१०। ध्वजप् म ङ दागत्योः } (ध्वज, भ्वा, श्रा)

ङ—ध्वञ्जते। ष—ध्वञ्जा। येमुक्तात् स्वरोरित्यनेनैवेष्टसिद्धौ धातुबन्धस्वरपर्य्यन्तघटादेर्ङ इति प्राचीनमतानुवादार्थः। म—अध्वञ्जि अध्वाञ्जि ध्वञ्जं ध्वञ्जं ध्वाञ्जं ध्वाञ्जम्। मानुबन्धबलादनुपधाया अपि दीर्घः। स्वमते तु अत्र दीर्घविधिरुपधां नापेक्षते। ङ—ध्वजते। ध्वजते। ष—ध्वजा। म—ध्वजयति। दा दानम्।

११। कूज हिक्कने } (कूज, भ्वा, प)
१२। कूज हिक्कने } (कूज, भ्वा, प)

हिक्कनमव्यक्तशब्दः। सखेदस्यैवाव्यक्तशब्दे कौजेः प्रयोग इति रक्षितः। कौजति सखेदो जनः। कूजति कोकिलः।

कर्ज्ज पीडे कुज खुजस्तेये खर्ज्ज व्यथार्त्तयोः।

१३। कर्ज्ज पीडे (कर्ज्ज, भ्वा, प) कर्ज्जति (दुष्टं राजा)।

१४। कुजु स्तेये } (कुज, भ्वा, प)
१५। खुजु स्तेये } (खुज, भ्वा, प) च—कोजित्वा कुक्ता। कुजि अव्यक्तशब्दे इति चान्द्राः। कुञ्जति। कुञ्जः। च—खोजित्वा खुक्ता। स्तेयं चौर्य्यम्।

१६। खर्ज व्यथास्त्रजोः (खर्ज, भ्वा, प) खर्जति। खट्-मार्जनम्।

## खज् मन्थे खजि पाङ्गुल्ये गज् मदे गजि च स्वने।

१७। खज् मन्थे (खज, भ्वा, प) मन्थो विलोडनम्। खजति जलं मत्स्यः। (दर्व्विः कम्बिः खजाकाचेत्यमरः। खज मन्थे इत्याकच् इति तट्टीकाकारः)।

१७। खजि पाङ्गुल्ये (खञ्ज, भ्वा, प) इ—खञ्जते। पङ्गुः खोड़ः, भावप्रधाननिर्द्देशात् पङ्गुत्वमिति यावत्; सोऽस्यास्तीति चूडादित्वाल्लः, पङ्गुलः, तस्य भावः पाङ्गुल्यं, खोटनमित्यर्थः। खञ्जति खोड़ः। भावप्रधाननिर्द्देशो यथा—वमुवर्णं इति कातन्त्र-सूत्रम्। उवर्णो वकारत्वं प्राप्नोतीत्यर्थः। (१)।

१८। गज मदे (गज, भ्वा, प) गजति। (गजः)।

१८। गजि च स्वने (गञ्ज, भ्वा, प) इ—गञ्जते। चकारात् गज च। (गजधातुरपि स्वनार्थः)।

## गज गर्जक् च गर्जौर्जौ गर्द्दे गृजि गृजध्वनौ।

१८। गजक् च } (गज, चु, प)
१६। गर्जक् च } (गर्ज, चु, प) क—गाजयति। क—गर्जयति। चकारात् स्वने।

---

(१) द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनमिति पाणिनिसूत्रम्। तत्र द्व्येकयोरित्यस्य द्वित्वैकत्वयोरित्यर्थः भावप्रधाननिर्द्देशात्। अन्यथा द्व्येकयोरिति स्थाने द्व्येकेष्विति स्यात्। यद्यपि खजि पङ्गुत्वे इति पाठे नास्ति क्वचित् प्रमाण-स्तथापि तदुदाहरणीयं प्रयोगाभिप्रायम्।

१९। गर्जोर्जाशब्दे ( गर्ज, भ्वा, प ) ऊर्जयते और्निपत्यत्वे सेमक्तात्परोरित्यप्रत्यये ऊर्जा बलं तत्करणकशब्द ऊर्जाशब्दः। गर्जति सिंहः।

२०। ष्टजि ध्वनौ ( ष्टञ्ज, भ्वा, प )
२०। ष्टज ध्वनौ (ष्टज, भ्वा, प) द्वौ सप्तमस्वरिणौ। इ—ष्टञ्जते। गर्जति।

गुज व्यस्मिन् गुजि गुज कूजने जजि जज् युधि।

२१। गुज व्यस्मिन् ( गुज, तुदा, प ) यि—गुजति, अगुजीत्, जुगोज। व्यस्मिन् ध्वनौ।

२१। गुजि कूजने ( गुञ्ज, भ्वा, प )
२१। गुज कूजने (गुज, भ्वा, प) द्वौ पञ्चमस्वरिणौ। इ—गुञ्जते। गोजति। कूजनमव्यक्तशब्दः। गुञ्जति भ्रमरः कुञ्जे।

२२। जजि युधि ( जञ्ज, भ्वा, प )
२२। जज् युधि ( जज, भ्वा, प ) इ—जञ्जते। जजति। युधि योधने।

जर्जश् वाग्भर्त्सयोर्गिजलि द्रुऔ यमे खिजिल् ङ च।
शुद्धौ तुजिक् भापटार्थे तुजि प्राणे वले तुज।
हिंसे ङ् तर्जक् तर्ज भर्त्से त्यजौ हानौ तिजक् शिते॥

२३। जर्जश् वाग्भर्त्सयोः ( जर्ज, तुदा, प ) रेफोपधः। य—जर्जन्ती जर्जती। भर्त्स तर्जनम्। (१)।

---

(१) जर्ज परिभाषणतर्जनयोरिति कातन्त्रे।

२४। णिज् लि ह्रुभ्रौं पोषे ( णिक्ष्, ह्वा, उ ) लि, ञ— नेनेक्ति नेनिक्ते। ह्र—अनिजत्. अनैक्षीत्। भौ—नेक्ता। (यत्पादौ मौलिरत्नांशुजालैर्नेनेक्ति राजकमिति हलायुधः।(१०)।

२४। णिजि लङ् च शुद्धौ ( णिञ्ज्, अदा, आ ) शुद्धिरिह शुद्धीकरणम्। ह—निञ्जाते। ल, ङ—निङ्क्ते। प्रणिङ्क्ते दक्षिणीयाना विप्राणां चरणौ च य इति हलायुधः। १३०। चकारात् णिजलि इर्भ्रौं च ( शुद्ध्यर्थक इत्यर्थः )।

२५। तुजिक् भाषट्टार्थे ( तुञ्ज, चु, प ) पञ्चमस्वरी। इ, क—तुञ्जयति। भा दीप्ति', पट्टार्थो निकेतनहिंसाबलदानानि। (१)।

२५। तुजि प्राणे बले ( तुञ्ज, भ्वा, प ) पञ्चमस्वरी। इ— तुञ्जति। प्राणो जीवनम्। हिंसायाञ्चायमिति केचित्।

२५। तुज हिंसे ( तुज, भ्वा, प ) तोजति।

२६। ङ तर्जक् भर्त्से } ( तर्ज, चु, आ )

२६। तर्ज भर्त्से } ( तर्ज, भ्वा, प ) ङ, क—तर्जयते। तर्जति। भर्त्सनं तर्जनम्। तामतर्जयदम्बरे इति रघुप्रयोगस्तु तर्जनं तर्जसं करोतीति ञो साध्यः। ( २ )।

२७। त्यजौ हानौ ( त्यज, भ्वा, प ) औ—अत्याक्षीत्। हानिर्वर्जनम्। त्यजति दुष्टलोकं सुधीः।

२८। तिजक् णिते ( तिज, चु, प ) क—तेजयति। णितं तीक्ष्णीकरणम्। ( तेजयन्ति यमाकस्य सर्व्वथा च सतां गिर-

---

( १ ) पट्टक् निकेतने हिंसे बले दाने इति टान्तवर्गे पट्टधात्वर्थो वक्ष्यते। पट्टहिंसादाननिकेतनेष्विति कातन्त्रे। पट्टहिंसायामिति धातुप्रदीपः।

( २ ) तर्जते योऽहि भूषणाय तर्जयति भञ्जनमिति हलायुधप्रयोगो वैपर्य्यं प्रतिपादयतीति सुधीभिर्भाव्यम्।

मिति हलायुधः । १६ । सतां गिरं आकर्ण्य वसुदा यं राजानं तेजयन्ति तीक्ष्णं कुर्वन्ति जना इति शेषः )।

तिजङ् क्षान्तौ च तञ्चुध सङ्कोचे ध्रजि ध्रज् भ्रजि ।
भ्रज् ध्वजि ध्वज् भ्रिजगता वोनज् ह्री ह्रीयि पूजक ।
पूजे पिजिक् भापद्वार्थे पिजि लङ् वर्णपूजयोः ॥

२८। तिजङ् क्षान्तौ च ( तिज, भ्वा, आ ) क्षान्तिः सहनम् । ङ—तितिक्षते दुःखं धीरः । चकारात् निशाने च । तत्र तेजते इति वोपदेवः । अत्र तिजादयो न प्रयुज्यन्त इति रमानाथः । ( तत्तितिक्षितमिदं मया मुनेरिति भारविः । १३।६८ )।

२९। तञ्चु ध सङ्कोचे ( तञ्च, भ्वा, प ) उ—तञ्चित्वा तक्त्वा । ध—ततञ्चिम व्योम विस्तृतम् ।

| | | |
|---|---|---|
| ३०। ध्रजि गतौ | ( ध्रञ्ज, भ्वा, प ) | |
| ३०। ध्रज गतौ | ( ध्रज, भ्वा, प ) | |
| ३१। भ्रजि गतौ | ( भ्रञ्ज, भ्वा, प ) | |
| ३१। भ्रज गतौ | ( भ्रज, भ्वा, प ) | |
| ३२। ध्वजि गतौ | ( ध्वञ्ज, भ्वा, प ) | |
| ३२। ध्वज गतौ | ( ध्वज, भ्वा, प ) | |
| ३३। भ्रिज गतौ | ( भ्रिज, भ्वा, प ) द्वावाद्यौ सप्तमस्वरियौ। | |

ततो द्वौ रेफयुक्तौ। ततो द्वौ वकारयुक्तौ। शेषो रेफयुक्तस्तृतीयस्वरो। इ—ध्रञ्जते। धर्जति। इ—भ्रञ्जते। भ्रजति। इ—ध्वञ्जते। ध्वजति। भ्रेजति। (केतनं ध्वजमस्त्रियामित्यमरः। ध्वजगतावच् इति, ध्वजयति चिह्नयति ज्ञापयति योधविशेषं, अन्तर्भावितण्यर्थं इति च तट्टीकाकारः। )

३४। घो नज् ङी व्रीडि (नज्, भ्वा, आ) ओ, ई—नग्नः। ङ—नजते। व्रीडि लज्जायाम्।

३५। पूजक् पूजे (पूज, चु, प) षष्ठस्वरी। क—पूजयति गुरुं लोकः।

३६। पिजिक् भाषद्वार्थे (पिञ्ज, चु, प) इ, क—पिञ्जयति। भा दीप्तिः, षट्‌र्थो निकेतनहिंसाबलदानादिः।

३६। पिजि लङ् वर्णपूजयोः (पिञ्ज, अदा, आ) इ—पिञ्जते। ल, ङ—पिङ्क्ते। (वर्णः पिङ्गलवर्णीभावः। पिङ्क्ते चक्षुरिति कश्चित्)।

स्यात् पृजिल् ङ च सम्पर्के भज ओ भागसेवयोः।

३७। पृजिल् ङ च सम्पर्के (पृञ्ज, अदा, आ) सप्तमस्वरी। इ—पृञ्जते। ल, ङ—पृङ्क्ते। चकारात् पिजि लङ् च। एतौ काश्चिन्न मन्यते।

३८। भज ओ भागसेवयोः (भज, भ्वा, उ) अ—विभजति विभजते धनं भ्राता। ओ—अभाक्षीत् कृष्णं साधुः।

भजक् पाके भजिक् भासि भ्रेजृङ् च भ्राज णृङ्टु च।

३८। भजक् पाके (भज, चु, प) क—भाजयति। विश्राणने इति प्राञ्चः। विश्राणनं दानम्। (भाजयति भोगं भृत्याय भूपतिः। भाजी पक्वव्यञ्जनविशेषः)।

३८। भजिक् भासि (भञ्ज, चु, प) इ, क—भञ्जयति। भासि दीप्तौ।

३९। भ्रेजृङ् च (भ्रेज, भ्वा, आ) ऋ—अबिभ्रेजत्। ङ—विभ्रेजे। चकारात् भासि।

४०। भ्राज णृङ् टृ च ( भ्राज, भ्वा, आ ) रेफयुक्तः। ण—भ्रेजे बभ्राजे। अनुबन्धबलात् संयोगादित्वेऽप्याकारस्यैत्वम्। ऋ—अबिभ्रजत् अबभ्राजत्। ङ—भ्राजते। टृ—भ्राजथुः। चकारात् भासि।

भुजोऽघौ वक्रणे भुज्धौ त्राणे भक्ष्ये भ्रजी ङ तु।
भर्ज्जने भ्रस्ज औघ् पाके भञ्जो घौ मोटने मुजि।
मुज् मञ्ज् मार्जक् म्रजाध्वन्योर्म्लज् लूप् मुड्डौ म्लनूप् कि तु।
भूपे च मस्जो मज्जौ स्यात् स्नाने युजकि संयमे ॥

४१। भुजोऽघौ वक्रणे ( भुज, तुदा, प ) वक्रणमिति वक्रं करोतीति णौ रूपम्। घो—भुग्नः। अ—भुजति लता वायुः। औ—भोक्ता।

४१। भुज् धौ त्राणे भक्ष्ये ( भुज, रुधा, प ) ध—भुनक्ति। औ—अभौक्षीत्। त्राणं पालनम्। भक्ष्य इहादनमुपभोगश्च। अस्मात् पालने परस्मैपदमन्यत्रात्मनेपदं, भुजोऽनवने इति ज्ञापकात्। भुनक्ति पृथिवीं राजा पालयतीत्यर्थः। अन्नं भुङ्क्ते जनः खादतीत्यर्थः। उपभोगे तु—वृद्धो जनो दुःखशतानि भुङ्क्ते इति। दिवं मरुत्वानिव भोक्ष्यते महीमिति रघुः। सुखमुपभुङ्क्ते, स्त्रियमुपभुङ्क्ते इत्यादि।

४२। भ्रजी ङ त भर्जने ( भ्रज, भ्वा, आ ) भर्जनं पाकविशेषः। ई—भृक्तः। ङ—भर्जते तण्डुलान् जनः। ( तपसा भर्जते पापमिति हलायुधः। ८७ )।

४३। भ्रस्ज औघ् पाके ( भ्रस्ज, तुदा, उ ) रेफयुक्तादिर्दन्त्यसोपधः। क्विपि संयोगादिलोपे भृट्। पाक इह भर्ज्जनम्।

अ, य—भञ्जति भञ्जते तण्डुलान् लोकः। औ—अभाङ्क्षीत्।
( तेजसारीश भञ्जतीति हलायुधः। ६७। बभञ्ज निहते तस्मिन् शोको रावणमग्निवदिति भट्टिः। १४।८६। )

४४। भनूजो धौ मोटने ( भनूज, रुधा, प ) ओ—भग्नः। य—भनक्ति। औ—अभाङ्क्षीत्। मोटनं भञ्जनम्। रामः शम्भुधनुर्बभञ्ज।

४५। मुजिक स्वनाध्वन्योः ( मुञ्ज, चु, प )
४५। मुजक स्वनाध्वन्योः ( मुज, चु, प )
४६। मनूजक स्वनाध्वन्योः ( मनूज, चु, प )
४७। मार्जक स्वनाध्वन्योः ( मार्ज, चु, प )

द्वावाद्यौ पञ्चमस्वरिणौ, चतुर्थो द्वितीयस्वरी। इ, क—मुञ्जयति। क—मोजयति। मञ्जयति। मार्जयति। द्वावाद्यौ भ्वादावेव केचित् पठ्येते। मुञ्जति मोजति। तत्रैव द्वितीयः सप्तमस्वरीति केचित्। मर्जति। स्वनः मार्जनम्।

४८। सृज् लूप् शुद्धौ (सृज, अदा, प) शुद्धिरिह शुद्धीभावः शुद्धीकरणञ्च। ल—मार्ष्टि तीर्थोदकैर्नित्यमिति हलायुधः। ५५। ऊ—अमार्ज्जीदङ्गतोमरं। अमार्क्षीच्चासिपत्रादीनिति भट्टिः। य—सृजा।

४८। सृजूप् कित् भृशे च ( सृज, चु, भ्वा, प ) ऊ—(भ्वादिपक्षे) अमार्ज्जीत् अमार्क्षीत्। ( चुरादि पक्षे तु ऊकारानुबन्धस्य सार्थक्यं नास्ति, अममार्ज्जत् ) य—सृजा। क्ति—मार्ज्जत्यालिपन्नैर्द्विजानिति, यो मार्जयति साम्राज्यश्रियचापल्यमर्थताभिति च हलायुधः। ५५। चकारात् शुद्धौ च।

४८। मस्जो श टौ स्नात् स्नाने ( मस्ज, तुदा, प ) दग्ध-

मध्यः। क्विपि संयोगादि लोपे मक्। यो—मग्नः। श—मज्जन्ती मज्जती। टु—मज्जथुः। औ—अमाङ्क्षीत्। स्नायतेऽनेनेति स्नानमिह जलान्तःप्रवेशः। मज्जति मत्सरो जले।

५०। युज कि संयमे (युज, चु, भ्वा, प) अन्त.स्थादिः। कि—योजयति योजति। संयमो बन्धनम्। (नियोजयति रक्षकानिति, यो नियोजति सामन्तानिति च हलायुधः। ४२)।

**युजिर्धौञ् च युतौ युज्यौ ङ समाधौ युजक्ङ तु।**
**निन्दे यजै ञौ देवार्चादानसङ्गतौ रुजक्।**
**हिंसे रुजो शौ भङ्गे रिजङ्ज्यर्थे रनृज्य रनृजमौञ्।**
**रागे रेजृङ राजृञ्ण दीप्तौ लाज् लाजि भर्त्सने।**
**भर्गेऽथ लसजी श्रो लज् ङ व्रीड़े लज् लजि भर्त्सने।**

५०। युजिर्धौञ् च युतौ (युज, रुधा, उ) इर—अयुजत् अयौक्षीत्। ध, ञ—युनक्ति युङ्क्ते इतेनान्नं लोकः। औ—योक्ता। चकारात् युज कि च (युतावर्थे प्रयुज्यते इत्यर्थः)। (प्रजासु वृत्तिं यमयुङ्क्त वेदितुमिति भारविः। १। १)।

५०। युज्यौङ समाधौ (युज, दिवा, आ) समाधिर्योग्यभावः। य, ङ—स्वयमात्मनि युज्यते इति हलायुधः। ४२। औ—योक्ता।

५०। युजक्ङ तु निन्दे (युज, चु, आ) क, ङ—योजयते।

५१। यजै ञौ देवार्चादानसङ्गतौ (यज, भ्वा, उ) ऐ—इज्यात्। ञ—यजति यजते। औ—यष्टा। देवः क्रीड़ा, दिवङ देवन इत्यनेन निष्पादनात्। यजति जनः क्रीड़तीत्यर्थः। देवस्यार्चा देवार्चेत्येकार्थत्वे कर्मण्योऽर्थमध्यपाठादकर्मकत्वापत्तिः।

यजति विष्णुं सुधीः पूजयतीत्यर्थः । पशुना रुद्रं यजते, पशुं रुद्राय ददातीत्यर्थ इति प्राञ्चः । सङ्गस्य कृतिः सङ्गकृतिः । यजति सन्त साधुः, सता सह सङ्गं करोतीत्यर्थः ।

५२ । रुजक् हिंसे ( रुज, चु, प ) क—रोजयति ।

५२ । रुजोंशौ भङ्गे ( रुज, तुदा, प ) ओं—रुग्नः । श—रुजति रोगो देहम् । औ—रोक्ता । ( न रोजयति यः कञ्चित् प्राणिनां कारुण्यान्वितः । तस्य धर्म्मरते रोगा न रुजन्ति मनागपीत्युभयत्र हलायुधः । १२६ ) ।

५३ । रिजृङ्ज्यर्थे ( रिज, भ्वा, आ ) ङ—रेजते । ऋज्यर्थे भर्जने ( ऋजिङ्भृजि इत्युक्तेः ) ।

५४ । रञ्ज्य ञौज रागे } ( रञ्ज, दिवा, उ )

५४ । रञ्ज ञौज रागे } (रञ्ज, भ्वा, उ) य, ञ—रज्यति रज्यते । ञ—रञ्जयति मृगान् । मृगरमणादन्यत्र रञ्जयति पुत्रं पिता । औ—रङ्क्ता । ञ—रजति रजते । रागो वर्णान्तरोत्पादनमासक्तिश्च । शेषार्थोऽकर्मकः । रजति वस्त्रं कुङ्कुमेन रजकः । रङ्क्षि किं कथय वैरिणि मौर्य्यपुत्रे इति मुद्राराक्षसम् ।

५५ । रेजृङ दीप्तौ } ( रेज, भ्वा, आ )

५६ । राजृञ दीप्तौ } ( राज, भ्वा, उ ) ऋ—अरिरेजत् । ङ—रेजते । रिरेजे । ऋ—अरराजत् । ञ—राजति राजते । ञ—रेजतुः रराजतुः ।

५७ । लाज् भर्त्सने भर्गे } ( लाज, भ्वा, प )

५७ । लाजि भर्त्सने भर्गे } (लाञ्ज, भ्वा, प) द्वौ द्वितीयस्वरिणौ । लाजति । इ—लाञ्जते । भर्गो भर्जनम् । भर्गः स्वैरित्यन्यते ।

५८। लस्जी ओ ङ व्रीडे } ( लस्ज, भ्वा, आ )
५९। लज् ङ व्रीडि } ( लज, भ्वा, आ ) आद्यो-दन्त्यशेषपधः। क्विपि संयोगादिलोपे लक्। ई, ओ—लग्नः। ङ—लज्जते। लजते। शेषस्यापि निष्ठायां लग्न इत्यन्ये। ( लजते तु लजितः )।

५९। लज भर्त्सने } ( लज, भ्वा, प )
५९। लजि भर्त्सने } ( लञ्ज, भ्वा, प ) लजति। (लेजिरे-ऽन्ये पराजिता इति भट्टिः। १४। १०५ ) इ—लञ्जति।

लज् कान्तौ लज लुजिक् भाषट्टार्थे विजिर्लिजौ।
वेकेविजीधो विज्ङीश्रो ओकम्पेल् टजङिटजङ्ली॥
त्यागे टजीकि च टजीध् इतौ च व्रज्गतौ व्रजक्।
संस्कृतौ च विरेफौ तौ झिजिल् किङ्ङस्फुटध्वनौ॥

५९। लज् कान्तौ ( लज, चु, प ) अन्तर्द्धिराच्छादनम्। क—लाजयति चन्द्रं मेघः।

५९। लजिक् भाषट्टार्थे } ( लञ्ज, चु, प )
६०। लुजिक् भाषट्टार्थे } ( लुञ्ज, चु, प ) शेषः पञ्चम-स्वरी। इ, क—लञ्जयति। लुञ्जयति। भा दीप्तिः, पट्टार्थो-निकेतनहिंसाबलदानानि।

६१। विजिर्लिजौ वेके ( विज, ह्वा, उ ) वेक इति विचि-र्लिधौज पृथक्त्वे इत्यस्य घञि रूपम्। इर्—अविजत् अवैचीत्। लि, अ—वेवेक्ति वेविक्ते मूर्खात् पण्डितः, पृथक् स्यादित्यर्थः। औ—वेक्ता।

६१। विजोधो भीकम्पे } (विज, रुधा, प)

६१। विज ङौग्रो भीकम्पे } (विज, तुदा, आ) ईं, श्रो—विग्नः। ध—विनक्ति। ङ, ग्र—विजते। ईं, ओ—विग्नः। द्वावप्यर्थौ। (भीतिः कम्पश्चेत्यर्थः)।

६२। ली रञ्ज ङि त्यागे } (सृज, घटा, आ)

६२। सृज् ङली त्यागे } (सृज, घटा, आ) द्वौ सप्तमस्वरिणौ। ल, ङ—सृष्टे। ङ्—सृक्षते। ङ, ल—सृक्त। ईं—सृक्तः।

६२। सृजी ञि च (सृज, चु, श्वा, प) ईं—सृक्त। ञि—वर्जयति, वर्जति। चकारात् त्यागे च।

६२। सृजीध सृतौ च (सृज, रुधा, प) ईं—सृक्तः। ध—सृणक्ति। वरीसृज्यते। चकारात् त्यागे च। (सृणक्ति सृजिनैः सङ्गं सृक्ते च सृपलैः सह। वर्जयनाभ्यं वीपेतैर्यो वर्णयति दुर्जनैरिति सर्वत्र हलायुधः। २७)।

६३। व्रज गतौ (व्रज, श्वा, प) व्रजति।

६३। व्रजक् संस्कृतौ च (व्रज, चु, प) क—व्राजयति। चकारात् गतौ च।

## विरेफौ तौ।

तौ एतौ (श्वादिचुरादौ व्रजधातू) विरेफौ रेफरहितौ च स्याताम्। (श्वादिचुरादिगणीयं व्रजधातुद्वयमपि भवतीत्यर्थः)।

६४। वज गतौ (वज, श्वा, प) वजति।

६४। वजक् संस्कृतौ च (वज, चु, प) अयं मार्गणसंस्कार इति माघः। मार्गणस्य शरस्य पचादिना संस्कारो मार्गण-

संस्कारः । क—याजयति मधैर्योधां काएडकारः । मार्गणसंस्कार-योरित्यपि केचित् । (१) ।

६५ । शिजिल् किङ् धस्फुटध्वनौ ( शिञ्ज, श्रदा, प, श्या, पा ) तालव्यादिः । श्रस्फुटध्वनिरिह भूषणकर्तृक एव, भूषणा-नान्तु शिञ्जितमित्यमरात् । इ—शिञ्जते । ल, ङ—शिङ्क्ते । क्ति, ङ—शिञ्जते शिञ्जते मञ्जीरः । तालैः शिञ्जद्वलयसुभगै-र्नर्त्तितः कान्तया मे, इति यवन्तं गणकृतानित्यत्वात् ।

पनृजौ ञि सङ्गे ष्वनृजौ ञि ङालिङ्गे षस्ज सर्पणे ।

६६ । षनृजौ ञि सङ्गे ( षनृज, श्या, प ) मूर्द्धन्यादिः । श्रौ—असाङ्क्षीत् । ञि—सक्तोऽस्ति । सजति वपुषि वासः ।

६७ । ष्वनृजौ ञि ङालिङ्गे ( ष्वनृज, श्या, पा ) षकार-युक्तादिः । आलिङ्ग आलिङ्गनम् । श्रौ—स्वङ्क्ता । ञि—स्वक्तो-ऽस्ति । ङ—स्वजते युवतीं युवा । परिष्वजति पाञ्चाली मध्यमं पाण्डुनन्दनमिति परस्मैपदं गणकृतानित्यत्वात् ।

६८ । षस्ज सर्पणे ( षस्ज, श्या, प ) दन्त्यसोपधः । क्विपि संयोगादिलोपे षक् । सज्जति । वचोऽपि परपाचरं न षदेषु संसज्जते इति शाकुन्तले गणकृतानित्यत्वात् ।

पर्ज्ज सर्ज्जाऽर्ज्जने सृज्यौङ् विसर्गेऽथ सृजौ श च ।

६९ । पर्ज्ज अर्ज्जने } ( पर्ज्ज, श्या, प )
७० । सर्ज्ज अर्ज्जने } ( सर्ज्ज, श्या, प ) द्वौ क्रमान्मूर्द्धन्य-दन्त्यादी । सिपर्ज्जयिषति । सिसर्ज्जयिषति । सर्ज्जति धनं लोकः ।

(१) अत मार्गणं याच्ञा इति मध्यामरे ।

७१ । सृज्यौङ् विसर्गे (सृज्, दिवा, आ) य, ङ—सृज्यते । औ—स्रष्टा । असृज्यते । विसर्गस्त्यागः । त्य.गे व्यङ्गा पर एव, अन्यत्र करोतीत्यर्थः । यथा—उपासनामेत्य पितुः स्म सृज्यते इति नैषधम् । संपूर्व्वोऽयमकर्म्मकः । यथा—संसृज्यते सरसिजै-रुणांशुभिन्नैरिति रघुः । निशापरिणामवायुः सरसिजैः सह संसृज्यते (सम्बद्धो भवति) इत्यर्थः ।

७१ । अथ सृजौ श च (सृज्, तुदा, प) सन्नमस्रष्टौ । औ—अस्राक्षीत् । श—सृजति । चकाराद्विसर्गे ।

## टो स्फुर्ज्जा वज्रनिर्घोषे जकारान्ता द्विसप्ततिः ।

७२ । टो स्फुर्ज्जा वज्रनिर्घोषे (स्फुर्ज्, भ्वा, प) ओष्ठवर्ग-द्वितीयवृत्तदन्त्यौ । टु—स्फूर्ज्जथुः । ओ—स्फूर्ज्जः । आ—स्फूर्ज्जितं स्फूर्ज्जनं तेन । प्रस्फुर्ज्जितः प्रस्फूर्ज्जः सः । वज्रनिर्घोषो वज्रकर्त्तृक-शब्दः । स्फूर्ज्जति वज्रम् ।

## जकारान्ता द्विसप्ततिः ।

(जकारान्ता धातवो द्विसप्ततिसंख्यकाः । संख्यासङ्गतिस्तु पूर्व्ववत् ।

---

## झान्तवर्गः ।

## उद्झश् त्यागे जर्झ झर्झश् भर्त्सने झान्तिमास्त्रयः ।

१ । उद्झश् त्यागे (उद्झ, तुदा, प) झसादिर्दन्त्यवर्ग-तृतीयोपधः । क्विपि समुत्, समुज्झाम् । सादौ नवद्वये इति उज्झिझिषति औज्झिझत् । जोपध इत्येके । उजिज्झिषति औजिज्झत् । श—उज्झन्ती उज्झती ।

२। जर्भश भर्त्सोक्त्योः } ( जर्भ, तुदा, प )
३। झर्भश भर्त्सोक्त्योः } ( झर्भ, तुदा, प ) श—जर्भन्ती जर्भती। झर्भन्ती झर्भती। भर्त्सतर्जनम्।

## झान्तिमास्त्रयः।

( झः अन्तिमो येषां ते, झकारान्ता धातवस्त्रयः )।

---

## टान्तवर्ग।

### अट्टक् तीक्ष्णेऽनादरेऽट्टातृटाड्ढटङ्डतिक्रमे वधे।

१। अट्टक् तीक्ष्णेऽनादरे ( अट्ट, चु, प ) टद्वयान्तः। अट्टयति। एकटकार इति रामः। तीक्ष्णमल्पीभावः।

१। अट्टङ् अतिक्रमे वधे } ( अट्ट, भ्वा, आ )
२। अतृटङ् अतिक्रमे वधे } ( अतृट, भ्वा, आ )
३। अड्डटङ् अतिक्रमे वधे } ( अड्ड, भ्वा, आ ) त्रयः क्रमात् मूर्द्धन्यवर्गाद्यन्तस्थवर्गाद्यतृतीयोपधाः। ङ—अटिट्टिषते, अतिट्टिषते, अड्डिटिषते खलं राजा।

### अठ इट कट कटि कटी गत्यामे काठ इतौ इपि।

४। अट गत्याम् } ( अट, भ्वा, प )
५। इट गत्याम् } ( इट, भ्वा, प )
६। कट गत्याम् } ( कट, भ्वा, प )
६। कटि गत्याम् } ( कण्ट, भ्वा, प )
६। कटी गत्याम् } ( कट, भ्वा, प ) पृथक्पाठात्

च.स्फोटे यैरियां करियां घटा। इति हलायुधः । २००।
चपास्फोटे यस्य बाहुशब्दे, विघाटयति पलाय्य एकत्र संहतो भवतीत्यर्थः।

१७। घटिण्यपि द्युतौ (घण्ट, चु, भ्वा, प) इ—घण्टयते।
कि—घण्टयति घण्टति। चपिशब्दात् घटकृत् (द्युत्यर्थकः) द्युतिर्दीप्तिः। द्युत्यर्थत्वेनैव चुरादित्वे सिद्धे किकरणमर्थान्तरेऽपि
पाक्षिकचुरादित्वार्थम्। तथाच—क्रियावाचित्वमाख्यातुं प्रसिद्धोऽयः प्रदर्शितः। प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातव
इति वोपदेवः। प्रसिद्धार्थं कथयितुं प्रसिद्धार्थः प्रदर्शितः किन्तु
महाकविप्रयोगं दृष्ट्वा अन्येऽर्था मन्तव्याः, हि यस्मात् धातवोऽनेकार्था भवन्तीत्यर्थः। तेन हिंसास्तुत्योः पठितस्यापि शंसतेः
कथनार्थत्वेन "न मे क्रिया शंसति किञ्चिदीप्सितमिति" रघौ
कथयतीत्येवार्थः। एवं दीप्तौ पठितस्यापि तर्कयतेर्वितर्कणार्थत्वेन
तर्कयत्यन्यगुणं सुधीरित्यादि।

१७। घटघुञ्म चेष्टे (घट, भ्वा, आ) घ—घटा। ङ—
घटने पठितुं धियः। म—घटयति। घटतीति घटो ऋयो
नाघटन् घटनामिगादिति तु घटतेः पचादित्वाद्न्, ततो घट
इवाचरतीति कौ साध्यम्।

१८। घुटङ्ऌ परीवर्त्ते (घुट, भ्वा, आ) परीवर्त्तो गतवतः
प्रत्यागमनम्, विनिमयो वा। ङ—घोटते नदी। ऌ—अघुटत।

१८। घुट् शि प्रतिहतौ (घुट, तुदा, प) शि—घुटति,
अघुटीत् मर्त्तुं शूरः। जुघोटः। (यस्य व्याघोटते दण्डो नाहतार्थः
कृतश्च न। व्याघुटन्ति विपक्षाश्च यत्सम्मुखमुपागता इत्युभयत्र
हलायुधः। २४६)।

घट्टक् चाले घट्ट ङ च चिट प्रेषे चटक् वधे।

१८। घट्टक् चाले (घट्ट, चु, प) टद्वयान्तः। चालश्चलनम्। क—घट्टयति मेघो वायुना।

१८। घट्ट ङ च (घट्ट, भ्वा, आ) टद्वयान्तः। ङ—घट्टते। चकाराच्चाले। (घट्टते न कथापि धर्म्मं धर्म्मपरायणः। सङ्घट्टयति गोष्ठीषु सर्व्वेषामेव यो गुणानित्युभयत्र हलायुधः। १६५

२०। चिट प्रेषे (चिट, भ्वा, प) चेटति भृत्यं स्वामी।

२१। चटक् वधे (चट, चु, प) क—चाटयति शत्रुं शूरः।

चट च भेदे चेट ङीहे चुट्टक् चुट चुटि तुच्छने।

२१। चट च भेदे (चट, भ्वा, प) चटति। चकारात् चटक् च (भेदार्थकः)।

२२। चेट ङीहे (चेट, भ्वा, आ) ईहो व्यापारः। ङ—चेटते पठितुं शिष्यः।

२३। चुट्टक् तुच्छने (चुट्ट, चु, प)
२४। चुट तुच्छने (चुट, भ्वा, प)
२४। चुटि तुच्छने (चुण्ट, भ्वा, प) त्रयः पञ्चमस्वरिणः, आद्यष्टद्वयान्तः, एकटकार इति रामः। तुच्छनमल्पीभावः। (छ्यक्पाठात् पूर्व्वोनेदित्) क—चुट्टयति; चोटति नदी ग्रीष्मे। इ—चुण्ट्यते।

चुटिक् छेदे चुट छुटक् छिच जट् झट संहतौ।

२४। चुटिक् छेदे (चुण्ट, चु, प) पञ्चमस्वरी। इ, क—चुण्टयति।

२४। चुटक् ञिच } ( चुट, चु, तुदा, प )
२५। छुटक् ञिच } ( छुट, चु, तुदा, प ) क—चोटयति, छोटयति। ञि—चुटति, अचुटीत्; छुटति, अछुटीत्। चकारात् छेदे।

२६। जट संहतौ } ( जट, भ्वा, प )
२७। झट संहतौ } ( झट, भ्वा, प ) जटति, झटति केशः, परस्परं संलग्नः स्यादित्यर्थः।

**णट् नृत्यहिंसयोर्णट्म नृतौ तट् काहतौ तट।**
**उच्छ्राये तुट् ञि कलहे तुट् कङ् तुटय ञि च्छिदि।**

२८। णट् नृत्यहिंसयोः ( णट, भ्वा, प ) प्रणटति। णोपदेशविधौ वर्ज्जनेऽप्यस्य परस्य चेच णठः केषाञ्चिदसुरोधात्।

२८। णट्म नृतौ ( णट, भ्वा, प ) म—प्रणटयति। नृताविति नृत्यतेरौणादिककिप्रत्यये रूपम्। अत्र मिकारानुबन्धेनैवेष्टसिद्धौ पूर्ब्बे नृत्यग्रहणमर्थभेदार्थं, तेन पूर्ब्बे नृत्यं साभिनयनर्त्तनम्; इह तु नृतिरभिनयरहितनर्त्तनमिति। यथा पूर्ब्बस्य—स्फटिककटकभूतिर्नाटयत्येव शैल इति माघः। अस्य तु—नाट्येन केन नटयिष्यति दीर्घमायुरिति मुरारिः।

२६। तट् काहतौ (तट, चु, प) क—ताटयति। ( आहतिराघननम् )।

२६। तट उच्छ्राये ( तट, भ्वा, प ) उच्छ्राय उच्चीभावः। तटति पुलिनम्।

३०। तुट ञि कलहे (तुट, तुदा, प) ञि—तुटति, अतुटीत् नीचः परस्परं यथगा। तुतोट।

२१। लुट कड छिदि } (लुट, चु, भा)
२१। लुट्य यि छिदि' } (लुट, दिवा, तुदा, प) द्वौ दन्त्यवर्गप्रथमादी। क, ङ—लोटयते। य—लुट्यति, लोटियति। तुदाद्यन्तर्गणस्यैव कुटादित्वमिति दिवादिपक्षे कुटादित्वं नास्ति। यि—लुटति, चलुटीत्। शेषस्तु विदीर्णीभावेऽपि, यथा—लुण्य-डीमधतु कठोरनिनद इति महानाटकम्। मयूखनपरलुट-त्तिमिरकुम्भिकुम्भस्थले इत्युद्भटः। क्वचित्लुनीभावेऽपि, यथा—चाहशुते यदि यचस्तुध्यति याचतहा जघने इत्युद्भटः। (लुटन्ति सर्व्वसन्देहास्तुय्यन्ति ग्रन्थयो इहीति हलायुधः। ३८)।

नट णट्वत् नटक्भ्रंशे पटक् च त्विषि पट् गतौ।

३२। नट णट्वत् (नट, भ्वा, प) णट्वदिति नट नृत्य-हिंसयोः नटमहतौ इति हिविध इत्यर्थः। प्रनटति। 'प्र—प्रनटयति।

३२। नटक् भ्रंशे (नट, चु, प) क—नाटयति। भ्रंशोऽ-धःपतनम्। स्यन्दनार्थोऽयमिति रामः।

३३। पटक् च त्विषि (पट, चु, प) क—पाटयति। चकारात् नटक् च। त्विषि दीप्तौ।

३३। पट गतौ (पट, भ्वा, प) पटति।

पुट् यि श्लेषे पुटक् चूर्णे भासि पिट् संहतौ ध्वनौ।

३४। पुटयि श्लेषे (पुट, तुदा, प) यि—पुटति, अपुटीत्, पुपोट। श्लेषः सम्बद्धीभावः।

३४। पुटक् चूर्णे भासि (पुट, चु, प) क—पोटयति। भासि दीप्तौ।

मुट्शि त्वाक्षेपे च यौटृ सम्बन्धे रौटृ नादरे।

४२। मुट्शि त्वाक्षेपे च (मुट, तुदा, प) पवर्गशेषादिः। शि—मुटति, अमुटीत्, मुमोट। (आक्षेपस्तिरस्कारः) चकारात् चूर्णे च। मुटति द्विषतां दर्पं य इति हलायुधः। १०४।

४३। यौटृ सम्बन्धे (यौट, भ्वा, प) चतुर्दृयस्वरी। ऋ—अयुयौटत्। यौटति काष्ठं तक्षा। (सम्बन्धः संयोजनम्, यौटति संयुक्तं करोतीत्यर्थः)। (१)।

४४। रौटृ नादरे (रौट, भ्वा, प) चतुर्दृयस्वरी। ऋ—अरुरौटत्। नादरोऽनादरः। रौटति खलं लोकः।

रेटृञ् याचे रट्च वाचि रुटि स्तेये रुटक् रुपि।
द्युतौ रुट् लुट लङ् दीप्तिप्रतिहत्योर्लुटि लुतौ।

४५। रेटृञ याचे (रेट, भ्वा, उ) ऋ—अरिरेटत्। ञ—रेटति रेटते। याचो याचनम्।

४६। रट्च वाचि (रट, भ्वा, प) रटति। चकारात् रैटृञ च।

४७। रुटि स्तेये (रुण्ट, भ्वा, प) इ—रुण्ट्यते धनं चौरेण।

४७। रुटक् रुपिद्युतौ (रुट, चु, प) क—रोटयति।

४७। रुट्लङ दीप्तिप्रतिहत्योः } (रुट, भ्वा, आ)

४८। लुटृलङ दीप्तिप्रतिहत्योः } (लुट, भ्वा, आ) लृ—अरुटत्; अलुटत्। ङ—रोटते; लोटते। प्रतिहतिः शोकादिना पतनम्, पुनर्हननं वा।

---

(१) यौटति मलयं लोकः। यौतर्क, टस्य तत्वमिति विन्योधन इत्युक्तं कातन्त्र-धातुवृत्तौ। कश्चिदिममकर्मकं मत्वा यौटति पुत्रः पित्रासहेत्युदाहरति।

५२। लोट् ऋ उन्मादे (लोट, भ्वा, प) ऋ—अलुलोटत्। लोटति लोक उन्मादयतीत्यर्थः।

५३। वेष्टङ वेष्टे } (वेष्ट, भ्वा, आ)
५४। वट वेष्टे } (वट, भ्वा, प) ङ—वेष्टते। वटति वृक्षं लता।

५४। वटि कि वण्टने (वण्ट, चु, भ्वा, प) वण्टनं विभागः। ङ—वण्टयते। कि—वण्टयति, वण्टति। वण्टन्ति नाटकं यस्मात् प्राप्य विप्राः परम्परमिति कलापचन्द्रः। ७८। अयं चुरादौ कैश्चिन्न पठ्यते इति दुर्गसिंहादयः।

**वट्भोक्तौ चुटि क चित्यां विटाक्रोशे स्वने ऋशौट्।
गर्व्वे शटङ्क श्लाघे शट् सादे शीर्णौ गतौ रुजि।**

५४। वट् भोक्तौ (वट, भ्वा, प) म—वटयति।

५५। चुटिक चित्यां (चुण्ट, चु, प) पञ्चमस्वरी। इ, क—चुण्टयति। चितिर्हिंसा।

५६। विटाक्रोशे स्वने (विट, भ्वा, प) वेटति। आक्रोशः कैश्चिन्न मन्यते। स्वनः शब्दः।

५७। ऋ शौट् गर्व्वे (शौट, भ्वा, प) चतुर्दशस्वरी। ऋ—अशुशौटत्। शौटति वीरः।

५८। शट ङ्क श्लाघे (शट, चु, आ) ङ, क—शाटयते।

५८। शट् सादे शीर्णौ गतौ रुजि (शट, भ्वा, प) सादोऽवसादः, शीर्णिर्विभेदः। शटति लोकः, अवसीदति विशृणाति गच्छति रुजति वेत्यर्थः।

**शिट् पिटानादरे पुट्टक् तौच्छ्ये च पट अंशके।**

५९ । ख्रिट नादरे } ( ख्रिट, भ्वा, प )
६० । थिट नादरे } ( थिट, भ्वा, प ) द्वौ क्रमात्तालव्य-मूर्द्धन्यादी । श्रेटति, षेटति खलं लोकः । ( यः श्रेटति सभामध्ये तं शेटति निरीक्ष्य य इत्युभयत्र हलायुधः । २७० ) ।

६१ । पुट्टक् तौच्छ्ये च ( पुट्ट, चु, प ) प्रथमस्वरी, टद्वयान्तः । क—पुट्टयति । दन्त्यादिरयमिति भीमः । तौच्छ्यमल्पीभावः । चकारादनादरे च ।

६२ । पट अंशके ( पट, भ्वा, प ) अंशकेऽवयवे । सटति पटः अवयवी स्यादित्यर्थः । (१) ।

पट्टक् निकेतने हिंसे बले दाने स्फुटक् भिदि ।

६३ । पट्टक् निकेतने हिंसे बले दाने ( पट्ट, चु, प ) मूर्द्ध-न्यादिष्टद्वयान्तः । क—षट्टयति लोकः, निवसति हन्ति बली स्यात् ददाति वेत्यर्थः ।

६४ । स्फटक् भिदि ( स्फुट, चु, प ) दन्त्यादिरयम् । एतदाद्या अष्ट ओष्ठ्यवर्गद्वितीययुक्ताः । भिदि भेदने । क—स्फोटयति कण्टकः पदम् ।

स्फुटिर्विशरणे स्फुट्यि विकासे स्फुट् ङच स्फुटिक् ।
नर्म्मण्याङः स्फुटक् हिंसे स्फिट्टक् इत्याञ्च स्फुट्टक ।
चानादरे ख्रिट्काच स्तिट् काच स्रेहे स्फटि स्फट ।
घोणौ हट् त्विषि हेट् वाधे टान्ता इत्येकसप्ततिः ।

(१) यत्र यत्र द्रव्यनिर्देशस्तत्र तत्र तत्समवेता क्रिया गम्यते इति शैषेण व्युत्पत्तं कातन्त्रव्याख्यात्रा । केचित् अंशक अल्पीभावः । षटति येन अल्पावयवं भवतीत्यर्थं इत्याहुः ।

६४ । स्फुटिविशरणे (स्फुट, भ्वा, प) इट्—अस्फुटत् अस्फोटीत् । विशरणं भेदनम् । स्फोटति गात्रं वाणः । विसरण इति दन्त्यमध्यपाठे विकसने इत्यर्थः । स्फोटति मल्लीकलिका ।

६४ । स्फुट ञि विकाशे (स्फुट, तुदा, प) विकास इति काश ञ गताविति दन्त्यान्तस्य घञि रूपम्, विपूर्व्वत्वेनार्थान्तर-वाचितया विकसन इत्यर्थः । ञि—स्फुटति केतकीकोरकः । अस्फुटीत् पुस्फोट ।

६४ । स्फुटङ च (स्फुट, भ्वा, आ) चकाराद्विकसने । ङ— स्फोटन्ते नवकुड्मलानि कुटजप्रायेषु दन्तेषु चेतिहलायुधः । ११ ।

६४ । स्फुटिक् नर्म्मणि (स्फुण्ट, चु, प) पञ्चमस्वरी । नर्म्म इह परीहासः । इ, क—स्फुण्टयति सखायं लोकः । अयं कैश्चिन्न मन्यते ।

६४ । आङः स्फुटक् हिंसे (आङ्पूर्व्वक स्फुट्, चु, प) आङ् उपसर्गः । क—आस्फोटयति ।

६५ । स्फिटक् इत्याद्य (स्फिट, चु, प) क—स्फेटयति । इति; कैश्चिन्न मन्यते । चकाराद्धिंसे च ।

६६ । स्फुट्टक् चानादरे (स्फुट्ट, चु, प) पञ्चमस्वरी, टद्वयान्तः । क—स्फुट्टयति । चकारात् स्फिटक् च ।

६७ । स्मिट् अच (स्मिट, चु, प) श्रोष्ठवर्गशेषयुक्तः । क— स्मेटयति । चकारात् अनादरे ।

६८ । स्मिट् क च स्नेहे (स्मिट, चु, प) दन्त्यवर्गशेषयुक्तः । क—स्मेटयति । चकारात् स्मिट् क च ।

६८ । स्फटि शीर्णौ } (स्फण्ट, भ्वा, प)
६८ । स्फट शीर्णौ } (स्फट, भ्वा, प) द्वावाद्यस्वरिणावोष्ठ-

वर्गद्वितीययुक्तौ। पञ्चमस्वरिणाविति क्रमो ज्ञेयः। तथात्वे सजातीयतया स्फुटक् भिदीत्यादीनां सन्निधावेवापठिष्यत्। एवं संख्यापि न सङ्गच्छते, स्फुटिविशरणे इत्यनेनैवेष्टसिद्धौ शेष-धातोश्च वैयर्थ्यं स्यात्। अतएव रमानाथोऽपि स्फुटिविशरणे इत्यत्र चकारशून्यः स्फट इति केचित् पठन्ति। पचादित्वादनि स्फटा फणा इति सम्मतिरित्यन्तमाह। शीर्णिर्भेदनम्। इ—स्फण्टते। स्फटति गात्रं वायुः। पस्फण्ट, पस्फाट, स्फाटिकम्।

७०। इट लिपि (इट, भ्वा, प) इटति। लिपि दीप्तौ। (इटतीति हाटकं स्वर्णम्)।

७१। हेट बाधे (हेट, भ्वा, प) हेटति। बाधो विहतिः।

## टान्ता इत्येकसप्ततिः।

(टान्तधातव एकसप्ततिसंख्यकाः)।

---

## ठान्तवर्गः।

### अठिङ्ङठ गतेऽथोठोपघाते ङेठ बाधने।

१। अठिङ् गते } (अण्ठ, भ्वा, आ)
१। अठ गते } (अठ, भ्वा, प) इ—अण्ठते। ङ—अण्ठते। अठति।

२। अथोठोपघाते (उठ, भ्वा, प) कुस्वादिः। ओठति खलः साधुम्। (उपघातः पीड़नम्)।

३। ङेठ बाधने (एठ, भ्वा, आ) बाधनं विहतिः। (प्रति बन्धीकरणमित्यर्थः) ङ—एठते मत्सरं लोकः।

कुठि खोटनवैकल्यालस्ये कठ तङ्कने कठि ।
कि आध्याने कठि ङ च गुठिक् वेष्टे पिठ क्लिशि ।
वधे पठ वाचि वठ स्थौल्ये मठ वासमर्दयोर्मठि ।
ङ स्वाध्याने सुठि ङ तु पलाये रठ भाषणे ।

४। कुठि खोटनवैकल्यालस्ये (कुण्ठ, भ्वा, प) पञ्चमस्वरी । इ—कुण्ठ्यते । वैकल्यं विकलीभावः । आलस्यं मन्दीभावः । कुण्ठति खञ्जः शोकार्त्तो दृद्धो वा ।

५। कठ तङ्कने (कठ, भ्वा, प) तङ्कनं दुःखेन जीवनम् । कठति दीनः ।

५। कठि कि आध्याने (कण्ठ, चु, भ्वा, प) इ—कण्ठ्यते (इदमुदाहरणं भ्वादिपक्षे बोध्यम्) कि—कण्ठयति, कण्ठति । आध्यानं "स्मृत औत्सुक्ये" इत्यत्र व्याख्यातम् ।

५। कठि ङ च (कण्ठ, भ्वा, आ) इ—कण्ठ्यते । ङ—कण्ठते । चकारादाध्याने । रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते इति । (नोत्कण्ठते परद्रव्ये नोत्कण्ठति परस्त्रियं । यस्योत्कण्ठयति स्वाध्ये धर्म्म एव मनःसदेत्युभयत्र हलायुधः । ८९) ।

६। गुठिक् वेष्टे (गुण्ठ, चु, प) कुस्वी । इ, क—गुण्ठयति । अजुगुण्ठत् । (अवगुण्ठनम्) ।

७। पिठ क्लिशि वधे (पिठ, भ्वा, प) औष्ठ्यवर्गाद्यादिः । पेठति । पिपेठतुः । क्लिशि दुःखानुभवे ।

८। पठ वाचि (पठ, भ्वा, प) पठति श्लोकं धीरः ।

९। वठ स्थौल्ये (वठ, भ्वा, प) स्थौल्यमिह सामर्थ्यम् । वठति वीरो योद्धुं समर्थः स्यादित्यर्थः ।

प्रतीघाते, लुठोपघाते इत्यर्थः। (क्वचित् कार्य्ये न लोठते इति हलायुधः। ४६। न प्रतिहतो भवतीत्यर्थः)।

**लुठ् शि लोटे लुठक् चौर्य्ये वठि ङ्ङेकचरे वठ।**
**स्थौल्ये शठ कङ श्लाघे शठ् वधक्लेशकैतवे।**

१४। लुठ शि लोटे (लुठ, तुदा, प) शि—लुठति, अलुठीत्। लुलोठ। लोटः स्वस्त्रीभावः। हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले इत्यमरुशतकम्।

१४। लुठक् चौर्य्ये (लुठ, चु, प) क—लोठयति।

१५। वठिङ् एकचरे (वण्ठ, भ्वा, आ) एकचर एकाकृत्याचरणम्। ङ—वण्ठते। ङ—वण्ठते चौरचोरयितुमेकचरतीत्यर्थः।

१५। वठस्थौल्ये (वठ, भ्वा, प) स्थौल्यमिह सामर्थ्यम्। वठति दाता, दातुं समर्थः स्यादित्यर्थः।

१६। शठ कङ श्लाघे (शठ, चु, आ) क, ङ—शाठयते।

१६। शठ वधक्लेशकैतवे (शठ, भ्वा, प) क्लेशो दुःखानुभवः। कैतवमिह वञ्चनम्। शठति खलः साधुं, वञ्चयते इत्यर्थः।

**शठकालस्ये श्वठ् श्वठिक् च गत्यसंस्कृतसंस्कृते।**

१६। शठकालस्ये (शठ, चु, प) क—शाठयति दद्रः, क्रियासु मन्दः स्यादित्यर्थः।

१७। श्वठक् गत्यसंस्कृतसंस्कृते } (श्वठ, चु, प)
१७। श्वठिक् च गत्यसंस्कृतसंस्कृते } (श्वण्ठ, चु, प)

द्वौ वकारयुक्तौ। पुनः पाठात् पूर्व्वौ नेदनुबन्धः। तयोरर्थाः।

१०। मठ् वासमर्द्दयोः (मठ, भ्वा, प) मठति। वासो निवासः। मर्द्दः केश्चिन्नमन्यते।

१०। मठि ङ तु याध्याने (मण्ठ, भ्वा, आ) ङ— मण्ठते। ङ—मण्ठते। याध्यानं "स्मृ औत्कण्ठ्ये" इत्यत्र व्याख्यातम्।

११। मुठि ङ तु पलाये (मुण्ठ, भ्वा, आ) पवर्गोपधादिः, पञ्चमस्वरी। ङ—मुण्ठते। ङ—मुण्ठते चौरः।

१२। रठ भाषणे (रठ, भ्वा, प) रठति। भाषणं कथनम्।

रुठोपघाते रुठल्ङ् प्रतीघातेऽथ रुठ् लुठि।
गत्यालस्यस्तेयखोटे ल्ह लुठङ् लुठ रादिवत्।

१३। रुठोपघाते (रुठ, भ्वा, प) रोठति खोर्त्तं शोकः।

१३। रुठ ल्ङ् प्रतीघाते (रुठ, भ्वा, आ) ल्ह—अरुठत्। ङ—रोठते। प्रतीघातः शोकादिना पतनं, पुनर्हननं वा।

१३। अथ रुठि गत्यालस्यस्तेयखोटे } (रुण्ठ, भ्वा, प)
१४। लुठि गत्यालस्यस्तेयखोटे } (लुण्ठ, भ्वा, प)
द्वौ पवर्गस्वरिणौ। इ—रुण्ठति, लुण्ठति। (यो लुण्ठति गिरिं कश्चिदिति हलायुधः। ४६। मन्त्वार्थे गिरिगिरन्दं गच्छतीत्यर्थः)।

१४। ल्ह लुठ ङ रादिवत् } (लुठ, भ्वा, आ)
१४। लुठ रादिवत् } (लुठ, भ्वा, प) ल्ह—अलुठत्। ङ—लोठते। लोठति। रादिवत्—(एतौ रुठधातू) रादौ रेफादौ ठान्तौ एतत् महतौ यौ धातू (रुठ ल्ङ् प्रतीघाते, रुठोपघाते इत्यभावित्यर्थः) क्रमात्तयोरर्थे वर्त्तेते। तथा च ल्हलुठत्

प्रतीघाते, लुठोपघाते इत्यर्थः। (क्वचित् कार्ये न लोठते इति हलायुधः। ४६। न प्रतिहतो भवतीत्यर्थः)।

लुठ् षि लोटे लुठक् चौर्ये वठि ङङेकचरे वठ।
स्थौल्ये शठ कङ श्लाघे शठ् वधक्लेशकैतवे।

१४। लुठ षि लोटे (लुठ, तुदा, प) षि—लुठति, अलुठीत्। लुलोठ। लोटः स्वस्त्रीभावः। चारोऽयं हरिणाचीयः लुठति सानमराडले इत्यमवयतकम्।

१४। लुठक् चौर्ये (लुठ, चु, प) क—लोठयति।

१५। वठिङ् एकचरे (वण्ठ, भ्वा, भा) एकचर एकाकृत्वचरणम्। इ—वण्ठ्यते। ङ—वण्ठते चौरचोरयितुमेकचरतीत्यर्थः।

१५। वठस्थौल्ये (वठ, भ्वा, प) स्थौल्यमिह सामर्थ्यम्। वठति दाता, दातुं समर्थः स्यादित्यर्थः।

१६। शठ कङ श्लाघे (शठ, चु, भा) क, ङ—शाठयते।

१६। शठ वधक्लेशकैतवे (शठ, भ्वा, प) क्लेशो दुःखानुभवः। कैतवमिह वञ्चनम्। शठति खलः साधुं, वञ्चयते इत्यर्थः।

शठकालस्ये श्वठ् श्वठिक् च गत्यसंस्कृतसंस्कृते।

१६। शठकालस्ये (शठ, चु, प) क—शाठयति दुष्टः, क्रियासु मन्दः स्यादित्यर्थः।

१७। श्वठक् गत्यसंस्कृतसंस्कृते } (श्वठ, चु, प)
१७। श्वठिक् च गत्यसंस्कृतसंस्कृते } (श्वण्ठ, चु, प)
द्वौ वकारयुक्तौ। पुनः पाठात् पूर्वो नेदनुबन्धः। वयोऽर्थाः।

क—श्वाठयति । द्रु, क—श्वण्ठयति जनः, गच्छति, किमपि न संस्करोति, संस्करोति वेत्यर्थः। संस्कारगत्योरिति केचित्। चकारात् श्वठक् च ( एतदर्थवितयवानित्यर्थः ) ।

शुठि शुठ् खोटने शुठ् कालस्ये शुठिकि शोषणे ।

१८। शुठि खोटने } शुण्ठ, भ्वा, प )
१८। शुठ खोटने } ( शुठ, भ्वा, प )द्वौ पञ्चमस्वरिणौ। खोटनमिह गतिव्याघातः। द्रु—शुण्ठ्यते। शोठति पथः सेतुना ।

१८। शुठकालस्ये ( शुठ, चु, प ) क—शोठयति दक्षः क्रियासु, मन्दः स्यादित्यर्थः ।

१८। शुठि कि शोषणे ( शुण्ठ, चु, भ्वा, प ) तालव्यादिः पञ्चमस्वरौ। शोषणमिह चुरादिपक्षे शुष्कीकरणम्, भ्वादिपक्षे शुष्कीभावः। कि—शुण्ठयति काष्ठमातपः, शुण्ठति फलमातपात्। न च भौवादिकस्यैव प्रेरणौ शुष्कीकरणवाचित्वात् चुरादावस्यपाठो व्यर्थः स्यादिति वाच्यं, चुरादित्वे परस्मैपदं, प्रेरण जन्तत्वे उभयपदमिति भेदात् ।

सठ स्वठक श्वठार्थे हठ् कीलबन्धे बलात्कृतौ ।
लुतौ हेठश् खचे हेठ्ङ् बाधे ठाविंशतिस्त्रिभिः।

१९। सठ क श्वठार्थे } ( सठ, चु, प )
२०। स्वठ क श्वठार्थे } (स्वठ, चु, प) द्वौ कमादिन्यादी, शेषो वकारयुक्तः। क—साठयति, स्वाठयति। श्वठार्थे गत्यसंस्कृतसंस्कृतेषु।

२१। हठ कीलबन्धे बलात्कृतौ प्लुतौ (हठ, भ्वा, प) कीले बन्धः कीलबन्धः। हठति छागं लोकः कीले बध्नातीत्यर्थः। कातन्त्रादौ बलात्कारमात्रे, हठति परचक्रं बली।

२२। हेठ च पचे (हेठ, तुदा, प) श—हेठन्ती हेठती। पचो भूतिपूत्योरुत्पत्तिः।

२३। हेठृङ् बाधे (हेठ, भ्वा, आ) लुङ्—अजीहिठत् अजिहेठत्। ङ—हेठते मत्सरं साधुः। बाधो विहतिः।

## ठाविंशतिस्त्रिभिः।

(ठाः ठान्ताधातव त्रिभिः सह विंशतिः त्रयोविंशतिसंख्यका इत्यर्थः) अत्र संख्यायामेकोनास्तीति चिन्त्यम्।

---

## डान्तवर्गः।

अड्ड अड्डाभियोगेऽड्डन् व्याप्तेऽडुद्यम ईड् लड।
स्तुतावीडक् चौलडिक्युत्क्षेपे कड् माद्‌ने कडि।
अड् च दर्पे कडिक् भेदे रक्षणे लड्विडा डन्ति।
स्नेहे मोक्षे क्रीडृ खेले कुड्शि बाल्येऽदने कुडिङ्।
दाहेऽथ कुडि वैकल्ये कुडिक् रक्षेऽथ कूड् शि तु।
धान्ये भक्ते काड्ड कड्ड कार्कश्ये खोडृ खोटने।

१। अड्ड अभियोगे } (अड्ड, भ्वा, प)
२। अड्ड अभियोगे } (अड्ड, भ्वा, प) द्वौ क्रमात् दन्त्यमूर्द्धन्यवर्गतृतीयोपधौ। अड्डिडिषति। अडिड्डिषति। क्विपि

अट्, अड्। अभियोगः समाधानम्। अड्डति अर्थं विद्वान्। अभिसमन्तात् योगोऽभियोग इति गोविन्दभट्टः।

२। अड्नृ व्याप्ते (अड, स्वा, प) र—वैदिकः। न— अड्नोति।

३। अड् उद्यमे (अड, भ्वा, प) अडति लोकः सुखाय।

४। ईड् लड स्तुतौ (ईड, अदा, आ) दीर्घादिः। ल, ङ— ईट्टे।

४। ईड क च (ईड, चु, प) क—ईडयति। चकारात् स्तुतौ। (ईट्टे त्रिपिष्टपस्थाने यद्गुणाचारपावनः। स्वयं पुरु- कितो हर्यौद्विडौजा ईडयत्यपीत्युभयत्र हलायुधः। १५८)।

५। ओलडि उत्क्षेपे (ओलण्ड, चु, भ्वा, प) अन्तःस्थतृतीय- मध्यः। इ—ओलण्ड्यते। णि—ओलण्डयति ओलण्डति तण्डु- लान् लोकः। कर्पूरमोलण्डयतीति दर्शनात्।

६। कड् श मदने (कड, तुदा, प) श—कडन्ती कडती। प्राच्यस्तु वेदेऽपूच्चारणभेदार्थं भ्वादावप्येतं पठन्ति। तथाच—कड मद इति धातुः पद्यते भूतुदाद्योः कडति कडति रूपं तुल्यमेव द्वयोः स्यात्। तदुभयगणपाठे किं फलं नेति वाच्यं स्वरकृत इह भेदः अपृथयोरस्ति यस्मादिति। स्वरकृत इति उदात्तानुदात्तस्वरित- विरिब्धसंज्ञकचतुर्विधस्वरकृत इत्यर्थः।

६। कडि जङ्च दर्पे (कण्ड, भ्वा, उ) दर्पं इह हर्षः। इ— कण्ड्यते। ञ—कण्डति कण्डते। ङ—कण्डते जनः, हृष्टः स्यादि- त्यर्थः। अयमात्मनेपदीत्यन्ये, कदाचित् परस्मैपदार्थो ञकारः। अनेकार्थत्वात् तुषापनयनेऽपि। कण्डते तण्डुलान् लोकः। चकारात् कडयच (हर्षार्थः)।

६ । कडिक् भेदे रक्षणे (कण्ड, चु, प) इ, क—कण्डयति ।

७ । ञि क्ष्विडा ङञि स्नेहे मोचे (क्ष्विड, भ्वा, आ) वकारयुक्तः । ऌ—अक्ष्विडत् । आ—क्ष्विडितं क्ष्विण्णं तेन, प्रक्ष्विडितः प्रक्ष्विण्णः सः । ङ—क्ष्वेडते । ञि—क्ष्विण्णोऽस्ति । स्नेहः स्निग्धीभावः । मोचे—क्ष्वेडते तिलान्तैलं, मुञ्चतीत्यर्थः ।

८ । क्रीड़ खेले ( क्रीड, भ्वा, प ) ङ—अचिक्रीडत् । क्रीडति बालः शिशुभिः ।

९ । क्रुडश्चि बाल्येऽदने ( क्रुड, तुदा, प ) एतदाद्याश्चत्वारः पञ्चमस्वरिणः । बाल्यमिह शिशुव्यापारः । श्चि—क्रुडति, अक्रुडीत् सिकताभिः शिशुः ।

९ । क्रुडिङ् दाहे ( क्रुण्ड, भ्वा, आ ) इ—क्रुण्ड्यते । ङ—क्रुण्डते ।

९ । अथ क्रुडि वैकल्ये ( क्रुण्ड, भ्वा, प ) इ—क्रुण्ड्यते । क्रुण्डति जनं दैवं, विकलं करोतीत्यर्थः ।

९ । क्रुडिक् रक्षे ( क्रुण्ड, चु, प ) इ, क—क्रुण्डयति ।

१० । अथ कूड्श्चित् घान्ये भक्षे ( कूड, तुदा, प ) षष्ठस्वरी । फलाभावेऽप्यस्य कुटादौ पाठः प्राचामनुरोधात् । प्राच्योऽपि डान्तप्रस्तावादिमं कुटादौ पठितवन्तः । श्चि—कूडन्ती कूडती । घान्यं घनीभावः । कूडति दुग्धं वह्नियोगात् । कूडत्यन्नं लोकः ।

११ । कड्ड कार्कश्ये　} ( कड्ड, भ्वा, प )
१२ । कड्ड कार्कश्ये　} ( कड्ड, भ्वा, प ) द्वौ कमात्टवर्गतवर्गतृतीयोपधौ । क्विपि कड्, कड्ड । कड्डति पद्मनालं कर्कशं स्यादित्यर्थः ।

घार्कखे इत्यमात् कार्कख इत्यस्यानुरुत्या कपोलकर्तृककार्कश्योऽयमिति व्याख्याय गल्डति कपोल. पांशुना इत्युदाहृतवान्। केचित्तु गल्ड इति शब्दस्य व्युत्पत्त्यर्थमेवायं धातुर्मन्तव्यो नत्वस्यान्यत्र प्रयोग इत्याहुः।

१६। गडम सेके (गड, भ्वा, प) म–गडयति। सेकः चरणम्। गडति घटात् पानीयम्। डलयोरैकावास्यैव प्रायः प्रयोग इति रमानाथः। तन्मते लान्तपक्षेऽपि नानुबन्धः। स्वमते तु लान्तोऽपि वक्ष्यमाणः, मत्वनुबन्धमूलत्व इति विरोधः।

१७। गुडिक् वेष्टे (गुण्ड, चु, प) एतदाद्याः षञ्चमस्वरिणः सम्र। इ, क–गुण्डयति। अनेकार्थत्वाच्चूर्णीकरणेऽपि। गुण्डयति विङ्गलं लोकः।

१७। अथ गुड श्चि च रक्षे (गुड, तुदा, प) श्चि—गुडति, अगुडीत्, जुगोड। चकारात् गुडिक् च (रक्षार्थकः)।

१८। श्चि घुड् च व्याघाते (घुड, तुदा, प) श्चि–घुडति, अघुडीत्, जुघोड। चकारात् गुडश्चिच (व्याघातार्थकः)।

१९। चुडि तीक्ष्णे (चुण्ड, भ्वा, प) इ–चुण्डति। तीक्ष्णमल्पीभावः।

१९। चुडिक् छिदि (चुण्ड, चु, प) इ, क–चुण्डयति।

चुड्ड चुड्ड कृतौ भावे चडिक् रोपे चडि ङऽपि।

२०। चुड्ड कृतौ भावे } (चुड्ड, भ्वा, प)

२१। चुड्ड कृतौ भावे } चुड्ड, भ्वा, प) द्वौ क्रमाट्टवर्गतवर्गतृतीयोपधौ। क्विपि चुड्, चुद्। कातन्त्रादौ भावकरणमित्येकोऽर्थः। अमी भावाः क्रियाः शृङ्गारभावजा इत्यमरः।

भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते इति साहित्यदर्पणः। कुड्डति कान्तायथवा कान्तः।

२२। चडिक् रोषे ( चण्ड, चु, प ) इ, क—चण्डयति।

२२। चडिङ् ऋषि ( चण्ड, भ्वा, आ ) इ—चण्डते। ङ—चण्डते। ऋषिशब्दात् रोषे।

## जुड़ग गतौ जुड्गि बन्धे जुडक् नोदे तडक् त्विषि।

२३। जुड़ग गतौ (जुड, तुदा, प) ग—जुडति। जोडिता।

२३। जुड्गि बन्धे (जुड, तुदा, कुटादि, प) गि—जुडति, अजुडीत् जुजोड। तालव्यकृत्वलतापवात् स्वह्वोन जुडत्यसाविति हलायुधः। ११२।

२३। जुडक् नोदे ( जुड, चु, प ) क—जोडयति। नोदः प्रेरणम्।

२४। तडक् त्विषि ( तड, चु, प ) क—ताडयति। त्विषि दीप्तौ।

## तडिङ्ङ्याहतौ तोड़ नादरे तुड्ड तूड़ च।

२४। तडिङ् आघाहतौ ( तण्ड, भ्वा, आ ) इ—तण्डते। ङ—तण्डते। ऋषिशब्दात् तडक् च ( आहत्यर्थकः )।

२५। तोड़ नादरे ( तोड, भ्वा, प ) ऋ—अतुतोडत्। नादरोऽनादरः।

२६। तुड्ड च ( तुड्ड, भ्वा, प )
२७। तूड़ च ( तूड, भ्वा, प ) आद्यः पञ्चमस्वरी। उड्डयान्त। तुड्डति। फलाभावान्न ऋदनुबन्ध। शेषः षष्ठस्वरी। ऋ—अतुतूडत्। चकारानादरे।

## तुड़ तुडिङ् वधे तुड्शि भेदे थुडशि संवृतौ।

१८। तुड़ वधे } (तुड, भ्वा, प)
२८। तुडिङ् वधे } (तुण्ड, भ्वा, आ) द्वौ पञ्चमस्वरिणौ।
पूर्व्वस्य ऋदनुबन्धसाफल्यार्थमिकारः परस्यैव; तत्प्रधानात् ङकारोऽपि तथा। ऋ—अतुतोडत्। ङ्—तुण्ड्यते। ङ—तुण्डते। वधः पूर्व्वधातुपक्षे हिंसाकरणमिति गोविन्दभट्टः। तोडति मल्लो मल्लाङ्ग भनक्तीत्यर्थः। शेषधातुपक्षे वधो निपीडनमिति रमानाथ'। तुण्डते मान्यं पिक।

२८। तुड्शि भेदे (तुड, तुदा, प) शि—तुडति, अतुडीत्, तुतोड। उपहनने इति कश्चित् (१)।

२९। थुडशि संवृतौ (थुड, तुदा, प) शि—थुडति, अथुडीत्, तुथोड।

## द्रुड् द्रुड्शि मज्जने द्राड धाडृङ् शीर्णौ शि नुड्वधे।

३०। द्रुड् मज्जने } (द्रुड, भ्वा, प)
३०। द्रुड् शि मज्जने } (द्रुड, तुदा, प) द्वौ रेफयुक्तौ।
मज्जनं जलान्तःप्रवेश'। द्रोडति प्रस्तरो जले। द्रुद्रोडिषति। दुद्रुडिषति। शि—द्रुडति, अद्रुडीत्, दुद्रोड। एतौ कश्चिन्न मन्यते। क्रमदीश्वरस्तु कुटादिमेव मन्यते। (पृथक् पाठात् पूर्व्वो न श्यनुबन्ध')।

३१। द्राडृङ् शीर्णौ } (द्राड, भ्वा, आ)।
३२। धाडृङ् शीर्णौ } (धाड, भ्वा, आ) द्वौ रेफयुक्तौ।

---

(१) तोडनमुपहनन, तुडति पर परन्तप इति रमानाथ।

ङ—अदट्राडत्, अदभाडत् । ङ—ट्राडते, भाडते । शीर्णि-
विभेदः ।

३३ । शि तुड् वधे ( तुड, तुदा, प ) शि—तुडति, अतुडीत्,
तुतोड ।

**नडक् भ्रंशे पडिङ् गत्यां पडि पिडिक् संहतौ पिडिङ् ।**
**तत्र पीड्क् बाधगाहे पुडि मर्हे ष्टडश् सुदि ।**

३४ । नडक् भ्रंशे (नड, चु, प) क—नाडयति । भ्रंशोऽधः-
पतनम् ।

३४ । पडिङ् गत्या ( पण्ड, भ्वा, आ ) ङ्—पण्डते । ङ—
पण्डते ।

३५ । पडिक् संहतौ } ( पण्ड, चु, प )
३६ । पिडिक् संहतौ } ( पिण्ड, चु, प ) ङ्, क—पण्डयति,
पिण्डयति । संहतीराशीकरणम् ।

३६ । पिडिङ् तत्र ( पिण्ड, भ्वा, आ ) ङ्—पिण्डते ।
ङ—पिण्डते । तत्र—संहतौ ।

३७ । पीड्क् बाधगाहे (पीड, चु, प) बाधो विहतिः, गाहो
विलोडनम् । ङ—अपीपिडत्, अपिपीडत् । ( भ्राज भासेति
वा ह्रस्वः ) क—पीडयति शत्रुं लोकः । पीडयति स्तन कामी ।

३८ । पुडि मर्हे (पुण्ड भ्वा, प) पञ्चमस्वरी । ङ्—पुण्डते।
मर्हश्चूर्णीकरणम् ।

३९ । ष्टडश् सुदि ( ष्टड, तुदा, प ) सुदि स्फुटीकरणे ।
श—ष्टडति दीनं दाता । पण्डिता ।

**शि बुडुत्सर्गसंदृत्योर्भडिङ् वाचि भडिक् शिवे ।**

४० । शि बुडुत्सर्गसंवृत्योः ( बुड, तुदा, प ) शि—बुडति, अबुडीत्, बुबोड ।

४१ । भडिङ् वाचि ( भण्ड, भ्वा, आ ) परिभाषणे इति गोविन्दभट्टः । परिहासे इति चतुर्भुजः । इ—भण्डयते । ङ—भण्डते सिद्धं लोकः ।

४१ । भडिक् शिवे ( भण्ड, चु, प ) शिवं कल्याणक्रिया वेदेष्वेव । प्रतारणे प्रसिद्धोऽयम् । इ, क—भण्डयति प्रतारको लुब्धं धनदानाङ्गीकारेण ।

भ्रुड्शि संवृतिसंहत्यो र्भुडि ङ स्यात् भृतौ हृतौ ।

४२ । भ्रुड् शि संवृतिसंहत्योः ( भ्रुड, तुदा, प ) रेफयुक्तः । शि—भ्रुडति, अभ्रुडीत्, बुभ्रोड । अयं कैश्चिन्न मन्यते ।

४३ । भुडि ङ स्यात् भृतौ हृतौ ( भुण्ड, भ्वा, आ ) पञ्चमस्वरी । इ—भुण्डयते । ङ—भुण्डते । भृतिरिह भरणम् । हृतिरन्यैर्न मन्यते ।

म्लेड म्रेड् मेड उन्मादे म्रड्श मोदे मडिक् चकि ।
मडि भूषे मडि ङ विभागे वेष्टे मुडि च्छिदि ।
मर्द्दे मुडि ङ मज्जेऽथ यौड रौड् तु टान्तवत् ।

४४ । म्लेड् उन्मादे ( म्लेड, भ्वा, प )
४५ । म्रेड् उन्मादे ( म्रेड, भ्वा, प )
४६ । मेड् उन्मादे ( मेड, भ्वा, प ) ह्रस्वाद्यौ क्रमात्ल:स्यतृतीयरेफयुक्तौ । ऋ—अमिम्लेडत् अमिम्रेडत्, अमिमेडत् । म्लेडति, म्रेडति, मेडते उन्माद्यतीत्यर्थः ।

४७ । म्रड् गश् मोदे (म्रड, क्या, तुदा, प) मोद इह हृष्टीभावो हृष्टीकरणञ्च । श—म्रड्णाति सरस्वत्या च यः सदेति हलायुधः । २७१ । श—म्रडति दीनं दाता । अम्रडित्वा सहस्राक्षमिति भट्टिः । ७ । २६ । म्रडिता ।

४८ । मडिक् च (मण्ड, चु, प) इ, क—मण्डयति । चकारान्मोदे ।

४८ । कि मडि भूषे (मण्ड, चु, भ्वा, प) कि—मण्डयति मण्डति भार्य्या जनम् । इ—मण्ड्यते ।

४८ । मडि ङ विभागे वेष्टे (मण्ड, भ्वा, आ) इ—मण्ड्यते । ङ—मण्डते ।

४९ । मुडि छिदि मर्द्दे (मुण्ड, भ्वा, प) पञ्चमस्वरी । इ—मुण्ड्यते । छेद इह लोमच्छेद एव । मुण्डति मुण्डं नापितः लोमरहितं करोतीत्यर्थः ।

४९ । मुडि ङ मज्जे (मुण्ड, भ्वा, आ) पवर्गशेषादिः, पञ्चमस्वरी । मग्नमिति मस्जधातोर्भावक्ते रूपं मज्जनमित्यर्थः । इ—मुण्ड्यते । ङ—मुण्डते मत्स्यो जले । चतुर्भुजस्तु मार्ज्जने इति पठित्वा मार्ज्जनं शुद्धिरिति व्याख्याय मुण्डते जलेन गात्रं लोक इत्युदाहृतवान् ।

५० । यौडृ टान्तवत् } (यौड, भ्वा, प)
५१ । रौडृ टान्तवत् } (रौड, भ्वा, प,) द्वौ चतुर्दशस्वरिणौ । श—अयुयौडत्, अररौडत् । टान्तवदिति यौटृ सम्बन्धे, रौटृ नादरे इत्यर्थः ।

रोडृ रौडृत् लड् विलासे लड्मोन्मन्थनजिह्वयोः ।

५२। रौड़ रौड़त् ( रौड, भ्वा, प ) वर्योरप्यसरी। क्र—चरुरौडत्। रौड़त् चनादरे इत्यर्थः।

५३। लड् विलासे ( लड, भ्वा, प ) लडति बाला।

५३। लड् सोन्मन्यनजिह्वयोः ( लड, भ्वा, घटादिः, प ) म—लडयति। उन्मन्यनं पीड़ितीभाव उत्क्षिप्तीभावश्च। लडति लता वायुना, पीड़िता उत्क्षिप्ता वा स्यादित्यर्थः। जिह्वा जिह्वाविषयकक्रिया। लडति जिह्वा स्वन्दते इत्यर्थः। लालयति लच-मुल्ललयत्यसूनिति श्रीहर्षं, पीडयतीत्यर्थः। ४। १०६। कवाटसीमिन्दुः किरणलहरीमुल्ललयतीति मुरारिः। उत्क्षिपतीत्यर्थः। उभयत्र डलयोरेकत्वाल्ललम्। केचित्तु जिह्वोन्मन्यने इति पठित्वा जिह्वाया उन्मन्यनमुत्क्षेपणमिति व्याख्याय लडयति जिह्वा सर्पं इत्येवोदाहरन्ति। (तावत् खरःप्रखरमुल्ललयाञ्चकार इति माघः। ५। ७)।

## लड् कोपसेवे लड काङ् वीप्से लडि कि भाषणे।

५३। लड् कोपसेवे ( लड, चु, प ) उपसेव इहात्यन्तपालनम्। क—लालयेत् पञ्च वर्षाणि, पुत्रमितिशेषः। अत्र डलयोरेकत्वाल्ललम्। कम्पनार्थास्य प्रायःप्रयोग इति रमानाथः। लाडयति लतां वायुः।

५३। लड काङ् वीप्से ( लड, चु, आ ) क, ङ—लाडयते। लान्त एवायमिति केचित्। विशेषेणाप्तुमिच्छा वीप्सा।

५३। लडि कि भाषणे (लण्ड, चु, भ्वा, प ) इ—लण्ड्यते। कि—लण्डयति, लण्डति। भाषणं कथनम्। अर्थं केचिन्न मन्यते।

**ओ लडि क्षुत्क्षेपणे लुड् मन्थे लुडशि संहतौ ।**
**क्षेपे लोड् लौड् उन्मादे लुण्डक् चौर्य्ये विडाक्रुशि ।**

५३ । ओ लडि क्षुत्क्षेपणे ( लण्ड, चु, भ्वा, प ) ओ—लडितुमः । अनुबन्धवलादिम्ब्यवधानेऽपि निष्ठातस्य नः । अस्याश्विष्ठाया इम् नास्तीत्येके ; लण्ड् इति । इ—लण्ड्यते । कि—लण्डयति लण्डति तण्डुलान् लोकः ।

५४ । लुड् मन्थे ( लुड, भ्वा, प ) लोडति मन्थो विलोडनम् ।

५४ । लुड शि संहतौ क्षेपे ( लुड, तुदा, प ) शि—लुडति, अलुडीत्, लुलोड ।

५५ । लोड् उन्मादे ( लोड, भ्वा, प )
५६ । लौड् उन्मादे ( लौड, भ्वा, प ) ओपधतद्दीर्घस्वरौ । ङ—अलुलोडत् । अलुलौडत् ।

५७ । लुण्डक् चौर्य्ये ( लुण्ड, चु, प ) पञ्चमस्वरी । क—लुण्डयति ।

५८ । विडाक्रुशि ( विड, भ्वा, प ) आक्रुशि आक्रोशने । वेडति शठं खलो ।

**वडिक् विभागे वडिङ वेष्टे च व्रीड् यञि त्रिपि ।**
**लज्जे वाडङ आप्लावे व्रुडशि व्रुडार्थमज्जयोः ।**

५९ । वडिक् विभागे ( वण्ड, चु, प ) इ, क—वण्डयति । अयं कैश्चिन्न मन्यते ।

५९ । वडिङ वेष्टे च (वण्ड, भ्वा, आ) इ—वण्डयते । ङ—वण्डते । चकारात् विभागे च ।

६० । व्रीड् यजि विधि लज्जे (व्रीड, दिवा, प) रेफयुक्तः । य—व्रीड्यति याच्ञां वीरः । व्रीड्यति वधूः । जि—व्रीडितोऽसि ।

६१ । बाडृङ आप्लावे (बाड, भ्वा, आ) ऋ—अबबाडत् । ङ—बाडते लोकः । आप्लावः स्नानम् । उन्मज्जनमित्येके ।

६२ । ब्रुड शि भ्रुड्यर्थमज्जनयोः (ब्रुड, तुदा, प) रेफयुक्तः । शि—ब्रुडति, अब्रुडीत्, बुब्रोड । भ्रुड्यर्थः (भ्रुडधातोरर्थः) संहति-संहतौ, मज्जो मज्जनम् ।

**शाडृङ् श्लाघे गौडृ गर्व्वे शडिङ् सङ्घरुजोः स्फुड ।**
**स्फुड्शि हत्यां स्फुडिङ्फुल्ले स्फुडिक् नर्म्मणि क्रुड्शितु ।**
**मग्ने क्रुडिङ् च लड्ङे क्रुड् हूड हूड हुडृङ् गतौ ।**

६३ । शाडृङ् श्लाघे (शाड, भ्वा, आ) ऋ—अशशाडत् । ङ—शाडते गुणिनं गुणी ।

६४ । गौडृ गर्व्वे (गौड, भ्वा, प) चतुर्द्दशस्वरी । ऋ—अजुगौडत् ।

६५ । शडिङ् सङ्घरुजोः (शण्ड, भ्वा, आ) तालव्यादिः । इ—शण्डयते । ङ—शण्डते काण्डो वीरं, रुजतीत्यर्थः ।

६६ । स्फुड शि हत्याम् } (स्फुड, तुदा, प)
६७ । स्फुड शि हत्याम् } (स्फुड, तुदा, प) शि—स्फुडति, अस्फुडीत्, पुस्फोड । स्फुडति, अस्फुडीत्, पुस्फोड । हत्यां संवरणे ।

६७ । स्फुडिङ फुल्ले (स्फुण्ड, भ्वा, आ) फुल्लं विकसनम् । इ—स्फुण्डयते । ङ—स्फुण्डते कुन्दकोरकः । पुस्फुण्डे ।

६७। स्फुडिङ् नर्म्मणि (स्फुण्ड, चु, प) पञ्चमस्वरी। नर्म्म परिहासः। ष्ण, क—स्फुण्डयति सखायं लोकः। पुस्फुण्डयिषति। षष्ठमाद्यस्वरीति कातन्त्राद्याः। पञ्चमस्वरोऽनार्ष इति गोविन्दभट्टः।

६८। ब्रुड् शि तु मग्ने (ब्रुड, तुदा, प) शि—ब्रुडति अब्रुडीत् बुब्रोड। मग्नं मज्जनम्।

६८। ब्रुतिङ् च सङ्घे (ब्रुण्ड, भ्वा, आ) पञ्चमस्वरी। ङ—ब्रुण्ड्यते। ङ—ब्रुण्डते धनं लोकः, राशीकरोतीत्यर्थः। चकारात् ब्रुडशि च (मज्जनार्थकः)।

६८। ब्रुडृङ् गतौ (ब्रुड, भ्वा, आ)
६९। ह्रुडृङ् गतौ (ह्रुड, भ्वा, आ)
७०। क्रूडृङ् गतौ (क्रूड, भ्वा, आ)
७१। क्रुडृङ् गतौ (क्रुड, भ्वा, आ) मध्यमौ षष्ठस्वरिणौ, शेषौ द्वौ रेफयुतौ। ङ—अजुब्रोडत्, अजुह्रुडत्, अचुक्रूडत्, अचुक्रोडत्। ङ—ब्रोडते, ह्रुडते, क्रूडते, क्रोडते।

**होड ह्रौडृङ् च हिडिङ् होडुङडपिङ् हेडृ च।**
**अनादरे हेडु वेष्टे डान्ताः षट्सप्ततिर्मताः।**

७२। होडृङ् च (हौड, भ्वा, आ)
७३। ह्रौडृङ् च (ह्रौड, भ्वा, आ) द्वौ चतुर्द्दशस्वरिणौ, शेषो रेफयुक्तः। ङ—अजुहौडत्। अजुह्रौडत्। ङ—हौडते। ह्रौडते। चकारात् गतौ।

७४। हिडिङ्डपि (हिण्ड, भ्वा, आ)
७५। होडृङ्कपि (होड, भ्वा, आ) ङ—हिण्ड्यते।

ङ—डिण्डते। श—चजुडोडत्। ङ—डोडते, जुडोडे। श्यपि-शब्दात् गतौ। डिण्डन्ते च यथा रात्राविति हलायुधः। (१११)।

७६। ङ हेड़ु च श्रनादरे (हेड, भ्वा, श्रा) ङ—हेडते, जिहेडे। श—श्रजिहेडत्। चकारात् डिडिड् डोड्ड् च (श्रनादर इत्यर्थः)। (१)। हेडते शीलसम्पन्नो बान्धवानपि तानसाविति हलायुधः। (१११)।

७६। हेड्म वेष्टे (हेड, भ्वा, प) हेडति। ञ—हिडयति (२)। श्रहिडि श्रहीडि। हिड हिड, हीड हीड। एकारस्य ह्रस्वविधाने काण्ठत्वेन समानोऽप्यकारो न स्यात्, एचोयुत् स्वमिति नियमादिकार एव स्यात्। इकारस्य दीर्घविधौत ईकार एव, एकारस्याधिककण्ठत्वेन विकल्पत्वात्। केचित्तु दीर्घपक्षे गुणं विधाय (गुणविधानेनैव दीर्घपक्षावस्थानादित्यर्थः) अहिड़ि अहेडीत्यादि मन्यन्ते।

डान्ताः षट्सप्ततिर्मताः।

(डकारान्ता धातवः षट्सप्ततिसंख्यका ज्ञाताः)

---

## ढान्तवर्गः।

ढुण्ढान्वेषण इत्येको ढकारान्तः प्रकीर्त्तितः।

१। ढुण्ढान्वेषणे (ढुण्ढ, भ्वा, प) ढान्तः पञ्चस्वरी

---

(१) हेडते त्यजतीत्यर्थ इति धातुप्रदीपः। श्रनादरे तु भट्टमल्लः पठतीत्युक्तं कातन्त्रधातुवृत्तौ।

(२) इह पाठसामर्थ्यात् ह्रस्वत्वे सत्यपि श्रोपधात्वयो गुण इत्युक्तं रमानाथेन।

दन्त्यनोपध', द्वयोगान्मूर्द्धन्यसेन ढुण्ढ्यत इत्यादि। ढुण्ढति धनं लोकः।

## इत्येको ढकारान्तः प्रकीर्त्तितः।

---

## णान्तवर्गः।

**अण् रवेऽण् यङ् प्राण ऋण् तुञ् गतावोणृ अपसारणे।**

१। अण् रवे ( अण, भ्वा, प ) अणति। रवः शब्दः।

१। अण् यङ् प्राणे ( अण, दिवा, आ, ) य, ङ—अण्यते जनो जीवतीत्यर्थः।

२। ऋण् तुञ् गतौ ( ऋण, तना, उ ) ट, ञ—ऋणोति अर्णोति; ऋणुते अर्णुते। ङ—अर्णित्वा ऋत्वा। ( इमृपक्षे सेमृत्युधक्रुपक्लिशेति किस्वनिषेधे गुणः, इमोऽभावपक्षे वनतनेति अमृलोपः)।

३। ओणृ अपसारणे ( ओण, भ्वा, प ) ऋ—मा भवान् ओणिणत्। ज्ञापकज्ञापिता विधयो लक्षणमनुसरन्तीति न्यायादस्य ऋदनुबन्धो ज्ञापयति, अञ्जि परे धातूनामादौ ह्रस्वः पश्चाद्द्वित्वमिति। आदौ द्वित्वे दीर्घोपधाया अभ्यासादेव ह्रस्वाभावे ऋदनुबन्धो व्यर्थःस्यात्। (१) अटगतावित्यादीनान्तु मा भवान् अटिटदित्यादि बोध्यम्। अपसारणमपनयनम्। ओणति धनं चौरः।

**कणृ आर्त्तस्वरे कणम गतौ काणक निमीलने।**

---

(१) यत्र गुणकरणं न सम्भवति तत्रादावेव द्वित्वमित्याह अटगताविति।

४। कणृ आर्त्तस्वरे (कण, भ्वा, प) सट—अचीकणत् अचकाणत्। (भ्राजभासेति वा ह्रस्वः)। कणति भीतः।

४। कणम गतौ (कण, भ्वा, प) म—कणयति।

४। कणक निमीलने (कण, चु, प) निमीलनं पक्ष्माभिश्चक्षुष आवरणम्। क—काणयति चक्षु, पक्ष्माभिराहतं स्यादित्यर्थः।

कुण पोषकरणे क्वण च शब्दे कूण कङ सङ्कुचि।

५। कुण पोषकरणे (कुण, तुदा, प) उपकरणं दानादिना पोषणम्। य—कुणति दीनं दयालुः। कोणिता।

६। क्वण च शब्दे (क्वण, भ्वा, प) चकारयुक्तः। क्वणति वीणा। चकारात् क्वणश्च (शब्दार्थकः) (चक्वाणिपुच्छतोत् ... शाखाः। यातुधाना इति शेष इति भट्टिः। ६। ११)।

७। कूण कङ सङ्कुचि (कूण, चु, आ) पद्मस्वरी। क, ङ—कूणयते चक्षुः, सङ्कुचितं स्यादित्यर्थः। पद्ममस्वरीत्येके।

क्षणक्षिण दुञ वधे घण घृण दुञ दीप्तौ घण घिण घृणिङ। ग्रहणे घुणाङ घुणाश घूर्णञ्च भ्रमणे चण। शब्दे चणभि गतौ हिंसे चणम दाने भि चुण छिदि।

८। क्षण दुञ वधे } (क्षण, तना, उ)

९। क्षिण दुञ वधे } (क्षिण, तना, उ) द, ञ—क्षणोति क्षणुते। क्षिणोति क्षिणुते। उ—क्षणित्वा क्षत्वा। क्षेणित्वा क्षित्वा।

१०। घण दुञ दीप्तौ } (घण, तना, उ)

११। घृण दुञ दीप्तौ } (घृण, तना, उ) द, ञ—घणोति

वणुते । घृणोति घर्णोति, घृणुते घर्णुते ( नोप्युङोगुर्णात्वृत इत्यनेन वैकल्पिकगुणनिषेधः ) । उ—घर्णित्वा घृत्वा । घर्णित्वा घृत्वा ।

११ । घृषिङ ग्रहणे ) ( घृस, भ्वा, श्वा )
१२ । घिषिङ ग्रहणे } ( घिस, भ्वा, श्वा )
१३ । घुषिङ ग्रहणे ) ( घुस, भ्वा, श्वा ) त्रयः क्रमात् सप्तमतृतीयपञ्चमस्वरिणः । इ—घृंसते, घिंसते, घुंसते । ङ—घृसते, घिसते, घुसते । जरीघृंसते, जेघिंसते, जोघुंसते ।

१३ । घुणङ भ्रमणे ) ( घुण, भ्वा, श्वा )
१३ । घुणप भ्रमणे } ( घुण, तुदा, प )
१४ । घूर्णञ श भ्रमणे ) ( घूर्ण, तुदा, उ ) ङ—घोणते । श—घुणति, घोणिता । ञ—घूर्णति घूर्णते । जुघूर्णे चक्रम् । श—घूर्णन्ती घूर्णती । अत्र भ्रान्तेर्मध्यमः कुटादौ पठ्यते, तद्वेयमन्येषासम्मतत्वात्; तथात्वे परस्थितानुबन्धस्य पूर्व्वेण सम्बन्धापत्तेश्च । (१)

१५ । चण शब्दे ( चण, भ्वा, प ) चणति ।

१५ । चणमि गतौ हिंसे ( चण, भ्वा, प ) मि—चणयति चाणयति । ( २ )

---

(१) यद्ययं मध्यमो धातुः कुटादि स्यात्तदा घुणति इत्येवं पाठ । तथा सति शकारानुबन्धस्याव्यवहितत्वाभावात् परवर्त्तिनो घूर्णधातो ञोनुबन्धस्य मध्यमेन घुणधातुनापि सह सम्बन्धो दुर्निवार एव स्यात् । तदादिपाठे तु शकारानुबन्धस्य पुनरुक्तत्वाच्च तथेति तात्पर्य्यम् ।

(२) यद्यपि स्वमते सामान्यतोमिकारानुबन्धधातूनां वैकल्पिकह्रस्वविधायकं सूत्रं नास्ति, तथापि केषाञ्चिद्धातूनां विकल्पेन घटादित्वं भवतीति मतमङ्गीकृत्य तएव धातवो मिकारानुबन्धतया दर्शिता चाचार्य्येण । ते च धातव इकारान्तवर्गेषु चिकृमि च इत्यस्य व्याख्यानावसरे उद्धृत्य दर्शितपूर्व्वा मयेति ।

१५। चणम दाने (चण, भ्वा, प) म—चणयति।

१६। शि चुण् छिदि (चुण, तुदा, प) शि—चुणति, अचु-णीत्, चुचोण।

## चूर्णक् प्रेषे चूण तूणक् सङ्कोचेक् तूण्ङ पूरणे।

१७। चूर्णक् प्रेषे। (चूर्ण, चु, प) एतदाद्याश्चत्वारः पठ-र्ग्यादयः। प्रेषश्चूर्णीकरणम्। क—चूर्णयति तण्डुलान् शिला।

१८। चूणक् सङ्कोचे } (चूण, चु, प)

१९। तूणक् सङ्कोचे } (तूण, चु, प) द्वौ क्रमाच्चालव्य-दन्त्यवर्गाद्यादी। क—चूणयति, तूणयति चक्षुः, सङ्कुचितं स्यादि-त्यर्थः।

१९। क तूणङ पूरणे (तूण, चु, आ) क, ङ—तूणयते।

## तृण् तुन् भक्षे तुण् श जैह्मेर दुण् श जैह्मेर वधे गतौ।

२०। तृण् तुन् भक्षे (तृण, तना, उ) इ, अ—तृणोति, तर्णोति, तृणुते, तर्णुते। उ—तर्णित्वा तृत्वा।

२१। तुण्श जैह्मेर (तुण, तुदा, प) जैह्मयमिह कुटिली-करणम्। श—तुणति तृणं वायुः। तोणिता।

२२। दुण्श जैह्मेर वधे गतौ (दुण, तुदा, प) दन्त्यवर्ग तृतीयादिः। श—दुणति। दुद्रोणिषति। जैह्मंर कुटिली-करणम्। (दुणति महतो यस्य दिक्षुषेषु रिपुव्रज इति हलायुधः। २४०। दुणति गच्छति पलायते इत्यर्थः)।

## धण ध्वण ध्रण ध्वाने पणङ् व्यवहृतौ स्तुतौ।

२३। धण ध्वाने } (धण, भ्वा, प)
२४। ध्वण ध्वाने } (ध्वण, भ्वा, प)
२५। भ्रण ध्वाने } (भ्रण, भ्वा, प) शेषौ वकाररेफयुक्तौ क्रमात्। धणति, ध्वणति, भ्रणति मृदङ्गः।

२६। पणङ् व्यवहृतौ स्तुतौ (पण, भ्वा, आ) व्यवहारे, ङ—पणते पणायति पणायते। आयान्तत्वादुभयपदमिति वोपदेवः। प्राणानामपणिष्टासाविति भट्टिः। ८। १२१। अत्र कर्म्मणि षष्ठी (पणोर्व्यवहारे इति षष्ठ्यर्थं परसूत्रम्। तत्र व्यवहारे क्रयविक्रयलक्षणे द्यूतक्रियायाञ्चेति तट्टीकायां भरतः) स्तुतौ तु पणायति पणायते विष्णुं धीरः। अपरे तु द्वयोरर्थयोरेव आयस्याप्राप्तिपक्षे आत्मनेपदमेव। अपणिष्ट, पेणे, पणिता, पणिषीष्ट पणिष्यते, अपणिष्यत। (न चोपलेभे वणिजां पणाया इति भट्टिः। ३। २७)।

पेणृ पेषे गतौ क्षेपे पुणश् धर्म्मे घृणश् त्विषि।

२७। पेणृ पेषे गतौ क्षेपे (पेण, भ्वा, प) ऋ—अपिपेणत्। पिपेणतुः। पेषश्चूर्णीकरणम्।

२८। पुणश् धर्म्मे (पुण, तुदा, प) शुभक्रियायामित्यन्ये। य—पुणति शुभं लोकः। पोणिता। (१)।

२९। घृणश् त्विषि (घृण, तुदा, प) त्विषि त्विषीकरणे। य—अग्निं घृणति यो द्विजः। घर्णिता।

पूणक् सङ्घाते फण ण निःस्नेहे फण् मिण गतौ।

---

(१) धर्म्मोऽत्र धार्म्मिकोभाव इति केचित्। तन्मते पुणति इह दृष्टुदाहरणम्। शुभक्रियायामर्थे धात्वर्थोपसंग्रहादकर्म्मकत्वात् पुणति शुभं लोक इति सकर्म्मकोदाहरणं कथं सङ्गच्छते तत् सुधीभिर्भाव्यम्।

३०। पूणक् सङ्घाते ( पूण, चु, प ) षष्ठस्वरी। क—पूणयति धान्यं लोकः, राशीकरोतीत्यर्थः। अयं केचिन्न मन्यते।

३१। फण च निःस्नेहे (फण, भ्वा, प) च—फेणतुः पफणतुः। निःस्नेहोऽनायासेनोत्पत्तिः। फणति वाञ्छितं श्रीमताम्, अनायासेनोत्पद्यते इत्यर्थः। अस्यैव आन्तस्य निष्ठाया फाण्ट। अनायासकृतं फाण्टमित्यमरः।

३१। फण मिच् गतौ (फण, भ्वा, प) मि—फणयति फाणयति। च—फेणतुः पफणतुः।

## व्रण्बण्भ्रण् शब्दे ऋभण् चभ्रूण क ङ् आशाविशङ्कयोः।

३२। व्रण शब्दे (व्रण, भ्वा, प)
३३। बण शब्दे (बण, भ्वा, प)
३४। भ्रण शब्दे (भ्रण, भ्वा, प) आद्यन्तौ रेफयुक्तौ।
व्रणति, बणति, भ्रणति।

३५। ऋ भण च (भण, भ्वा, प) ऋ—अबीभणत् अबभाणत्। चकारात् शब्दे। स चेह व्यक्तवाक्यम्। श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम्।

३६। भ्रूण् कङ् आशाविशङ्कयोः (भ्रूण, चु, आ) रेफयुक्तः षष्ठस्वरी। क, ङ—भ्रूणयते भर्तृं लोकः, प्रत्याशाविषयं करोतीत्यर्थः। (भ्रूणः, भ्रूण आशंसाया चुरादेर्बञ् इत्यमरटीका) (भ्रूणयते स्त्री वा पुमान् वेत्याशङ्कतेऽसावित्यर्थो वा)।

## मण् कूजे श् मुण् प्रतिज्ञाने स्तणश् हिंसे रणम् गतौ।

३७। मण कूजे (मण, भ्वा, प) मणति। कूजे अव्यक्तशब्दे।

३८। श्र मुण्—प्रतिज्ञाने (मुण, तुदा, प) श्र—मुणति व्रतं लोकः, प्रतिजानीते इत्यर्थः। मोणिता।

३९। क्षणाथ हिंसे (क्षण, तुदा, प) पवर्गशेषादिः। श्र—क्षणाति। मर्णिता। युद्धे—क्षणाति मारणानिति हलायुधः। (१०५)।

४०। रणाम गतौ (रण, भ्वा, प) म—रणयति

रण् व्रण् कत्य वण् च हण् दुञ् भक्षे वेणृञ् निशामने
वादित्रादान-गमन-ज्ञान-चिन्तासु वर्णक।
वर्णे श्रोणगतेऽस्मिन् श्रण् श्रण्स दाने थणक् तथा।

४०। रण् कति } (रण, भ्वा, प)
४१। व्रण् कति } (व्रण, भ्वा, प) पूर्व्वोरेफादिः शेषो रेफयुक्तवकारादिः। रणति। व्रणति। कति शब्दे।

४२। म्ह वण् च (वण, भ्वा, प) म्ह—अवीवणत् अववाणत्। चकारात् कति।

४३। हण् दुञ् भक्षे (हण, तना, उ) ह, ञ—हणोति हर्णोसि हणुते हर्णुते। उ—वर्णित्वा हत्वा।

४४। वेणृञ् निशामने वादित्रादानगमनज्ञानचिन्तासु (वेण, भ्वा, उ) ऋ—अविवेणत्। ञ—वेणति वेणते। विवेणे। निशामनं चाक्षुषज्ञानम्। वादित्रं मुरजादि, तस्यादानं ग्रहणं वादित्रादानम्। केचित्तु वादित्रं वादित्रविषया क्रिया इत्येकोऽर्थं इत्याहुः। (१)।

---

(१) आदानमित्यपरोऽर्थः। तथाच वेणः कीचकास्तेसुरित्यस्य टीकायां "वेणति गृह्णाति शोभादिकं, वेणृञ् निशामने वादित्रादान-गमन-ज्ञान-चिन्तासु च, नाम्नीति डरिति भरत"।

४५। वर्णक वर्णे ( वर्ण, चु, प ) वर्णयति। अयं कैश्चिन्न मन्यते ( वर्णातूक इत्यदन्तचुरादिनैव सिद्धेः )।

४६। शोणृ गतेऽग्निनृ ( शोण, भ्वा, प ) च—अशुशोणत्। अग्निन् वर्णे। वर्णश्चेहारक्तवर्णीभावः। शोणति सूर्यः सन्ध्यायाम्।

४७। श्रणम दाने } ( श्रण, भ्वा, प )
४८। श्रणम दाने } ( श्रण, भ्वा, प ) शेषो रेफयुक्तः। म—श्रणयति, श्राणयति। ( *विश्रणन्ति च तेऽयश्चै वन्यराचः सदाग्निप इति हलायुधः। १७०* )।

४८। श्रणक तथा ( श्रण, चु, प ) रेफयुक्तः। क—श्राणयति। तथा दाने। अमतेऽस्य अरुचि कृतविकल्पोऽप्यदमस्रादनुमन्याभावः केषाञ्चिदनुरोधात्। ( विश्राणयति यः श्रीमान् विप्रेभ्यो विपुलंवक्षिति हलायुधः। १७० )।

श्रोण स्रोणृतु सङ्घाते णान्ताः मञ्चाशदीरिताः।

४६। श्रोणृ सङ्घाते } ( श्रोण, भ्वा, प )
५०। स्रोणृ सङ्घाते } ( स्रोण, भ्वा, प ) द्वौ तालव्यादौ, क्रमाद्रेफान्तःस्थतृतीययुक्तौ च। च—अशुश्रोणत् असुस्रोणत्। सङ्घातो राशीकरणम्। (१)।

णान्ताः पञ्चाशदीरिताः।

( पञ्चाशत्संख्यका णकारान्ता धातवः कथिताः )।

---

(१) अमरोक्तपङ्गुवाचकश्रोणशब्दस्य टीकायां "श्रोणति बहुयो संहतो भवति श्रोणः, श्रोणृ सङ्घाते पचादित्वादच्"इति भरतः।

## तान्तवर्गः ।

अत् सातत्यगतेऽतीति बन्धे ऋत् स्पर्द्धनैश्वयोः ।
घृणागत्योः कृतीध् वेष्टे कृती शप च्छिदि कृतक् ।
संग्रब्दे कित् संशयेच्छावासारोग्ये लि कित् मतौ ।

१ । अत् सातत्यगते (अत, भ्वा, प) सातत्यगतं नैरन्तर्य्येण भ्रमणं प्रापणञ्च । अतति वायुः । अतति सूर्य्यो गगनं, सततं प्राप्नोतीत्यर्थः ।

१ । अति बन्धे } (अन्त, भ्वा, प)
२ । ईन्ति बन्धे } (ईन्त, भ्वा, प) शेषो दीर्घादिः । य—अन्त्यते । ईन्त्यते ।

३ । ऋत् स्पर्द्धनैश्वयोः घृणागत्योः (ऋत, भ्वा, प) घृणा दया । ऋतीयते जनः, स्पर्द्धते, ईश्वरो भवति, कश्चिद्दयते, गच्छति वेत्यर्थः । अरे तु ईयङोऽप्राप्तिपक्षे परस्मैपदमेव । आर्त्तीत् आनर्त्त इत्यादि ।

४ । कृतीध् वेष्टे (कृत, रुधा, प) ई—कृत्तः । अ—कृणत्ति । चकर्त्त ।

४ । कृती श प छिदि (कृत, तुदा, प) ई—कृत्तः । श, प—कृन्तति । चकर्त्त । कृत्कृतचृदित्यादिना वेमत्वादेव निष्ठायां अनिमत्वे सिद्धे अस्य पूर्ब्बस्य च ईदनुबन्धो नेम् ङीश्चीत्यस्य व्यभिचारसूचनार्थः । तेन धातुज जवे अमीत्यादीनां "धाविताः पान्थसार्थो" इत्यादि सिद्धमिति रमानाथः । मनितं यतितमित्यादि सिद्धमिति क्रमदीश्वरः । केचित्तु धावनं धावः सोऽस्य जातो

धार्वित इत्यादि समाधाय ईदित्करणमाभ्यां यङ्लुकि निष्ठाया इण्निषेधार्थं, तेन चरीकृत्तमित्याहुः। विरचितनिकृन्तनकुन्तमुखा-कृतिकेतकिदन्तुरिताशे इति जयदेवोक्तं निकृन्तन्तं करोतीति णिजन्तात् औ नन्द्यादित्वादनप्रत्यये साध्यम् । ( यं कृणत्ति गुण-ग्रामः कृन्तत्यरिशिरांसि य इत्युभयत्र हलायुधः । (२२) ।

५ । कृतक संशब्दे ( कृत, चु, प ) दीर्घो । क—कीर्त्तयन्ति च गोष्ठीषु यद्गुणानमरोगणा इति हलायुध । १२२ । कीर्त्ता-देशस्य नित्यत्वेऽपि कृतपाठः कीर्त्तादेशस्य क्वचित् व्यभिचार-सूचनार्थं, तेन अचीकृतदित्यादि सिद्धम् । ( अचिकीर्त्तदित्यपि, तेन "अपप्रथद्गुणान् भ्रातुरचिकीर्त्तच्च विक्रममिति भट्टिः । १५ । ७२ ) ।

६ । कित् संशयेच्छावासारोग्ये ( कित्, भ्वा, प ) विचिकित्-सति मनः, संशेते इत्यर्थः । आरोग्ये—चिकित्सत्यातुरं वैद्यः । इच्छानिवासयोस्तु केततीति बोपदेवः । तत्र तिबादयो न प्रयु-ज्यन्ते इति रमानाथः । " इति न वनिता मेता हन्तुं मनो विचिकित्सते" इति तु अन्तर्भूतणार्थतया कर्म्मकर्त्तरि सन-स्न्यग्रन्थेत्यादिना यको निषेधे सिद्धम् ।

६ । क्तिकित् मतौ ( कित्, ह्वा, प ) र—वैदिकः । कि—चिकेत्ति ।

## चतेञ् याचे चिती ज्ञाने चितकङ् च चितिक् स्मृतौ ।

७ । चतेञ् याचे ( चत, भ्वा, उ ) ए—अचतीत् । अ—चतति चतते ।

८ । चिती ज्ञाने ( चित, भ्वा, प ) ई—चित्तः । ज्ञानमिह

जागरणं ज्ञानञ्च। अविद्यानिद्रयाक्रान्ते जगत्येकः स चेततीति हलायुधः। १२६। चिचेत रामस्तत्कृच्छ्रमिति भट्टिः। १४। ६२। (कृच्छ् नागपाशबन्धनरूपं, चिचेत ज्ञातवान्)।

८। चितक ङ् च (चित, चु, आ) क, ङ—चेतयते। चकारात् ज्ञाने। तत्रोपयायिका यावद्राघवश्चेतयन्ति नेति भट्टौ (८। १२३) गणकृतानित्यत्वादात्मनेपदम्। चेतनं चेतसं करोतीति णौ वा साध्यम्। (कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयमिति कादम्बर्याम् उत्तरखण्डप्रारम्भे ग्रन्थकृदुक्तिः)।

८। चितिक् स्मृतौ (चिन्त, चु, प) इ, क—चिन्तयति विष्णुं सुधीः।

चृत् कि सन्दीपने चृत् श हिंसे ग्रन्थे चुल च्युतिर्।
क्षरणे जुत् ज्युटङ् द्युत्यां ज्यतिर्वाप द्युत्लृङ् रुचि।

९। चृत् कि सन्दीपने (चृत्, चु, भ्वा, प) कि—चर्तयति, चर्तति।

९। चृत् श हिंसे ग्रन्थे (चृत्, तुदा, प) श—चृतति। चर्तिता। ग्रन्थो ग्रन्थनम्।

१०। च्युतिर् क्षरणे } (च्युत, भ्वा, प)

११। श्च्युतिर् क्षरणे } (श्च्युत, भ्वा, प) [illegible] मुक्तः। इर्—अच्युतत् अच्योतीत्। अश्च्युतत् अश्च्योतीत्। [illegible] स्याधिकम्। च्योतति श्च्योतति [illegible]।

१२। जुतङ् द्युत्याम् } (जुत, भ्वा, आ)

१३। ज्युतङ् द्युत्याम् } (ज्युत, भ्वा, आ) ङेर्वादात्मने-

न्तःस्थादि युक्ताः। ऌ—अजजोतत् अजुज्योतत्। ङ—ज्ञोतते ज्योतते चन्द्रः।

१३। च्युतिर् (च्युत, भ्वा, प) क्षर्—अच्युतत् अच्योतीत्। चकारात् द्युत्याम्।

१४। अथ द्युत् ऌ ङ्‌ अपि (द्युत, भ्वा, आ) ऌ—अद्युतत्। ङ—द्योतते। दिद्युते। अपि शब्दात् द्युत्याम्।

**नृतय नर्त्ते पतय ऐश्वे पत्‌ऌज् गत्याञ्च पुस्तक।**
**बन्धे बुस्तक् च नादृत्यादृत्योर्मुस्त क संहतौ।**

१५। नृतय नर्त्ते (नृत, दिवा, प) य—नृत्यति नर्त्तकः।

१६। पतय ऐश्वे (पत, दिवा, आ) य, ङ—पत्यते। ऐश्वर्यमीश्वरीभावः।

१६। पत् ऌञ गत्याञ्च (पत, भ्वा, प) ऌ—अपतत्। ञ—पातः पतः (ज्वलादित्वात् इति विभाषया णप्रत्ययः।) गतिरिह पतनम्। पतति पत्रं रथात्। चकारादैश्वे च।

१७। पुस्तक बन्धे (पुस्त, चु, प) एतदाद्यास्त्रयः पञ्चमस्वरियो दन्त्यसोपधाः। क—पुस्तयति।

१८। बुस्तक् च नादृत्यादृत्योः (बुस्त, चु, प) नादृतिरनादरः। क—बुस्तयति खलं लोकः। बुस्तयति धीरं सुधीः। चकारात् पुस्तक च (नादृत्यादृत्यर्थकः)।

१९। मुस्त क संहतौ (मुस्त, चु, प) मवर्गीयादिः। क—मुस्तयति।

**यत् क खेदोपस्कारयोर्निरः प्रत्यर्पणे यतीङ्।**
**यते युतङ दीप्तौ रुत् कच रुत् ङुवॢ वर्त्तने।**

२०। यत्न खेदोपस्कारयोः ( यत, चु, प ) खेद इह ताडनम्। क—यातयति पुत्रं पिता, ताडयतीत्यर्थः। यातयति गृहं गृहिणी, उपस्करोतीत्यर्थः।

निरः प्रत्यर्पणे।

( निरुपसर्गात् यातिधातुः प्रत्यर्पणेऽर्थे प्रयुज्यते इत्यर्थः )। प्रत्यर्पणं परिवर्त्तः। निर्यातयति धान्येन माषं लोकः, धान्यं गृहीत्वा माषं ददातीत्यर्थः।

२०। यतीङ यत्ने ( यत, भ्वा, आ ) ई—यत्तः। ङ—यतते पठितुं शिष्यः।

२१। द्युतङ दीप्तौ ( द्युत, भ्वा, आ ) ञ—अद्युतत्। ङ—द्योतते।

२२। वृतक च (वृत, चु, प) क—वर्त्तयति। चकारात् दीप्तौ।

२२। वृत् ङुवृङ वर्त्तने (वृत, भ्वा, आ) ङ—वर्त्तते। ङ—वर्त्तित्वा वृत्त्वा। य—वर्त्स्यति, विवृत्सति। ( वृद्भ्योऽनिट् पै स्यसनोर्वाक्ते इत्युक्तेः। मै—वर्त्तिष्यते। आदन्यत्र विवर्त्तिषा विवृत्सा )। ञ—अवृतत्।

वृत् वावृत्युङ सम्भक्तौ वरणे वस्तकङ् वधे।

२२। वृत् युङ सम्भक्तौ } ( वृत्, दिवा, आ )
२३। वावृत् युङ सम्भक्तौ } (वावृत्, दिवा, आ) य, ङ—वृत्यते, वावृत्यते। ङ—वर्त्तित्वा वृत्त्वा, वावर्त्तित्वा वावृत्त्वा। सम्भक्तिः सेवनम्।

२४। वस्त कङ् वधे ( वस्त, चु, आ ) दन्त्यसोपधः। क, ङ—वस्तयते। गतिहिंसायाचनेष्विति केचित्।

**ष्टश्चिताङ् श्चौक्ते श्चुत्श्च्युतिर् स्यात् चरे गस्तपस्तिलुर्।**
**स्तभे प्वर्त्तस्वर्त्तक् गत्यां तङ्के तास्त्रिंशदेकतः।**

२५। ष्टश्चिताङ् श्चौक्ते (श्चित, भ्वा, आ) वकारयुक्तः। ष्ट—अश्चितत्। आ—श्चिततं श्चित्तं तेन, प्रश्चितितः प्रश्चित्तः सः। ङ—श्चेतते प्रासादः। (अजस्रमश्रुभिः यत्नूस्त्रीणा धौतमिषाधिकं। यद्रूयशः श्चेतते दिक्षु इति हलायुधः। २३६)।

२६। श्चुतिर स्यात् चरे } (श्चुत, भ्वा, प)
२७। श्च्युतिर स्यात् क्षरे } (श्च्युत, भ्वा, प) द्वौ तालव्यवर्गाद्ययुक्ततालव्यादी, शेषोऽन्तःस्थादियुक्तश्च। नकारस्यानुस्वारपञ्चमावित्यादिनियमेऽप्यनयोस्तालव्यादित्वं, तद्वचनस्य व्यभिचारसूचनार्थम्। तेन चुश्च्मलोपे इत्यादीनामोष्ठ्यवर्गशेषोपधत्वं सङ्गच्छते। तेन क्विपि संयोगान्तलोपे चुश्चुम् इत्यादि सिद्धम्। किन्तु द्वौ दन्त्यादी इति धातुप्रदीपकमदीश्वरौ। तन्मते इतं श्चोततीति इतश्चुत्, तमाचष्टे इति ञौ ञौमञ्चेति डित्स्याट्टिलोपे अनाशीप इति यलोपे इतश्चयतीति पुनः क्विपि ञेर्लोपे इतश्च् इति स्थिते संयोगादेः सस्य लोपे इतक् इति। (१)। इर—अश्चुतत् अश्चोतीत्, अश्च्युतत् अश्च्योतीत्। चर इह आसेचनं चरणञ्च। रक्तमश्च्योतिषुः चुश्चा इति भट्टिः। १५। ५१। (कपयः चुश्चाः खण्डिताः सन्तो रक्तं क्षरन्तिस्म इत्यर्थः)। इद अवचमश्च्योतीटिति। निश्च्योतन्ते सुतनु कवरीबिन्दवो यावदेते इति मालत्यां गणकृतानित्यत्वात्।

---

(१) अमतेऽपि स्तानुस्वारादिति चस्य जुपि सन्निपातइत्यात् सन्धिलुप्तेश्च न सन्धिरिति नियमात् झप्झसोरित्यनेन तस्य जकारे सञ्जाते विप्रतिषेधो यद्बाधितं तद्बाधितमेवेति न्यायादाद्यविधिनिषेधस्य बाधे चूर्णितं जस्य गकारे झप्झसोरित्यनेन पुनर्गकारस्य ककारमित्यधिक पाठ।

२८। शसि लुर स्वप्ने ) शनृस्त, अट्, प )

२९। षसि लुर स्वप्ने } ( षनृस्त, अट्, प ) द्वौ क्रमात्तालव्यसदृन्त्यादौ, दन्त्यसोपधौ च। इ—शंसयते, संसयते। नसघ्यपाठेऽपि नलोपान्यत्वाभावादेव लोपासम्भवे इदनुबन्धो येदेपूश्वारणभेदार्थः। लु—शंसि संसि। र—वैदिकः।

३०। ष्वर्त्तक् गत्यां तङ्के } ( ष्वर्त्त, चु, प )

३१। स्वर्त्तक् गत्यां तङ्के } ( स्वर्त्त, चु, प ) द्वौ क्रमात् षकारयुक्तमूर्द्धन्यदन्त्यादी। तङ्को दुःखेन जीवनम्। क—स्वर्त्तयति जनो, गच्छति, दुःखेन जीवति वेत्यर्थः। सिष्वर्त्तयिषति, सिस्वर्त्तयिषति। (१)।

तान्त्रिंशदेकतः।

एकत एकेन सहेत्यर्थः।

( तान्तकारान्ता धातव एकत्रिंशत्संख्यका इत्यर्थः )।

---

थान्तवर्गः।

क्वथेञ् निष्पचने क्रथ्क प्रतिहर्षेऽथ किं क्रथ।

क्लथ श्लथ क्रथ्म वधे कुथि क्लेशे च कुथ्‌ य तु।

पूतित्वे क्लत्यङ श्लाघे कुन्थ क्रुन्थग् श्लिषि श्लिषि।

१। क्वथेञ् निष्पचने ( क्वथ, भ्वा, प ) वकारयुक्तः। ए—अक्वथीत्। ञ—क्वाथः क्वथः। क्वथति वैद्य औषधं, निष्पचतीत्यर्थः।

(१) ष्वर्त्त स्वर्त्तेति षोपदेशाषोपदेशधातुद्वयपाठात् प्रथमस्य कृतसकारतया निःस्तो षेऽर्दिति नियमात् क्विबादिष्वनेन षत्व प्रत्ययस्त न नेति बोध्यम्।

२। कथक प्रतिहर्षे (कथ, चु, प) रेफयुक्तः। प्रतिहर्षः पुनः पुनः हृष्टीकरणम्। क—काथयति शिशुं लोकः, पुनः पुनः हर्षयतीत्यर्थः।

२। कथ कि कथ वधे } (कथ, चु, भ्वा, प)
२। क्रथम वधे } (क्रथ, भ्वा, प)
३। क्लथम वधे } (क्लथ, भ्वा, प)
४। क्रथम वधे } (क्नथ, भ्वा, प) द्वावाद्यौ रेफयुक्तौ। पुनः पाठात् पूर्व्वौ न मित्। शेषौ क्रमादन्त:स्थतृतीयदन्त्यवर्गेपेयुक्तौ। कि—काथयति क्रथयति। म—क्रथयति, क्लथयति, क्नथयति।

५। कुथि क्लेशे च (कुन्थ, भ्वा, प) पञ्चमस्वरी। इ—कुन्थते। क्लेशो दुःखानुभवः। शीतार्त्तश्च न कुन्थतीति हलायुधः। १२४। (यस्य राष्ट्रे जन इति शेषः)। चकारात् वधे।

५। कुथग तु पूतित्वे (कुथ, दिवा, प) पूतित्वं दुर्गन्धीभावः। ग—कुथ्यति कीनो दुर्गन्धःस्यादित्यर्थः। चुकोथ। (यस्य राष्ट्रे धनाद्यो वा ह्रतः कोऽपि न कुथ्यतीति हलायुधः। १२४। न कुथ्यति न पूतिगन्धमावहतीत्यर्थः)।

६। कत्थङ श्लाघे (कत्थ, भ्वा, आ) दन्त्यवर्गीयोपधः। श्लाघः प्रशंसा। ङ—कत्थते गुणिनं गुणी।

७। कुन्थग् श्लिषि क्लिशि } (कुन्थ, क्रा, प)
८। कुन्थग् श्लिषि क्लिशि } (कुन्थ, क्रा, प) द्वौ पञ्चमस्वरिणौ, शेषो रेफयुक्तः। क्लिशि दुःखानुभवे। ग—कुथ्नाति न बुभुक्षार्त्त इति हलायुधः। १२४। कुथ्नाति।

**ग्रथिङ् जैह्म्ये ग् कि ग्रन्थ् दर्भे णाथ नाथृङ् दवाशिषोः।**
**ऐश्वेऽर्थने पुथ्य हिंसे पुथि क्लान्ते पुथक् त्विषि ।**

९। ग्रथिङ् जैह्म्ये ( ग्रन्थ, भ्वा, आ ) रेफयुक्तः। जैह्म्यमिह कुटिलीभावः कुटिलीकरणञ्च। इ—ग्रन्थ्यते। ङ—ग्रन्थते काष्ठं, कुटिलं स्यादित्यर्थः। ग्रन्थते खलो वायुः, कुटिलीकरोतीत्यर्थः।

१०। गकि ग्रन्थ दर्भे (ग्रन्थ, क्र्या, चु, भ्वा, प) रेफयुक्तः। दर्भो ग्रन्थनम्। ग—ग्रथ्नाति मालां मालिकः। कि—ग्रन्थयति ग्रन्थति। ग्रन्थिमुद्ग्रथयितुं हृदयेशे इति (१०।६३) माघप्रयोगश्चिन्त्यः। (१)

११। णाथृङ् दवाशिषोरैश्वेऽर्थने } ( णाथ, भ्वा, आ )
१२। नाथृङ् दवाशिषोरैश्वेऽर्थने } ( नाथ, भ्वा, आ )

वोपदेवविधौ वर्जनेऽप्याद्यस्य पाठः केषाञ्चिदनुरोधात्। शेषो दन्त्यादिः। ऋ—अननाथत्। ङ—प्रणाथते, प्रनाथते। दव उपताप, आशीरिष्टार्थाशंसनम्। ङित्त्वेऽप्यस्य आपथाधीगेत्यनुकारे इति नियमादाशिषोऽन्यत्र परस्मैपदम्, नाथति शत्रुं बली उपतापयतीत्यर्थः। नाथते श्रियं लोक आशंसते इत्यर्थः। नाथति धनी ईश्वरः स्यादित्यर्थः। नाथति भूमिं नृपं विप्रः, याचते इत्यर्थः। मार्गणैरथ तव प्रयोजनं नाथसे किमु न भूभृतः पति

---

(१) कातन्त्रधातुवृत्तौ रमानाथेन ग्रथ बन्धने चेति गणव्याख्यानावसरे श्रोदाहरणं ग्रथधातु व्याख्याय 'तालव्यथकारादिरयमिति वोपदेव । अनर्घराघवे—ग्रन्थाल्पग्रथनानवधेयविकल्पैरिति। कामधेनुधातुप्रदीपे चोक्तोऽस्य निरवोधत ग्रथितमिति दर्शनात् अकर्णततीयादिरयमित्युक्तं। एतेन ग्रथ बन्धने चेतिवत् ग्रथ बन्धने चेत्यपि भवतीति फलितार्थः। अन्यत्रापि ग्रथि ग्रन्थि कौटिल्ये इत्यनयोर्व्याख्याने "चन्द्रगोमिनात्र ग्रथ ग्रथि कौटिल्ये इति पठित्वा ग्रथते ग्रन्थते इत्युक्त'मित्याह रमानाथ ।

मिति भारवौ ( १३ । ५८ ) यापनमप्यार्षमविशेषः । प्रागिपि नित्यमात्मनेपदमन्यत्र विभाषयेति केचित् ।

१३ । पुष्थ हिंसे ( पुथ, दिवा, प ) य—पुथ्यति । पुपोथ ।

१३ । पुथि कुन्थे (पुन्थ, भ्वा, प) पदमन्यदौ । ड—पुन्थते । अन्तःस्थमयमादिरयमित्येके । पुन्थति । कुन्थो वधक्लेशौ ।

१३ । पृथक् लिपि ( पृथ, चु, प ) क—पोथयति । लिपि क्षेपी ।

पथेञ् गत्यां पथिक च प्रोथृञ् पर्य्यापणे पृथक् ।
क्षेपे प्रथक् च प्रथमप् ङ च ख्यातौ मिथृञ् वधे ।
मेधायां मेथृञ् सङ्गे च मन्थ कुन्थे ग मन्थ च ।
गाहेञ् मथे च मथ माथ् लुथि कुन्थे व्यथषङ ।
दुःखे चाले भये वेथ विथृङ् याचे व्यथम् वधे ।

१४ । पथेञ् गत्याम् ( पथ, भ्वा, प ) ए—अपथीत् । ञ—पाथः पथः ।

१४ । पथिक च ( पन्थ, चु, प ) ङ, क—पन्थयति । चकारात्पन्थाम् । ( कुगसर्त्त पन्थयतीति हलायुधः । २३० ) ।

१५ । प्रोथृञ् पर्य्यापणे ( प्रोथ, भ्वा, उ ) रेफयुक्तः । ॠ—अपुप्रोथत् । ञ—प्रोथति प्रोथते । पर्य्यापणं सामर्थ्यम् । पुप्रोथाणे न करणेति भट्टिः । १४ । ८४ । पर्य्यापणं परिपूर्णतेति गोविन्दभट्टः ।

१६ । पृथक् क्षेपे ( पृथ, चु, प ) क—पर्थयति गुडमौषधे जनः ।

१७। प्रथक् च (प्रथ, चु, प) रेफयुक्तः। क—प्राथयति। चकारात् क्षेपे।

१७। प्रथमपृङ च ख्यातौ (प्रथ, भ्वा, था) रेफयुक्तः। म— प्रथयति। प—प्रथा। ङ—प्रथते गुणी, प्रसिद्धः स्यादित्यर्थः। चकारात् प्रथक् च।

१८। मिथृञ् वधे मेधायाम् (मिथ, भ्वा, उ) ऋ—अमि-मेथत्। ञ—मेथति मेथते शास्त्रार्थं शिष्यः, धारयतीत्यर्थः। मिमिथतुः।

१९। मेथृञ् सङ्गे च (मेथ, भ्वा, उ) ञ—मेथति मेथते धीरो गुणिना, संगच्छते इत्यर्थः। ऋ—अमिमेथत्। मिमेथतुः। चकारात् वधमेधयोश्च।

२०। मन्थ कुन्थे (गाहे) (मन्थ, भ्वा, प) कुन्थः क्लेशः मन्थते। मन्थति।

२०। ग मन्थ च गाहे (मन्थ, क्र्या, प) गाहो विलोड़नम्। ग—मथ्नाति दधि वल्लवी। (सौमित्रिरमथ्नात्तुरगेष्वाभिरिति भट्टिः। १७। ४१। मथ्नामि कौरवशतं समरे न कोपादिति वेणी। इत्युभयत्र विनाशार्थः)। चकारात् मन्थ च (भ्वादिगणीयमन्थधातुरपि गाहार्थकः)।

२१। ञ मथे च (मथ, भ्वा, प) ञ—माथः मथः। ए— अमथीत्। चकारात् गाहे। (समाप्तं मकरध्वजेन मथनं त्वत्तो मदर्थं पुरेति रत्नावल्यां विनाशो गाहस्तूभयार्थत्वम्)।

२१। मथि कुन्थे } (मन्थ, भ्वा, प)
२२। माथि कुन्थे } (मान्थ, भ्वा, प)
२३। लुथि कुन्थे } (लुन्थ, भ्वा, प) मध्यमो द्वितीयस्वरी,

शेषः पञ्चमस्वरी। ङ—मन्यते, मान्यते, लुन्यते। कुन्यो वधक्लेशौ।

२४। व्यथष्मङ दुःखे चाले भये (व्यथ, भ्वा, आ) दुःखं दुःखानुभवः, चालः कम्पः। घ—व्यथा। म—व्यथयति। ङ—व्यथते लोकः, दुःखमनुभवति, कम्पते, बिभेति वेत्यर्थः। केचित्तु दुःखभयचालनयोरिति पठित्वा भयेन चालनं भयचालनमित्याहुः। दुःखभयचालने इति पठित्वा दुःखभययोश्चालनमुत्पादनमिति गोविन्दभट्टः।

२५। वेथृङ् याचे } (वेथ, भ्वा, आ)

२६। विथृङ् याचे } (विथ, भ्वा, आ) ङ—अविवेथत्। ङ—वेथते, विवेथे, विविथे।

२७। श्रथम् वधे (श्रथ, भ्वा, आ) एतदाद्याः सर्वे यान्ता रेफयुक्ततालव्याद्याः। म—श्रथयति।

**श्रन्थ कि दर्भे वधे श्रन्थग् मोचे प्रतिहृषि श्रथक्।**
**यत्ने प्रतिहृषि श्रथ्कि बन्धे मोचे वधे श्रथिङ्।**
**शैथिल्येऽमी थकारान्ता अष्टाविंशतिरीरिताः।**

२८। श्रन्थ कि दर्भे वधे (श्रन्थ, चु, भ्वा, प) कि—श्रन्थयति श्रन्थति। दर्भो ग्रन्थनम्।

२९। श्रन्थग् मोचे प्रतिहृषि (श्रन्थ, क्रा, प) ग—श्रथ्नाति वत्सं गोपः, मुञ्चतीत्यर्थः। श्रथ्नाति शिशुं लोकः, पुनः पुनर्हर्षयतीत्यर्थः।

२७ क। श्रथक् यत्ने प्रतिहृषि (श्रथ, चु, प) क—श्राथयति

पठितुं शिष्यः, यतते इत्यर्थः। श्रायवति शिशुं लोकः, पुनः पुनर्दर्पयतीत्यर्थः।

२७ ख। श्रथ कि बन्धे मोचे वधे (श्रथ, चु, श्वा, प) कि—श्राथयति श्रथति। श्राथं श्राथयति स्फुटार्थमधुरं गद्यञ्च पद्यं सदा। भावालङ्कृतिपेशलं श्रथयति स्पष्टाक्षरं नाटकं, श्रथ्नाति प्रथितावदातचरितः शास्त्रं विचित्रञ्च यः॥ इति हलायुधोक्तं श्रथयतीति श्रथत्य दौर्बल्ये इत्यदन्तस्य रूपम्। अनेकार्थत्वाद्ग्रथ्नातीत्यर्थः। (१)

२७ ग। श्रथिड् शैथिल्ये (श्रथ, श्वा, आ) शैथिल्यमिह शिथिलीभावस्तत्करणञ्च। इ—श्रन्थते। ङ—श्रन्थते वस्त्रं, शिथिलं स्यादित्यर्थः। श्रन्थते वस्त्रं लोकः, शिथिलं करोतीत्यर्थः।

**अमी थकारान्ता अष्टाविंशतिरीरिताः। (२)।**

सुगमम्।

---

(१) राज-श्रीशौरीन्द्रमोहन ठाकुर मुद्रित-कविरहस्ये श्रथधातूदाहरणं नास्ति। श्रथधातूदाहरणमेव योऽयं हलायुधश्लोको दुर्गादासेनोद्धृत एतेनैव श्लोकेन तत्र ग्रथधातूदाहरणानि दर्शितानि। श्रायवति श्रथयति श्रथ्नातीत्यत्र तु क्रमेण ग्राययति ग्रथयति ग्रथ्नातीति पदानि सन्ति।

(२) श्रथम् वधे इत्यस्मात् परं ग्रन्थधातुव्यवधानेन पुनः श्रथधातुपाठोऽत्र ग्रन्थस्यैव वैपरीत्यमागता। तन्मया श्रथम् वधे इत्यस्य २७ संख्ययैव सूत्रमेव धातवेऽपि स्वतः श्रथधातवो निर्दिष्टाः। अष्टाविंशतिसंख्या तु क्रमादुरोधाय ग्रन्थधातावेव पूर्णं दर्शिता। किन्त्वत्र श्रथम् वधे इत्यनन्तरं—श्रथम् यत्ने प्रतिहर्षे इत्यर्थकं ग्रन्थमोचयो। वधे श्रथिड् शैथिल्ये ग्रन्थ कि इति धातवोः। ग्रन्थ मोचे प्रतिहर्षे वा अष्टाविंशतिर्मताः। इत्येवं मूलपाठे नैताहशवचनवैपरीत्यं भवतीत्यवगम्यतामिति।

**अद्लृौ भक्षेऽदि बन्धेऽर्हं यातनागतियाचने ।**

१ । अद्लृौ भक्षे ( अद, अदा, प ) लृ—अत्ति । औ—अत्ता । गणकृतमनित्यमिति न्यायात् शपःस्थितौ अदतीत्यपीति वररुचिः ।

१ । अदि बन्धे ( अन्द, भ्वा, प ) इ—अन्द्यते । अन्दति ।

२ । अर्हं यातनागतियाचने ( अर्हं, भ्वा, प ) यातना ताड़नम् । अर्हति पिता पुत्रम् । अरहनं नार्हति यातकोऽपीति रघुः । १७ । न याचतीत्यर्थः ।

**अर्हञ् वधेऽर्हक् च इदि परमैश्वर्य्ये उन्द धी ।**
**क्लेद उर्द्झिति क्रीड़ास्वादे क्लादि तु रोदने ।**
**आह्वानेऽथ क्लाद् षमङ् च वैक्लव्यविकलत्वयोः ।**

२ । अर्हञ् वधे ( अर्हं, भ्वा, उ ) ञ—अर्हति अर्हते । रघुः-अप्यस्वापि अर्हणार्हीदिति । अयमात्मनेपदीत्यन्ये ।

२ । अर्हक् च ( अर्ह, चु, प ) क—अर्हयति । चकारात् वधे । अयमात्मनेपदीत्येके ।

३ । इदि परमैश्वर्य्ये ( इन्द, भ्वा, प ) क्रसादिः । इ—इन्द्यते । इन्दति इन्द्रः ।

४ । उन्द धी क्लेदे ( उन्द, रुधा, प ) क्रसादिः । क्लेद आर्द्रीभावः । ध—उनत्ति वस्त्रं पयसा । ई—उन्नः उत्तः ( ह्रीघ्राध्रोन्द-नुदविन्दोवेति विभाषया नस्य नः ) उन्दिदिषति ।

५ । उर्द्झिति क्रीड़ास्वादे ( उर्द, भ्वा, आ ) क्रसौ, रेफ-

मध्यः । दीर्घस्य नित्यत्वात् ( व्यंनचतयोको धोर्घ इति नियमादिति भावः ) दीर्घादिरिति कश्चित् । मितिः परिमाणम् । ङ—अर्हते कानकं वणिक् ।

६ । क्लदि तु रोदने चाह्वाने (क्लन्द, श्वा, प) इ—क्लन्द्यते ।

६ । अथ क्लद्घ ङ च वैक्लव्यविकलत्वयोः ( क्लद, श्वा, आ) वैक्लव्यं विह्वलीभावः । घ—क्लदा । म—क्लदयति । ङ—क्लदते रोगार्त्तः । चकारात् क्लदि च ( एतद्द्वयार्थकः )

**विलौ लरौ ता, वाक्रन्दक् शब्दसातत्य ल्ट् क्लिदा ।**
**ङ ञि मोक्षे स्नेह दुर्व्विद्द याचा ञि क्लिद् कूजने ।**

विलौ लरौ तौ ।

तौ क्लदिक्लदघाङौ ( विलौ विगतो लौ लकारो ययो स्तयोतौ ) अन्तःस्थलतीयरङितौ च स्याताम् । ( तेन क्लन्द क्लद इतिवत् कन्द कद इत्यपि ) ।

७ । कदि तु रोदने चाह्वाने ( कन्द, श्वा, प ) इ—कन्द्यते ।

७ । अथ कद घ ङ च वैक्लव्यविकलत्वयोः ( कद, भ्वा, आ ) घ—कदा । म—कदयति । ङ—कदते । चकारात् कदि च । ( एतदुभयार्थकः ) ।

तौ द्वौ ( क्लदिक्लदघाङौ ) लरौ च स्याताम् । लस्थाने रेफौ ययो स्तौ लरौ । ( तेन क्लन्द क्लद इतिवत् क्रन्द क्रद इत्यपि ) ।

८ । क्रदि तु रोदने चाह्वाने ( क्रन्द, भ्वा, प ) इ—क्रन्द्यते । ततोऽक्रन्दीदृग्ग्रीवः । क्रन्दन्ति भर्त्तारमिवाभिपन्नम् ।

८ । अथ क्रद घाङ च वैक्लव्यविकलत्वयोः (क्रद, श्वा, आ) घ—क्रदा । म—क्रदयति । ङ—क्रदते । चकारात् क्रदि च ( एतदुभ-

यार्थकः )। एवं क्रदि क्लदि वैक्लव्ये इति भ्वादावात्मनेपदिनौ मानु-बन्धौ दुर्गसिंहादिभिः पठ्येते । क्रन्दते, क्लन्दते, अक्रन्दि अक्रान्दि, अक्लन्दि अक्लान्दि । एतौ बहुवाद्यसम्मतत्वादनेनोपेक्षितौ ।

९। आक्रन्दक् शब्दसातत्ये ( आक्रन्द, चु, प ) आ उपसर्गः । रेफयुक्तोऽयम् । क—आक्रन्दयति । शब्दसातत्यं निरन्तरशब्द-क्रिया । ( आक्रन्दयति यक्षम् ) ।

१०। ऋ क्ष्विदाङ ञि मोचने स्नेहे ( क्ष्विद, भ्वा, आ ) एतदा-द्यांश्रयो षकारयुक्तधात्वाद्याः । ऋ—अक्ष्विदत् । आ—क्ष्वेदितं क्ष्विण्णं तेन, प्रक्ष्वेदितः प्रक्ष्विण्णः सः । ङ—क्ष्वेदते तिलस्तैलं, मुञ्चतीत्यर्थः । ञि—क्ष्विण्णोऽस्मि । स्नेहः स्निग्धीभावः ।

१०। इर् क्ष्विदृ या च् (क्ष्विद, दिवा, प) इर्—अक्ष्विदत् अक्ष्वेदीत् । अयमाञ्चित्यं ङ इति दुर्गसिंहः । य—क्ष्विद्यति । आ—क्ष्वेदितं क्ष्विण्णं तेन, प्रक्ष्विण्णः प्रक्ष्वेदितः सः । चकारात् मोचने स्नेहे ।

१०। आञि क्ष्विद कूजने ( क्ष्विद, भ्वा, प ) आ—क्ष्वेदितं क्ष्विण्णं तेन, प्रक्ष्वेदितः प्रक्ष्विण्णः सः । ञि—क्ष्विण्णोऽस्मि । मूर्द्धन्य-वर्गतृतीयान्तोऽयमित्येके ( क्ष्विड इत्यर्थः )

## क्लदि क्लिदि ञ ङ रुदि क्लिद्यूइलौदे अथौ चुदिच्चुदि ।

११। क्लदि ञ ङ रुदि } ( क्लन्द, भ्वा, उ )
११। क्लिदि ञ ङ रुदि } ( क्लिन्द, भ्वा, उ ) द्वावन्तःस्थ-तृतीययुक्तौ । इ—क्लन्द्यते, क्लिन्द्यते । ञ—क्लन्दति क्लन्दते, क्लिन्दति क्लिन्दते । ङ—क्लन्दते क्लिन्दते । (१) रुदि रोदने ।

---

(१) ञिता सिद्धे ङितोः पाठोऽकर्त्रर्थक्रियाभिप्रायार्थ इति कामधेनुः । अफलवत्कर्त्र्यपि आत्मनेपदार्थं इत्यर्थः ।

१८। खुर्द ङ क्रीडायाम् } ( खुर्द, भ्वा, आ )
१९। खूर्द ङ क्रीडायाम् } ( खूर्द, भ्वा, आ ) द्वौ क्रमात् पञ्चमषष्ठस्वरिणौ। दीर्घिणः पृथक्पाठात् पूर्व्वस्य व्यञ्चनचतयीति न दीर्घः। ङ—खुर्द्दते खूर्द्दते।

२०। खर्द दशने ( खर्द, भ्वा, प ) दशनं दन्तकरणकक्रिया। खर्द्दति मूलकं लोकः। केचित्तु दन्दशूके इति पठित्वा दन्दशूको दन्दशूककर्त्तृकक्रियेत्याहुः।

२१। खिदङ् श्यौ दैन्ये ( खिद, श्या, दिवा, आ ) दैन्यमनुपतप्तीभावः। ङ, श—खिन्ते तेष्वेव यैकूर्व्यं दीयमानं न रुत्साते इति हलायुधः। ह८। ङ, य—स्वसुखनिरभिलापः खिद्यते लोकहेतोरिति शाकुन्तले। औ—खेत्ता।

२१। श खिदौ म परिघाते ( खिद, तुदा, प ) श, म—खिन्दति दुष्ट राजा। औ—खेत्ता।

२२। गर्द कि तु रवे ( गर्द, चु, भ्वा, प ) कि—गर्द्दयति गर्द्दति। रवः शब्दः।

२३। गुर्दक् निकेतने ( गुर्द, चु, प ) दीर्घिणो वक्ष्यमाणत्वादस्य न दीर्घः। क—गुर्द्दयति। निकेतनं निवासः।

गुर्दङ् च कूर्द्दौ, तौ दीर्घौ, गद्द भाषे गुदृङ खेलने।

२३। गुर्दङ् च कूर्द, ( गुर्द, भ्वा, आ ) दीर्घिणो वक्ष्यमाणत्वादस्यापि न दीर्घः। ङ—गुर्द्दते। कूर्द्दः क्रीडा। चकारात् गुर्दक् च ( क्रीडार्थकः )।

तौ दीर्घौ।

तौ गुर्दकगुर्दङौ ( धातू ) दीर्घौ दीर्घवन्तौ।

२४। गूर्द्दक् निकेतने ( गूर्द्द, चु, प ) क—गूर्द्दयति।

२४। गूर्द्दङ् च कूर्द्दे ( गूर्द्द, भ्वा, आ ) ङ—गूर्द्दते। चकारात् गूर्द्दक् च ( कूर्द्दार्थकः )।

२५। गद्दृ भाषे ( गद, भ्वा, प ) गदति। भाषः कथनम्। सारङ्गं कतिचिन्न सञ्जगदिरे इति गणकृतानित्यत्वादात्मनेपदम्।

२६। गुदृङ खेलने ( गुद, भ्वा, आ ) ङ—गोदते।

**चदेञ् याचे चदि ह्लादे दीप्तौ चुदक नुदि छिदिर्। धौञ् छेदे छृद्द कि सन्दीपे छृदुञ् धिदेवने त्विपि।**

२७। चदेञ् याचे ( चद, भ्वा, उ ) ए—अचदीत्। अ—चदति चदते।

२७। चदि ह्लादे दीप्तौ ( चन्द, भ्वा, प ) इ—चन्द्यते। ह्लादो हर्षः। (१)।

२८। चुदक् नुदि ( चुद, चु, प ) नुदि प्रेरणे। चोदयति बाणं वीरः।

२९। छिदिर् धौञ छेदे ( छिद, रुधा, उ ) छेदो द्विधाकरणम्। इर्—अच्छिदत् अच्छैत्सीत्। ध, अ—छिनत्ति छिन्ते दात्रेण लोकः। धौ—छेत्ता।

३०। छृद्द कि सन्दीपे ( छृद्द, चु, भ्वा, प ) सन्दीपो दीप्तीकरणम्। कि—छर्द्दयति छर्द्दति दीपं लोकः।

३०। छृदुञ् धिदेवने त्विपि ( छृद, रुधा, उ ) उ—छर्द्दित्वा

(१) कश्चिदिमं ह्लादनार्थकं मत्वा सकर्म्मकं, ह्लादार्थे चाकर्म्मकमाह। तत्र चन्द्र शब्दव्युत्पादनाय चन्दयतीति औणादिकोरक् इत्यमरटीकार्था, यथा मह्लादना चन्द्र इति रघुश्लोकस्य व्याख्याने चन्दयत्याह्लादयतीत्यत्र च अेरनर्थकत्वापत्ते।

छृत्वा। अ, ध—छृणत्ति छृन्ते। इर्—अच्छृदत् अच्छर्दीत्। देवनं जिगीषाव्यवहारस्तुतिद्युतिकान्तिगतय इति केचित्। समते तु देदृञ देवने इत्यस्य निष्पादनाद्देवनं क्रीड़नमेव। अन्यथा तिपोग्रहणमनर्थकं स्यात्। लिपि दीप्तौ।

छर्द्दक् च वमने छद्द किञ् संवृतौ स मिट्रूर्ज्जने।

३१। छर्द्दक् च वमने ( छर्द्द, चु, प ) वमनं वान्तिः। क—छर्द्दयत्यन्नं लोकः। चकारात् छृदअर्दिर् च।

३२। छद्द किञ् संवृतौ ( छद, चु, भ्वा, उ ) कि, ञ—छादयति छादयते, छदति छदते दिवं मेघः, आच्छादयतीत्यर्थः।

स मिट्रूर्ज्जने।

स 'छद किञ्' ऊर्ज्जने जीवनबलयोर्मित् स्यात् ( मानुबन्धो भवेदित्यर्थः )। म—छदयति पुत्रं पिता, जीवयति बलवन्तं करोति वेत्यर्थः।

णर्द्द शब्दे णट्ट क्लिष्टोक्तौ णटक भासि ञौ णुद्ञ्। प्रेरणे णेद णिदृञ् सन्निधौ णिदि च कुत्सने।

३३। णर्द्द शब्दे ( णर्द्द, भ्वा, प ) णोपदेशविधौ वर्ज्जनेऽप्यस्य इह पाठः केषाञ्चिदनुरोधात्। प्रणर्द्दति।

३४। णद क्लिष्टोक्तौ ( णद, भ्वा, प ) क्लिष्टोक्तिरव्यक्तशब्दः। नदति घण्टा।

३४। णट क भासि ( णट, चु, प ) क—नाटयति। भासि दीप्तौ।

३५। ञौ णुदञ् प्रेरणे ( णुद, तुदा, उ ) ञ, य—नुदति नुदते शरं योधः। ञौ—नोत्ता।

३६ । णोदृञ् सन्निधौ } ( णोद, भ्वा, उ )
३७ । णिदृञ् सन्निधौ } ( णिद, भ्वा, उ ) सन्निधिः सन्निकर्षः । ञ्द—प्रनिनेदत् । अ—नेदति नेदते दयालुं दीनः । (१) निनेदुः निनिदुः ।

३७ । णिदि च कुत्सने ( निन्द, भ्वा, प ) निसनिन्दनिक्षा णोपदेशफलं चिन्त्य, णत्वविकल्पने स्वरूपग्रहणात् । (२) केचित्तु सति विकल्पमिच्छन्ति, त्यादौ तूपसर्गादसमासे उपसर्गात् समासे नित्यमित्यर्थः । (३) यथा प्रणिन्दकः प्रनिन्दकः । (४) प्रणिन्दति । भट्टौ तु त्यादावपि विकल्पो दृश्यते । द्व—निन्द्यते । निन्दति दुष्टं लोकः । चकारात् णोदृणिदृञ् च ( कुत्सार्थकः ) ।

तर्द्द हिंसे टदुञ् धिर्नोटरे च तुद औश् व्यथे ।

३८ । तर्द्द हिंसे ( तर्द्द, भ्वा, प ) तर्द्दति ।

---

(१) अत्र निकटसंयोगात्तदनुकूलव्यापारोऽर्थः । ततश्च निकटसंयोगरूप धात्वर्थतावच्छेदकफलशालित्वाद्दयालो कर्म्मत्वम् । दयालुसमीपं गच्छतीत्यर्थः ।

(२) णत्वविकल्पने विभाषया णत्वविधानप्रसङ्ग इत्यर्थः । स्वरूपग्रहणात् सह पाठ्यां निसनिन्दनिक्षा ग्रहणात् । निसनिन्दनिक्षाम् धातो निर्दिष्ट तेषां विकल्पेन णत्वविधानादित्यर्थः ।

(३) यत्र स्याद्यन्तपदस्य उपसर्गयोगे समासस्तत्र उपसर्गादसमास उपसर्गेण सह धातो समासाभाव इत्यर्थः । यत्र तु प्रागेव उपसर्गेण धातो समासे यथा णिजादिर्विधीयते तत्र उपसर्गात् समासे । ततश्च स्याद्यन्तानां निसनिन्दनिक्षां प्रति णत्वविधौ उभयथापि नित्यत्वम् हरन्नामान्तु तथात्वे विकल्पेनेति वोपदेवाशयः ।

(४) यद्यपि हरन्नोदाहरणे प्रपतो निसर्गं प्रनिष्ठापम् इत्यत्र णत्वं न स्यात् । अतएव यदा धातुपूर्वं प्रादेर्योगस्तदैव स्यात्' अत्र तु प्रादेरुपसर्गत्वं नास्ति प्रतीयुक्तम् ।

३९ । तृदुिर् हिंसानादरे च ( तृद, रुधा, उ ) उ—तर्दित्वा तृत्त्वा । श, त्र—तृणत्ति तृन्ते । इर्—अतृदत् अतर्दीत् । चकाराद्धिंसे च ।

४० । तुद औश् व्यथे ( तुद, तुदा, उ ) श, त्र—तुदति तुदते । औ—तोत्ता । व्यथ इह आन्तस्य रूपम् । तुतोद गदया चारिमिति भट्टिः । १४ । ८१ । विधुन्तुदः ।

## णदि चेष्टे ददङ् दाने ष्वतौ टु नदि संवृधि ।

४१ । णदि चेष्टे ( नन्द, भ्वा, प ) तवर्गाद्यादिः । इ—नन्द्यते । ननन्द । तुदि चेति दामोदरः । ( दामोदरमते तुन्दधातुरपि ) तुन्दं जठरम् ।

४२ । ददङ् दाने ( दद, भ्वा, आ ) ङ—ददते ।

४३ । टु नदि संवृधि ( नन्द, भ्वा, प ) टु—नन्दथुः । इ—नन्द्यते । संवृधि आनन्दयुक्तभावे । ननन्द पारिप्लवनेत्रया नृप इति रघुः । ३ । ११ । नन्द्यते च कुलं पुंसामिति तु गणस्यानित्यत्वात् ।

## नर्द शब्दे पर्दङ् अपानोत्सर्गे पद्ट यङौ गतौ ।

४४ । नर्द शब्दे ( नर्द, भ्वा, प ) नर्दति ।

४५ । पर्दङ् अपानोत्सर्गे ( पर्द, भ्वा, आ ) ङ—पर्दते दद्रुः ।

४६ । पद्ट यङौ गतौ ( पद, दिवा, आ ) य, ङ—पद्यते । औ—पत्ता ।

## पद्ट बद्द स्थैर्य्ये बिदि त्वंशे बुद्द बुन्दिर्ञ् निशामने ।

४६ । पद्ट स्थैर्य्ये } ( पद, भ्वा, प )
४७ । बद्द स्थैर्य्ये } ( बद, भ्वा, प ) पदति, बदति पर्व्वतः ।

अबादीत् अवदीत् । ह्मयादेः क्षेम इत्यादिना वा वृद्धिः, व्रज-वदेत्यत्र दन्त्यादिवदोग्रहणात् ।

४८ । विदि तु अंशे ( विन्द, भ्वा, प ) इ—विन्द्यते । अंशे अवयवे । विन्दुरिति शब्दस्य व्युत्पत्त्यर्थमेवायं धातुर्मन्तव्यो नत्व-स्यान्यत्र प्रयोग इति बालपाठायणम् ।

४९ । बुदिर्ञ् निशामने } ( बुद, भ्वा, उ )

५० । बुन्दिर्ञ् निशामने } ( बुन्द, भ्वा, उ ) द्वौ पञ्चम-स्वरिणौ । इर्—अबुदत् अबोदीत्, अबुन्दत् अबुन्दीत् । ञ—बोदति बोदते, बुन्दति बुन्दते । उ—बोदित्वा बुत्त्वा, बुन्दित्वा बुत्त्वा । निशामनमालोचनम्, प्रणिधानमिति केचित् । सर्वंवे शरवन्धेन दिव्येनेति बुबुन्द स इति भट्टिः । १४ । ७२ । शेषरा-लव्यवर्गीयादिरित्येके । ( चुन्द इत्यर्थः ) ।

## भदिक् शुभे भदिङ् मोदप्रीत्योश्च ञ् धौ भिदिर्भिदि ।

५१ । भदिक् शुभे ( भन्द, चु, प ) इ, क—भन्दयति । शुभं शुभक्रिया ।

५१ । भदिङ् मोदप्रीत्योश्च ( भन्द, भ्वा, आ ) मोदो हर्षः । प्रीतिः प्रीतीकरणम् । चकारात् शुभेच । इ—भन्द्यते । ङ—भन्दते परिडतः सदा ।

५२ । ञ धौ भिदिर्भिदि ( भिद, रुधा, उ ) भित् कियदवयव-विदारणम् । ञ, ध—भिनत्ति भिन्ते कूलं नदी । धौ—भेत्ता । इर्—अभिदत् अभैत्सीत् ।

## मदिङ् स्वपने जाड्ये मदे मोदे स्तुतौ गतौ ।

५३ । ( मन्द, भ्वा, आ ) इ—मन्द्यते । ङ—मन्दते जनः,

स्वपिति, जडीभवति, माद्यति, मोदते, क्षौति, गच्छति चेत्यर्थः ।

**मदीभिर्यञि हर्षे स मिद्वर्थे ग्लेपने मदक् ।**
**ङ तृप्तियोगे म्रद्मपङ चोदे मिदि मिदक् स्निहि ।**

५३ । मदीभिर्यञि हर्षे ( मद, दिवा, प ) ई, ञि—मत्तोऽस्ति । भ, य—माद्यति । इर्—अमदत् अमादीत् अमदीत् । अप्राप्तिस्यं ङ इति दुर्गसिंहः ।

स मिद्वर्थे ग्लेपने ।

( स पूर्वोक्तो मदधातुर्गर्थे ग्लेपने चार्थे मित्, घटादिर्भवतीत्यर्थः ) । गर्वोऽहङ्कारः, ग्लेपनं दैन्यम् । म—मदयति गर्वं शूरः ।

५३ । मदक् ङ तृप्तियोगे ( मद, चु, आ ) क, ङ—मनो मादयते यस्य शास्त्राभ्यासरसायणादिति हलायुधः । २३ ।

५४ । म्रद मपङ चोदे ( म्रद, भ्वा, आ ) रेफयुक्तः । चोदचूर्णीकरणम् । म—म्रदयति । प—म्रदा । ङ—म्रदते काननं दन्ती ।

५५ । मिदिक् स्निहि } ( मिन्द, चु, प )
५५ । मिदक् स्निहि } ( मिद, चु, प ) स्निहि स्निग्धीभावे । इ, क—मिन्दयति मेदयति वर्त्तिका तैलेन ।

**ञिमिदृ या लृ मिदा ञिङ् च मिदृ मेदञ् वधमेधयोः ।**

५५ । ञिमिदृ या च } ( मिद, दिवा, प )
५५ । लृ मिदा ञिङ् च } ( मिद, भ्वा, आ ) अत्र न परेपाद्य मध्यम इति नियमेऽपि पूर्वस्य इरिद्विधानात् लृकारः परस्यैव । पूर्वादपि नित्यं ङ इति दुर्गः । इर्—अमिदत् अमेदीत् ।

य—मेद्यति । क्षा—मेदितं स्निग्धं तेन, प्रमिन्नः प्रमेदितः सः । इतिच्छायामशीलोऽसौ महाकायो न मेद्यतीति हलायुधः । १३६ । ( न मेद्यति न स्वेदजलार्द्रीभवतीत्यर्थः ) ड—अमिदत् । क्षा पूर्ववत् । ( क्षाकारानुबन्धफलं पूर्ववर्त्तिधातुवदित्यर्थः ) ञि—मिन्नोऽस्ति । ङ—मेदते । चकारात् स्निह्यति । किञ्चित् किल न मेदते इति हलायुधः । १३६ ।

५५ । मिदृञ् वधमेधयोः } ( मिद, भ्वा, उ )
५६ । मेदृञ् वधमेधयोः } ( मेद, भ्वा, उ ) ऋ—अमिमेदत् । ञ—मेदति मेदते यज्ञार्थं, धारयतीत्यर्थः । मिमिदुः । मिमेदुः ।

## मुदक् संसर्गे ञि मुदङ् हर्षे स्रद्ग क्षुदि लघिर् । रुद् रोदे रद उत्खाते वदिङ् नुत्यभिवादयोः ।

५७ । मुदक् संसर्गे ( मुद, चु, प ) क—मोदयति घृतेनान्नं लोकः ।

५७ । ञि मुदङ् हर्षे ( मुद, भ्वा, आ ) हर्षश्चित्तोत्साहः । ञि—मुदितोऽस्ति । ङ—मोदते धनी ।

५८ । स्रद्ग क्षुदि ( स्रद, क्र्या, प ) ग—स्रद्नाति । ससर्द । क्षुदि चूर्णीकरणे ।

५९ । लघिर् रुद् रोदे ( रुद, अदा, प ) रोदोऽश्रुविमोचनम् । ख, घ—रोदिति लोकः शोकात् । इर्—अरुदत् अरोदीत् । ( अरोदीद्राक्षसानीकमरुदत्भुजापतिरिति भट्टिः । १७ । ४८ ) रोदित्यनाथमात्मानमिति भट्टौ आह्वानविशिष्टरोदनक्रियाव्याप्यत्वात् सकर्मकत्वमिति जयमङ्गला ।

६०। रद उत्खाते (रद, भ्वा, प) रेफादिः। उत्खातमुत्खननमिति गोविन्दभट्ट। रदति भूमिं शूकरः।

६१। वदिङ् तुत्यभिवाद्योः (वन्द, भ्वा, आ) अभिवादो नमस्कारः। इ—वन्द्यते। ङ—वन्दते गुरुं लोकः, स्तौति नमस्करोति वेत्यर्थः।

**वदै वाचि वदक् वाचि सन्देशे च वदञ् ङपि।**

६१। वदै वाचि (वद, भ्वा, प) ऐ—उद्यात्। वदति।

६१। वदक् वाचि सन्देशे च (वद, चु, प) क—वादयति। सन्देशो वचनविशेषः। अयमात्मनेपदीत्येके।

६१। वद ञङपि (वद, भ्वा, उ) ञ्—वदति वदते। ङ—वदते। अयमात्मनेपदीत्यन्ये। अपिशब्दात् वाक्सन्देशयोः।

**विद ङ्कञ् चेतनाख्यानवासवादे विद्लृ लृश् पञौ।**
**लाभे धौ विद्ङ मीमांसे विद्यौङ् भावे विदल् मतौ।**

६२। विदङ् कञ चेतनाख्यानवासवादे (विद, चु, उ) चेतना ज्ञानम्, वादः स्थैर्यम्। ङ—वेदयते शास्त्रं धीरः, जानातीत्यर्थः। वेदयते स्वार्थं लोकः, आख्यातीत्यर्थः। वेदयते तीर्थे साधुर्वसतीत्यर्थः। वेदयते दृढः, स्थिरःस्यादित्यर्थः। ञ—वेदयति वेदयते। केचित्तु वाद न पठन्ति, चेतनाख्याने च वेदनेति पठित्वा वेदयते विद्व, व्यथते इत्यर्थं इत्युदाहरन्ति। अस्मात्र परस्मैपदमसन्यमाना "जितां सपत्नेन निवेदयिष्यत" इत्यत्र निवेदनं करोतीति ञौ समादधते।

६२। विद्लृ लृशपञौ लाभे (विद, तुदा, उ) लृ—अविदत्। श, प, ञ—विन्दति विन्दते। धौ—वेत्ता।

६२। धौ विद ङ मीमांसे ( विद, रुधा, आ ) मीमांसो विचारणम्। ध, ङ—विन्ते शास्त्रं धीरः। औ—वेत्ता।

६२। विद्यौ ङ भावे ( विद, दिवा, आ ) भावः सत्ता, सा चेह विद्यमानतैव। य, ङ—विद्यते विष्णुः। औ—वेत्ता।

६२। विदल् मतौ ( विद, अदा, प ) ल—वेत्ति।

शब्दक् शब्दक्रतौ सोपसर्गस्त्वाविष्कृतौ मतः।

६३। शब्दक् शब्दक्रतौ ( शब्द, चु, प ) क—शब्दयति।

सोपसर्गस्त्वाविष्कृतौ मतः।

(उपसर्गसहितः शब्दधातुराविष्कारार्थक इत्यर्थः) प्रशब्दयति गभीरमर्थं शिष्यः, स्फुटं करोतीत्यर्थः।

श्विदिङ् शौक्ल्येऽथ शद्लृ ज्ञौ शाते आङः शदौ गतौ।

६४। श्विदिङ् शौक्ल्ये ( श्विन्द, भ्वा, आ ) वकारयुक्तः। ङ—श्विन्दते। ङ—श्विन्दते पुण्डरीकम्।

६५। अथ शद्लृज्ञौ शाते ( शद, भ्वा, प ) ऌ—अशदत्। ज—शादः शन्नः। औ—शत्स्यति। शातः पतनं पातनञ्च। शीयते पत्रं दृक्षात्, शीयते पत्रं दृक्षात् वायुः। "शदेःशि स"मित्यनेन शविषये आत्मनेपदम्। केचिदिमं तुदादौ च पठित्वा तत्सामर्थ्यात् आत्मनेपदानित्यत्वे शत्रप्रत्यये शीयन्तौ शीयतीत्युदाहरन्ति।

६५। आङः शदौ गतौ ( आ शद, भ्वा, प ) तालव्यादिः। आशीयते। औ—आशात्सीत्।

आङः षदक् च षद्लृज्ञौ तु विषादे शरणे गतौ।

६६। आङः षदक् च ( आषद, चु, प ) क—आसादयति। चकारात् गतौ।

६६। षद्‌ ऌशौश्‌ विषादे शरणे गतौ (षद, तुदा, प) ऌ—असदत्‌। ञ—सादः सदः। औ—असात्सीत्‌। श—सीदन्ती सीदती। विषाद आकुलीभावः। सीदति राधा रासगृहे। शरणं हिंसा। (१)।

षूदङ्‌ निरासे षूदक्‌ त्वाम्रुतिहत्योश्च ञि ष्विदा।
ङ्‌ऌ मोहस्नेहमोचे ऌ श्‍औ ष्विद्या ञि ष्विदि ष्वद्‌क्।
स्वादे छेदे ष्वद स्वर्द्द स्वादङ्‌ प्रीतिलिहोः स्वदिङ्‌।
ईषत्कम्पे स्वद्द मषङ्‌ विदारे स्यन्दूङ्‌ वऌ स्रुतौ।

६७। षूदङ्‌ निरासे (षूद, भ्वा, आ) षष्ठस्वरी। ङ—सूदते। निरासो निक्षेपः। षूद क्षरणे इति माधवः। क्षरणमव-क्षारणं, हिंसोपलक्षणमिति रमानाथः।

६७। षूदक्‌ त्वाम्रुतिहत्योश्च (षूद, चु, प) षष्ठस्वरी। आम्रुतिरङ्गीकारः। क—सूदयति धन विभाय दातुं दाता। रमानाथस्तु आस्रवण इति दन्त्यसकारं पठित्वा सूदयति मदिरा भाण्डात्‌, क्षरतीत्यर्थं इत्याह। चकारान्निरासे। (हत्यर्थे यथा—मधुसूदनः)।

६८। ञि ष्विदा ङ्‌ऌ मोहस्नेहमोचे (ष्विद, भ्वा, आ) षतदाद्या वकारयुक्ताः षट्‌। ञि—क्ष्विन्नोऽस्ति। आ—क्ष्वेदितं

(१) कातन्त्रादावयं धातुस्तुदादौ भ्वादौ च पठितः। तत्र तौदादिकस्य व्याख्यानावसरे "सीदन्ती सीदतीत्येतद्‌द्वयमिह पठितस्य भ्वादौ पाठो ज्वलादिकार्य्यार्थं, सादः सदः" इत्युक्तं रमानाथेन। किन्तु मुग्धबोधे भ्वादौ षदऌशौ विषादे गतावित्ति पठितत्वात्‌ तदार्थ्यैव तौदादिकत्वमस्य सम्मतविरुद्धमिति सूचितम्‌। इह तु तथा पाठः परमतविज्ञापनार्थ एवेति मन्यामहे।

खिन्नं तेन, प्रखेदितः प्रखिन्नः सः । ङ—खेदते तिलस्तैलं, मुञ्चतीत्यर्थः । ऌ—चखिदत् । स्वेदः स्निग्धीभावः । (१) ।

६८ । ऌ ञी ष्विदा ञि ष्विदि (ष्विद, दिवा, प) ऌ—अस्विदत् । औ—स्वेत्ता । य—स्विद्यति । आ—पूर्ववत् । ञि—क्ष्विण्णोऽस्ति । स्विदीति मोऽस्वेदमोचेष्विति वोपदेवः । गात्रप्रस्रवणे इति प्राञ्चः । स्वेदते किल सर्व्वोऽपि वसुप्राप्तुस्य-रश्मितः । न च स्विद्यति तस्याङ्गं व्यायामाहितमेदस इत्युभयत्र हलायुधः । ११२ ।

६९ । ष्वदक् स्वादे छेदे (ष्वद, चु, प) स्वादो रसोपादानम् । क—स्वादयति चौरं लोकः ।

६९ । ष्वदङ् प्रीतिलिहोः ) (ष्वद, भ्वा, आ)
७० । स्वर्दङ् प्रीतिलिहोः } (स्वर्द, भ्वा, आ)
७१ । स्वादङ् प्रीतिलिहोः ) (स्वाद, भ्वा, आ) आद्यो

मूर्द्धन्यादिः, शेषौ दन्त्यादी, मध्यमो रेफोपधः । प्रीतिरिहानुरागविशेषः । तत्र यस्यानुरागस्तस्य सम्प्रदानत्वम् । लिट् रसोपादानम् । ङ—अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा इति श्रीहर्षः । ३ । ९३ । स्वर्दते विविध स्वादु स्वादते च रसायणमिति हलायुधः । ११९ ।

७२ । स्यन्दिङ् ईषत्कम्पे (स्यन्द, भ्वा, आ) ङ—स्यन्दते । ङ—स्पन्दते चक्षुः । पस्पन्दे । काशे स्पन्द कुशे स्पन्द स्पन्द त्वं ग्रहमस्तके इत्यादौ गणकृतानित्यत्वात् परस्मैपदम् । पचादित्वादनि स्पन्द इवाचरतीति क्वौ सिद्धिर्वा ।

---

(१) चकारोऽयमोष्ठ्य इति वर्ग्यदेवनेत्युक्तं रमानाथेन ।

७३। खुवद मर्द विदारे (खुवद, भ्वा, आ) म—खुवदयति। सोपसर्गस्य तु "वा भ्रमयने"त्यादिना वा ह्रस्वः। प्रखुवदयति प्रखुवादयति। अवपरिवर्ज्जादुपसर्गात् परस्य घटादित्वं नाप्नोति कातन्त्राद्याः। तत्रैव अवस्थाने अप इति भीमः। प्रखुवादयति अवखुवदयति परिखुवदयति। अपपरिभ्यां परस्य घटादित्वं नाप्नोति कौमाराः। अपखुवादयति परिखुवादयति प्रखुवदयति। घ— खुवदा। ङ—खुवदते। खुवद खुवदने इति प्राञ्चः। खुवदनं स्थैर्य-मिति त्रिलोचनरामौ। पाटनमिति गोविन्दभट्टः। क्लेयोत्पादन-मिति गोयीचन्द्रः। हिंसेति रमानाथः।

७४। स्यन्दू ङयस्रु स्रुतौ (स्यन्द, भ्वा, आ) अन्तःस्थादियुक्तः। ञ—अस्यन्दिष्ट अस्यन्त। ङ—स्यन्दते। व—स्यन्त्स्यति, सिस्य-न्त्स्यति। ङ—अस्यदत्। स्रुतिः क्षरणम्। प्रस्यन्दमदगन्धलुब्ध-मधुपव्यालोलगण्डस्थलमित्यत्र गयाङ्कतानित्यर्थं, पचादित्वादनि प्रस्यन्द इवाचरतीति क्वौ यत्वन्तं वा।

स्कन्दिरौ शोषणे गत्यां स्कदि ङ्‌ आस्रव उद्धृतौ।
उत्प्लुत्य गत्यां ङ हदौ व्यर्थे क्लादी ङ मोदने।

७५। स्कन्दिरौ शोषणे गत्याम् (स्कन्द, भ्वा, प) इर्— अस्कदत् अस्कान्त्सीत्। औ—स्कन्ता। चस्कन्द। स्कन्दति पङ्कं आतपेन।

७६। स्कदिङ् आस्रवउद्धृतौ उत्प्लुत्यगत्याम् (स्कन्द, भ्वा, आ) आदास्वरी। इ—स्कन्द्यते। ङ—स्कन्दते। चिस्कन्दिषते। पञ्चमस्वरीति धातुप्रदीपरामौ। स्कन्दते स्कुन्दते चापि पङ्कास्रवन-वाचिन इति भट्टमल्लोऽपि। चुस्कुन्दिषते।

७७ । ङ हदौ स्वर्थे ( हद, भ्वा, आ ) स्वर्थोविष्ठोत्सर्गः । ङ— हदते जनः । औ—हत्ता ।

७८ । ह्लादीङ मोदने ( ह्लाद, भ्वा, आ ) अन्तःस्थतृतीययुक्त-द्वितीयस्वरी । मोदनं हृष्टीकरणं हृष्टीभावश्च । ई—ह्लन्नः ( ह्लादेःस्तौ चेति ह्रस्वः ) ङ—ह्लादते चन्दनं गात्रम् । "बलात् प्रह्लादते मन" इति किराते । ११ । ८ ।

## ह्लादङ् च स्वन इत्येते दान्ताः स्युर्नवसप्ततिः ।

७९ । क्लादङ् च स्वने ( क्लाद, भ्वा, आ ) रेफयुक्तद्वितीय-स्वरी । ङ—क्लादते । चकारात् ह्लादीङ् च ( शब्दार्थकः ) ( क्लादते स्निग्धगम्भीरं यद्दैवे वर्पुको घन इति हलायुधः । २३८ ) ।

## इत्येते दान्ताः स्युर्नवसप्ततिः ।

( इति, समाप्तौ । एते दान्ता धातवो नवसप्ततिः एकोना-शीतिसंख्यकाः ) । (१)

---

(१) कश्चिन्तु दान्तवर्गे "क्लदिर् रुदी"ति क्लदधातुः पाठं पूर्ब्बत्र पञ्चसंख्यक-सजातीयधातुमध्ये न पठितस्तद्दीक्षं ४र्थ पृष्ठे ३य पङ्क्तौ लिखितमस्ति । तेनायं धातु-र्दैयमात् परं पञ्चस्यैव सजातीयत्वं सूचयित्वा (६क) इति चिह्नेन मया दर्शितः ।

**दृन्भी ञिघङ् द्युतावृधय्यु निर्वृद्धौ ङेधच क्षुध् ल्ट ।**
**यौ क्षुधि क्रुध् ल्टयौ कोपे गुध् य वेष्टे गुधग् रुषि ।**

१ । दृन्भी ञि घङ् द्युतौ ( दृन्भ, रुधा, आ ) कृत्सादिः । ई, ञि—दृब्धोऽसि । घ, ङ—दृन्भे।

२ । ऋध् युनिर्वृद्धौ ( ऋध्, दिवा, स्वा, प ) य—ऋध्यति । उ—अर्धित्वा ऋद्ध्वा । न—ऋध्नोति । इर्—आर्धत् आर्धीत् । कश्चिदृद्धो चायम्, सोऽहं प्रागभवतैव भूतजननीमृध्नोमीति भवभूतिः । ( मालतीमाधवे पञ्चमाङ्के अघोरघण्टोक्तौ ) अन्तर्भूतण्यर्थत्वादिदं सिद्धमिति केचित् । ( ऋध्नोति धीः सदा यस्य ऋध्यति श्रीश्च भूतले इति हलायुधः । २४६ ) ।

३ । ङेध च ( एध, भ्वा, आ ) ङ—एधते । चकारात् वृद्धौ ।

४ । क्षुध् ल्ट यौ क्षुधि ( क्षुध, दिवा, प ) क्षुत् भक्ष्येच्छा । य—क्षुध्यति अन्नं बुभुक्षितः । औ—क्षोद्धा ।

५ । क्रुध् ल्टयौ कोपे ( क्रुध, दिवा, प ) ल्ट—अक्रुधत् । य—क्रुध्यति लोकः विप्रिये । औ—क्रोद्धा ।

६ । गुध् य वेष्टे ( गुध्, दिवा, प ) य—गुध्यति । जुगोध ।

६ । गुधग् रुषि ( गुध, क्रया, प ) ग—गुध्नाति । जुगोध । ( योऽस्मै गुध्नाति तद्दुर्गं तत्क्षणादेव गुध्यतीत्युभयत्र हला-युधः । २६८ ) ।

**गुधङ् क्रीडे गाधृ ङन्तु प्रतिष्ठाग्रन्थयोर्गृधिर् ।**
**युच लिप्से गर्ध कच गन्ध कङ् दुहि खाधृङ ।**

नाथे ट्धङ् द्दे नाधृङ् नाथे वन्धीग बन्धक।
बधक् बन्धे बधङ् निन्दे च बुन्धिर्च निशामने।

६। गुधङ् क्रीड़े ( गुध, भ्वा, चा ) ङ—गोधते।

७। गाधृ ङ्तु प्रतिष्ठाग्रन्थयोः ( गाध, भ्वा, चा ) ( प्रतिष्ठा प्रस्थानम् ) ऋ—अजगाधत्। ङ—गाधितासे नभो भूय इति भट्टिः। २२। २। गाधते मालिकः स्रजः।

८। गृधिर् यु च लिप्से ( गृध, दिवा, प ) इर्—अगृधत् अगर्धीत्। अस्यानित्यं ङ इति दुर्गः। य—गृध्यति धनं लुब्धः। ङ—गर्धित्वा गृद्धा। चकारात् गाधृङ् च ( लिप्सार्थकः ) ( न गृध्यति परद्रव्यमिति हलायुधः। २५४ )।

९। गर्धक् च ( गर्ध, चु, प ) क—गर्धयति। चकाराल्लिप्से।

१०। गन्ध कङ ङुहि ( गन्ध, चु, चा ) क, ङ—गन्धयते। ङुहि हिंसायाम्। गतिहिंसायाचनेष्विति कातन्त्राः।

११। थाधृङ् नाथे ( थाध, भ्वा, चा ) थोपदेशविधायस्य वर्जनेऽपीष्ट पाठः केषाञ्चिदनुरोधात्। ऋ—अननाधत्। ङ—नाधते। नाथो दयायोरैश्वर्य्यार्थनानि।

१२। दधङ द्दे ( दध, भ्वा, चा ) ङ—दधते। द्दे दानधृत्योः। आदध्यादन्धकारे रतिमतिशयिनीमिति मयूरभट्टोक्तं गणकृतानित्यत्वादस्यैव ढौपरस्मैपदे साध्यमिति रमानाथः। वस्तुतस्तु धाञ् धारणे इत्यस्यैव रूपं साध्यम्।

१३। नाधृङ नाथे ( नाध, भ्वा, चा ) ऋ—अननाधत्। ङ—प्रनाधते। (१) नाथो दयायोरैश्वर्य्यार्थनानि।

---

(१) नाथध इत्यत्र थादीति कथनाद्यपाठे वै धातरो थादित्वेन पठितास्तेषा-

१४। बन्धौ ग बन्धे ⎫ (बन्ध, क्र्या, प)
१४। बन्ध क बन्धे ⎬ (बन्ध, चु, प)
१५। बध क बन्धे ⎭ (बध, चु, प) औ—अबान्त्सीत्।

ग—बध्नाति। क—बन्धयति। "बस्तान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त्त निर्बन्धसे" इति गणान्तरानित्यतया ज्ञेरभावे आत्मनेपदे च साध्यम्। क—बाधयति।

१५। बधङ निन्दे च (बध, भ्वा, आ) ङ—बीभत्सते मलं लोकः। चकाराद्बन्धे च। बधते। (निशानार्जवनिन्दास्वित्युक्तेर्निन्दार्थे कित्तिजेति सनि बीभत्सते, अन्यत्र बधते इत्यादयः) अत्र त्यादयो न प्रयुज्यन्ते इति रमानाथः। किन्तु मा बधिष्ठा जटायुं मामिति भट्टिप्रयोगः।

१६। बुन्धिर् निशामने (बुन्ध, भ्वा, उ) पञ्चमस्वरी। इर्—अबुधत् अबुन्धीत्। ज—बुन्धति बुन्धते। ड—बुन्धित्वा बुद्धा। निशामनमालोचनं प्रणिधानमिति यावत्।

बुन्धक् बन्धे बुधौ विज्ञापने बुध्यौङ वेदने।

१६। बुन्धक् बन्धे (बुन्ध, चु, प) पञ्चमस्वरी। क—बुन्धयति।

१७। बुधौ विज्ञापने (बुध, भ्वा, प) औ—बोद्धा। बोधति शिष्यं गुरु।

१७। बुध्यौङ वेदने (बुध, दिवा, आ) य, ङ—बुध्यते शास्त्रं धीरः। औ—बोद्धा।

बुधिर्जञ् चाथ बाधृङ् विहतौ मेधृञ मेधृवत्।

---

मेव भ्वादादिष्य इत्यनेन इणर्दन्त्यते, ग्रति चातविधौ चातमिति सूचितं, तेनात्र न चातमिति बोध्यम्।

१७। बुधिर्ञ् च (बुध, भ्वा, उ) इर्—अबुधत् अबोधीत्। घ—बोधः बुधः। ञ—बोधति बोधते। चकारात् वेदने।

१८। अथ बाधृङ् विहतौ (बाध, भ्वा, आ) ऋ—अबबाधत्। ङ—जनं न सत्येष्वधिको बबाधे इति रघुः। (१)

१९। मेधृञ् मेधृयत् (मेध, भ्वा, उ) ऋ—अमिमेधत्। ञ—मेधति मेधते। मेधृयत् वधमेधासङ्गेष्वित्यर्थः।

**मृधुञ् क्लिदि युध्यौङ् युद्धे रध्यू लृ हिंसने।**
**पाकेऽनौ रुध् ङ्यौ कामे शुधिर्यौ ञि ञ आहृतौ।**

२०। मृधुञ् क्लिदि (मृध, भ्वा, उ) उ—मर्धित्वा मृद्ध्वा। ञ—मर्धति मर्धते। क्लिदि आर्द्रभावे।

२१। युध्यौ ङ युद्धे (युध, दिवा, आ) य, ङ—युध्यते। औ—योद्धा। सम्मुखस्थितयोर्द्वयोः साङ्ग्रामिकरीत्या परस्पराभिभवेच्छा युद्धम्। युध्यते योधः। कदाचिदेकस्य सहभावविवक्षायां युध्यते योधः परेण। कदाचिद्धननेऽपि, युध्यते चौरं राजा, हन्तीत्यर्थः। यो भक्तपिण्डस्य कृते न युध्येदिति, युद्धाद्भावे क्विपि तमिच्छतीति क्ये, तं करोतीति कण्ड्वादित्वात् क्ये वा साध्यम्।

२२। रध्यू लृ हिंसने पाके (रध, दिवा, प) य—रध्यति। ऊ—रधिष्यति रत्स्यति। लृ—अरन्धत्।

२३। अनौ रुधङ् यौ कामे (अनु+रुध्, दिवा आ) अनावित्युपपदे सप्तमी। (सप्तमी च परे वाच्ये गम्ये चोपपदे क्वचिदित्युक्तेः) ङ, य—अनुरुध्यते धनं लोकः। औ—अनुरोद्धा।

---

(१) बाधधातोरोष्ठ्यवकारादिर्दन्त्यवकारादिश्च भवतीति।

२३। रुधिर्ञ् जि ञ आवृतौ (रुध, रुधा, उ) इर्—अरुधत् अरौत्सीत्। ध,ञ—रुणद्धि रुन्धे। औ—रोद्धा। जि—रुद्धोऽस्ति।

**राधौ सिद्धौ वध हतौ व्यधौ ताड़े विधश् विधौ।**

२४। राध् नयौ सिद्धौ (राध, स्वा, दिवा, प) रेफादिः। न—राध्नोति। य—राध्यति। औ—अरात्सीत्। सिद्धिरिह स्वादिपक्षे निष्पादना, दिवादिपक्षे निष्पत्तिः। अन्नं राध्नोति विप्रायां च इति हलायुधः। ११४। निष्पादयतीत्यर्थः। सकलं राध्यति क्रिया इति हलायुधः। ११४। निष्पन्नं स्यादित्यर्थः (१)। सिद्धिरन्तर्भूतण्यर्थत्वादुभयत्रैव निष्पादनेति गोविन्दभट्टः।

२५। वध हतौ (वध, भ्वा, प) वकारादिः। वधति।

२६। व्यधौ ताड़े (व्यध, दिवा, प) य—विध्यति स्वर्गं व्याधः। औ—अव्यात्सीत्। केचित्तु द्विर्भूतस्य अनिकारीभूत-यकारस्य च व्यधेर्वकारो वर्ग्यः, अन्यत्र दन्त्य इति मन्वानाः सनि विव्यत्सतीत्याहुः।

२७। विधश् विधौ (विध, तुदा, प) विधिर्विधानम्। श—विधति वेधा जगत्। अनेकार्थत्वाच्छिद्रकरणेऽप्ययम्। वेधितच्छिद्रितौ विद्धे इत्यमरः। कर्णवेधः।

**इधक् दीप्तौ इधुङ् वत् ऋद्धौ बाधृङ् बाधवत्।**

२८। इधक् दीप्तौ (इध, चु, प) क—पर्द्धयति।

---

(१) यत्प्रसादाज्जनं सर्वं सततं राध्यति क्रियेति कचित् पाठः। अनेकार्थत्वादयं धातुर्हिंसायां शुभाशुभपर्य्यालोचनेऽर्थेऽपि, यथा—वानरा भूधरान् रेधुरिति भट्टिः। १४। १८। उन्मूलितवन्तः। गर्गो राध्यति रामायेति मुग्धबोधम्।

२८। वृधुङ् वल्ह वृद्धौ (वृध, भ्वा, आ) उ—वर्द्धित्वा वृद्ध्वा। ङ—वर्द्धते जनः। य—वर्त्स्यति विवृत्सति। ऌ—अवृधत्।

२९। बाधृङ् बाधवत् (बाध, भ्वा, आ) ऋ—अबबाधत्। ङ—बाधते। बाधवत् विहतौ।

**वर्द्धक् पूर्त्तिच्छिदोः शुन्धक् शुद्धौ शुन्धञ् च शृध् शृधुङ्।**
**पर्द्दे क्षुभुञ् क्लेदने ऌ शुधयौ शौचे षिधू शिवे।**
**शास्त्रे षिध् षिधु गत्यामु षिध्यौ पाधौन्य साध् यनौ।**
**सिद्धौ स्पर्द्ध ङ सङ्घर्षे सप्तत्रिंशच्च धान्तिमाः।**

३०। वर्द्धक् पूर्त्तिच्छिदो (वर्द्ध, चु, प) क—वर्द्धयति। ऋधक् दीप्तावित्यत्रैव पूर्त्तिच्छिदोरितिपाठादिष्टसिद्धावस्य पाठश्चुरादिभ्यो ञेरनित्यतां बोधयति तेन कदाचित् ञेरप्राप्तौ यगादौ ऋधक् इत्यस्य ऋध्यते इत्यादि, अस्य तु वर्द्धते इत्यादीति भेदः। (वर्द्धयत्यरिवीराणां मत्वा मूर्द्धानमाहवे इति हलायुधः। ८०। वर्द्धयति छिनत्तीत्यर्थः)।

३१। शुन्धक् शुद्धौ (शुन्ध, चु, प) मत्समसरी। क—शुन्धयति। अयमात्मनेपदीत्येके।

३१। शुन्धञ् च (शुन्ध, भ्वा, उ) मत्समसरी। चकारात् शुद्धौ। सा चेह शुद्धीभावः शुद्धीकरणञ्च। ञ—शुन्धति शुन्धते जलेन लोकः। यो गां शुन्धति सत्येन शुन्धते तपसा तनुम्। धियं शुन्धयति ज्ञानादित्युभयत्र हलायुधः। ३०। गां वाचम्।

३२। शृध् शृधुङ् पर्द्दे (शृध, भ्वा, आ) य—शर्त्स्यति शिशृत्सति। ऌ—अशृधत्। ङ—शर्द्धते। उ—शर्द्धित्वा शृद्ध्वा। पर्द्दोऽपानोत्सर्गः। शृधु प्रहसने इति चुरादिपरस्मैपदी धातुरन्यै-

र्नमन्यते । प्रहसनं विद्रव इति गोविन्दभट्टः । शर्द्धयति दर्द्दुं कुत्सित-शब्देन पात इति रमानाथः ।

३२ । शृधुञ् क्लेदने ( शृध, भ्वा, उ ) उ—शर्द्धित्वा शृद्धा । ञ—शर्द्धति शर्द्धते । क्लेदनमार्द्रीभावः ।

३३ । ऌ शुध्यौ शौचे ( शुध, दिवा, प ) तालव्यादिः । ऌ—अशुधत् । य—शुध्यति लोकः स्नानात् । औ—शोद्धा । रजसा शुध्यते नारीत्यत्र शुध्यतीति क्विपि शुधं करोतीति ञौ कर्म्मणि यकि रूपम् ।

३४ । षिधू शिवे शास्त्रे ( षिध, भ्वा, प ) मूर्द्धन्यादिः । ऊ—असेधीत् असैत्सीत् । शिवं मङ्गलम्, तत्राकर्म्मकः । सिद्धो वर्ण-समाम्नाय इति कातन्त्रस्याद्यसूत्रम् । शास्त्रमनुशासनम् । सेधति शिष्यं गुरुः ।

३४ । षिध गत्याम् } ( षिध, भ्वा, प )

३४ । षिधु गत्याम् } ( षिध, भ्वा, क्तावेट्, प ) सेधति । उ—सेधित्वा सिद्धा । निष्ठायां पूर्व्वस्य सिधितः, शेषस्य क्तावेट्क-त्वान्नेम् डीश्वीत्यनेन इमो निषेधे सिद्ध इति भेदः ।

३५ । षाधौ न्य सिद्धौ } ( षाध, स्वा, दिवा, प )

३६ । साध् यनौ सिद्धौ } ( साध, दिवा, स्वा, प ) शेषो दन्त्यादिः । औ—सिषात्सति । न—साध्नोति । य—साध्यति । शेषपक्षे औ—सिषात्सति । (१) सिद्धिर्निष्पत्तिः । साध्यति घटो निष्पन्नः स्यादित्यर्थः । सिद्धिर्निष्पादनेति गोविन्दभट्टः । साध्नोति साध्यति घटं कुलालः, निष्पादयतीत्यर्थः ।

---

(१) पूर्व्वस्य षोपदेशतया सतसकारत्वेन षत्वं इह तु तदभावाच्चेति धातुद्वय-कल्पने तात्पर्य्यम् ।

३७ । स्पर्द्धङ सङ्घर्षे ( स्पर्द्ध, भ्वा, आ ) सङ्घर्षः परिभवेच्छा । (१) ङ—स्पर्द्धते बलिनं बली । पस्पर्द्धे ।

## सप्तत्रिंशच्च धान्तिमा ।

( धकारान्ता धातवः सप्तत्रिंशत्संख्यकाः )

---

## नान्तवर्गः ।

**अनघ्लु प्राणनेऽन् यङ् च कनी ञि प्रीगतिद्युतौ ।**

१ । अनघ्लु प्राणने ( अन, अदा, प ) घ, लु—अनिति लोकः, जीवतीत्यर्थः । (२) ।

१ । अन् यङ् च ( अन, दिवा, आ ) य, ङ—अन्यते । चकारात् प्राणने । (अपमृत्युं परित्यज्य सुखं प्राणिति यत्प्रजा । न प्राण्यते पुरं तस्य प्रतिकूलंकरोति य इत्युभयत्र हलायुधः । १७२) ।

२ । कनी ञि प्रीगतिद्युतौ (कन, भ्वा, प) ई, ञि—कान्तोऽस्ति । प्रीः प्रीतिः । ( कनकशब्दव्युत्पत्तये कनी दीप्तौ वृन्नित्यमरटीका ) ।

**खनुञ् विदारे चन् शब्दे चम्म हिंसे जुनश् गतौ ।**

३ । खनुञ् विदारे ( खन, भ्वा, उ ) उ—खनित्वा खात्वा । ञ—तृषितो जाह्नवीतीरे कूप खनति दुर्मतिः । खनते ।

४ । चन् शब्दे ( चन, भ्वा, प ) चनति ।

---

(१) सङ्घर्षसङ्घर्षयोरुक्त सङ्घर्षे शब्दवेदिभिरिति व्याडि । अत्र सङ्घर्षे इत्यपि पाठ ।

(२) लु सपादित्येव चकाराददादिषेयुक्तपूर्व्वम ।

४। चनू म हिंसे ( चन, भ्वा, घटादिः, म ) म—चनयति।

५। जुनय् गतौ (जुन, तुदा, प) य—जुनति। जोनिता।

**जनी य्य ङ जनौ जन्मलिर्च तनू दुञ विस्तृतौ।**

६। जनीय्यङ जनौ (जन, दिवा, आ) ई—जातः। म—जनयति। य, ङ—जायते। जनिर्जन्म। प्रादुर्भावे इति प्राञ्च। प्रादुर्भावः स्फुटीभावः, प्राकाश्ये प्रादुराविःस्यादित्यमरात्। वीजादङ्कुरो जायते, मलकाण्डादिभेदेन प्रकाशते इत्यर्थः। प्रादुर्भावोऽसदुत्पत्तिरिति केचित्। घटो जायते।

६। जनू मलि र्च ( जन, ह्वा, प ) म—जनयति। कि—जजन्ति। र—वैदिकः। चकाराज्जनौ।

७। तनू दुञ विस्तृतौ ( तन, तना, उ ) द, ञ—तनोति तनुते पुण्यं सुधीः। उ—तनित्वा तत्वा।

**तनुक्ष्युपकृतौ श्रद्धाघाते शब्दोपतापयोः।**
**उपसर्गाद्दैर्घ्यके दान् आर्जवे छिदि मि ञन।**
**धनूरवे धैनूलि धान्ये पनूङीडे वनूङ दुयाचने।**

७। तनु क्ष्युपकृतौ श्रद्धाघाते शब्दोपतापयोः ( तन, चु, भ्वा, प ) उ—तनित्वा तत्वा। कि—तानयति तनति। उपकृतिरुपकारः, श्रघातो हिंसावर्ज्जनं, दृगीतिरिति गोविन्दभट्टः।

उपसर्गाद्दैर्घ्यके।

दैर्घ्यकं दीर्घीकरणम्। ( अयं सोपसर्गश्चेत् दीर्घीकरणेऽर्थे वर्त्तते इत्यर्थः )। वितानयति यः कीर्त्तिं वितनत्यमलं यश इति हलायुधः। ८२।

८। दान आर्जवे छिदि ( दान, भ्वा, उ ) ऋजुरवक्रस्तस्य

**शानृञ् तेजे शुनश् गत्यां षन् सम्भक्तौ तु षन् दुञ्।**
**दाने ष्टन् स्तन्मि शब्दे स्वन् ण च ण स्वन् मि तंसने।**

१७। शानृञ् तेजे (शान, भ्वा, उ) तेजस्तीक्ष्णीकरणम्। अ—शीशांसति शीशांसते खड्गं कर्मकारः।

१७। शुनश् गत्याम् (शुन, तुदा, प) तालव्यादिः। श—शुनति। शोनिता।

१८। षन सम्भक्तौ तु (षन, भ्वा, प) मूर्द्धन्यादिः। सम्भक्तिः सेवनम्। सनति शुद्धं लोकः। तुशब्दः पादपूरणार्थः।

१८। षन दुञ् दाने (षन, तना, उ) द, अ—सनोति सनुते। उ—सनित्वा सात्वा।

१९। ष्टन मि शब्दे (ष्टन, भ्वा, प)
२०। स्तन मि शब्दे (स्तन, भ्वा, प) द्वौ क्रमान्मूर्द्धन्यदन्त्यादी। मि—ष्टनयति स्तानयति। अतिष्टनत्। अतिस्तनत्।

२१। स्वन ण च (स्वन, भ्वा, प) वकारयुक्तः। ण—स्वेनतुः सस्वनतुः। चकारात् शब्दे।

२१। ण स्वन मि तंसने (स्वन, भ्वा, प, ण घटादिः) वकारयुक्तः। शब्दे इत्यनुवर्त्तते, तंसने भूषणे कर्त्तरि (सति) शब्देर्थे, भूषणकर्तृकशब्देऽयमित्यर्थः। ण—स्वेनतुः सस्वनतुर्नूपुरौ। मि—स्वनयति स्वानयति कङ्कणं वधूः। अन्यत्र स्वानयति घण्टां जनः।

**हन् लौ गतौ वधेऽथण् टिस्यान्तास्त्रिंत्यष्ट विंशतिः।**

२२। हन लौ गतौ वधे (हन, अदा, प) ल—हन्ति। औ—हन्ता। गत्यर्थत्वमनित्यमितिन्यायात् कदाचित् गच्छतौ हनतीत्यपीति वररुचिः। तेन सर्वा एवाघ्नत् दर्शयति चण्डी।

उद्गतिं विना भाषायां गतौ नास्य प्रयोगः । उद्गतौ—अग्रेसरैर्वाजिभिरुद्धतानीति रघौ उद्धतानि ऊर्द्ध्वं गतानीत्यर्थः । वधः प्राणवियोगफलकव्यापारः । जघान रावणं रामः ।

घणपादिद्यान्ताश्च ।

( घणपाः ) वणपवर्ज्जिता ये ( दितः ) दकारेतो मूर्द्धन्यणान्ता ( धातव ) स्तेऽपि दन्त्यनान्ताः स्युरित्यर्थः । यथा—

२३ । घन डुञ गतौ ) ( घन, तना, ड )
२४ । घन डुञ वधे | ( घन, तना, ड )
२५ । क्षिन डुञ वधे | ( क्षिन, तना, ड )
२६ । दन डुञ दीप्तौ | ( दन, तना, ड )
२७ । तन डुञ भक्षे | ( तन, तना, ड )
२८ । दन डुञ भक्षे ) ( दन, तना, ड ) इति षट् । रूपाणि

पूर्व्ववत् । फलन्तु मूर्द्धन्यणान्तानां तिकि ऋण्टिः ऋण्टिरित्यादि । यङ्लुकि चंचण्टीत्यादि । दन्त्यनान्तानान्तु ण्वोर्नुमणीत्यस्य बलवत्त्वाददौ नशासुसारे 'अपे अम नो'रित्यस्य पुनर्नकारे सत्यद्रतो विप्रतिषेधो यद्बाधितं तद्बाधितमेवेति न्यायासत्वाभावे तिकि घन्तिः घन्तिरित्यादौ, यङ्लुकि चंचन्तीत्यादौ च दन्त्यस्थितिरिति ।

इत्यष्ट विंशतिः ।

(इति इमे धातवः अष्ट विंशतिः, अष्टेति पृथक्पदं अष्टसंख्यका विंशतिसंख्यकाश्च ; समुदायेनाष्टाविंशतिरित्यर्थः । कोटीयतस्त्रो दशचेतिवत् ) ।

---

## मान्तवर्गः।

आप्लृ नौ कि व्यापने क्षिप् शञौ क्षिप्यौ तुदि क्षपिक्
शञौ कुप्क द्युतौ कुप्य दृकौपे क्रुपि कि स्तृतौ।

१। आप् लृ नौ कि व्यापने (आप, स्वा, चु, भ्वा, प) ऌ—आपत्। न—आप्नोति कीर्त्तिमैश्वर्यम्। औ—आप्ता। कि—आपयति आपति। स्वराज्यं प्राप्यते भवानिति गणकृतानित्यत्वात्।

२। क्षिप् शञौ तुदि } (क्षिप, तुदा, उ)
२। क्षिप्यौ तुदि } (क्षिप, दिवा, प) तुदि प्रेरणे।
श, ञ—क्षिपति क्षिपते शरं योधः। औ—क्षेप्ता। य—क्षिप्यति।

३। क्षपिक् शञौ (क्षम्प, चु, प) शक्तिरिह क्षमा। इ, क—क्षम्पयति दुःखं मुनिः, क्षन्ते दृत्यर्थः।

४। कुप्क द्युतौ (कुप, चु, प) क—कोपयति।

४। कुप्य दृकौपे (कुप, दिवा, प) कोपो नेत्रलौहित्यादिहेतुश्चित्तविकारः। य—कुप्यति माता पित्रवे। दृद्—अकुपत् अकोपीत्। अस्मान्नित्यं ङ इति दुर्गः। कदाचित् कुप्यते माता नोदरस्था हरीतकीति तु कुप्यतीति कुप्, सा इवाचरतीति ङेन साध्यम्।

४। कुपि कि स्तृतौ (कुम्प, चु, भ्वा, प) पञ्चमस्वरी। इ—कुम्पते। कि—कुम्पयति कुम्पति। स्तृतिराच्छादनम्।

क्रपञङ कृपायां ङ केष्ट गत्यां कपिङ्ङपि।
चाले क्षप् कि युतौ चित्रे क्षपूङ् वल्ट च कल्पने।

५। क्रपञ ङ कृपायाम् (क्रप, भ्वा, आ) कृपा दया।

प—कृपा, भीधिविन्तीति हे मनीषादित्वाद्रेफस्य लकारः। भ—कृपयति। ङ—कपते दयालुर्दीनम्।

६। ट केपृ गतौ (केप, भ्वा, आ) ङ—केपते। चिकेपे। अ—अचिकेपत्।

७। कपिङ्टपि चाले (कम्प, भ्वा, आ) चालः कम्पनम्। ङु—कम्पते। ङ—कम्पते वायुना द्रुमः। अपियन्द्रात् केपृ च (कम्पनार्थकः)।

८। कृप कि शुतौ चित्रे (कृप, चु, भ्वा, प) सप्तमस्वरी। कि—कल्पयति कल्पति। कृपः कृपोऽकृपादाविति कृपादेयः। (शुतिर्मिश्रणम्, कल्पयति दुग्धं जलेन। चित्रं चित्रकरणम्, कल्पयति प्रतिमां शिल्पी। न कल्पयति मिथ्यार्थं गिरः कल्पति विद्दिषामिति हलायुधः। ८१)।

८। कृपू ङ् वल्ल च कल्पने (कृप, भ्वा, आ) सप्तमस्वरी। कल्पनं सामर्थ्यम्। क्त—अकल्पिष्ट अकॢप्त। ङ—योऽर्थिनामीप्सितप्राप्तौ कल्पते कल्पवृक्षवदिति हलायुधः। ८३। व—कल्प्स्यति चिकॢप्सति। लु—अकॢपत्। इते तस्मिन् प्रियं श्रुत्वा कल्पता प्रीतिं परां प्रभुरित्यनेकार्थत्वे अन्तर्भूतणार्थत्वात् जनयितेत्यर्थः। चकारात् कृपकि च।

गुपू रचे गुपक् भासि गुपङ् गोपनकुत्सयोः।

९। गुपू रचे (गुप, भ्वा, प) एतदादायत्वारः पञ्चमस्वरिणः। गोपायति गोपायते। आयान्तत्वादुभयपदमिति वोपदेवः। अन्ये तु आयस्याभाविपक्षे परस्मैपदमेव। अगोपीत् जुगोपेत्यादि। जुगोप गोरूपधरामिवोर्वीमिति रघुः। २।३। ञ—गोपिष्यति गोप्स्यति।

७। गुपक् भासि (गुप, चु, प) क—गोपयति। भासि दीप्तौ। (धातूनामनेकार्थत्वादस्य गोपनार्थे बहुलप्रयोगः)।

८। गुपङ् गोपनकुत्सयोः (गुप,भ्वा,आ) गोपनमपह्नवः। ङ—कङ्कणाभनत्कारस्य किं गोपसे। अत्र त्यादयो न स्युरिति रमानाथः। कुत्सा निन्दा। सा जुगुप्साप्रचकोऽस्त्विति भट्टिः। १४।५८।

## गुप्य व्याकुलत्वे ङ ग्लेप्ट दैन्ये ङ गेप्ट च।
## केष्टवत् चपक्म कल्के चप् सान्त्वे चुप् शनैर्गतौ।

९। गुप्य व्याकुलत्वे (गुप, दिवा, प) व्याकुलत्वं व्याकुलीभावस्तत्करणञ्च। य—धीरो न गुप्यति महत्यपि कार्य्यजाते इति हलायुधः। ६। गुप्यति गां दृष्टिः, आकुलीकरोतीत्यर्थ इति चतुर्भुजः। इर्—अगुपत् अगोपीत्। अस्मान्नित्यं ङ इति दुर्गसिंहः।

१०। ङ ग्लेप्ट दैन्ये (ग्लेप, भ्वा, आ) अन्तःस्थाद्वतीययुक्तः। ङ—ग्लेपते निर्धनः सदा। ष्ट—अजिग्लेपत्।

११। ङ गेप्ट च केष्टवत् (गेप, भ्वा, आ) ङ—गेपते। ष्ट—अजिगेपत्। चकारात् 'ङ ग्लेप्ट च' केष्टवत् गतिकम्पनयोः।

१२। चपक्म कल्के (चप, चु, प) कल्कश्चूर्णीकरणम्। क, म—चपयति तण्डुलान् शिला।

१२। चप् सान्त्वे (चप, भ्वा, प) सान्त्वं प्रियवचनम्, उपशमो वा। चपति पुत्रं माता।

१३। चुप् शनैर्गतौ (चुप, भ्वा, प) चोपति खञ्जः। चोपति दुष्टं राजा इति रमानाथः। (१)।

(१) सर्व्वेष्वादर्शपुस्तकेषु चोपति दुष्टं राजा इति रमानाथ इति पाठो दृश्यते।

**चुलुम्प् लोपे क्षपिक् सर्पे क्षुप् शौ स्पर्शे क्षपक् मतु ।**
**क्षमौ जय ह्लदुच्चारे जल्पच् वाचि टिपक् तुदि ।**

१४ । चुलुम्प लोपे ( चुलुम्प, भ्वा, प ) भन्त स्यात्तृतीयमध्यः, पञ्चमस्वरद्वयी, घोष्यवर्गीयोपोपधश्चायम् । चुलुम्पति । यगादौ चुलुम्प्यते इत्यादि । न च 'नकारजावनुस्वारपञ्चमा'विति स्वरसादस्य नप्रकृतित्वे यगादौ तल्लोप इति वाच्यम्, तर्हि नोपधस्यैव पठितमुचितत्वात् ( १ ) । एवं सति धङ्कादीनां नप्रकृतित्वेऽपि ङमध्यपाठः कथमिति चेन्न, ते तु कस्यचिन्मते ङमध्या एवेति ज्ञापनाय ङमध्याः पठिताः । न च तर्हि इदित्पाठेऽपीष्टसिद्धिरिति वाच्यम्, क्विपि संयोगान्तलोपे चुलुन्, चुलुम्पपाठे चुलुम् इति भेदात् । एवं सर्व्वत्र ।

१५ । क्षपिक् सर्पे ( क्षम्प, चु, प ) इ, क—क्षम्पयति । सर्पो गतिः ।

१६ । क्षुप्शौ स्पर्शे ( क्षुप, तुदा, प ) श—क्षुपति । शौ—क्षोप्ता ।

१७ । क्षपक् मतु क्षमौ ( क्षप, चु, प ) क, म—क्षपयति । "क्षमिर्मार्दवालोकनिधानस्तुतयः । क्षाक्षम इत्यनेनैवेष्टसिद्धौ क्षपपाठश्चुरादिरुभयपदीति मते फलवत्कर्त्तरि परस्मैपदार्थ" इति धातुप्रदीपः । वस्तुतस्तु क्षमिपदमस्यैव निष्पादितम् । तेन अनि-र्द्दिष्टार्थत्वात् क्षमिरिह ज्ञानम् । अतएव भट्टीये चोपे इत्यत्र

रमानाथकृतमनोरमायान्तु चुप मन्दायां गतावित्यस्य व्याख्याने चोपति अनय इत्युदाहरणमस्तीति तत्त्वं चिन्त्यम् ।

( १ ) युत युतिर स्यात् चरे इति इवोत्कालव्ययकारादिपाठेन तद्वचनस्य व्यभिचारदर्शनादिति च क्वचित् पाठः ।

७ । गुपक् भासि ( गुप, चु, प ) क—गोपयति । भाति दीप्तौ । ( धातूनामनेकार्थत्वादस्य गोपनार्थे बहुलप्रयोगः ) ।

८ । गुपङ् गोपनकुत्सयोः (गुप, भ्वा, आ) गोपनमपह्नवः । ङ—कद्ध्याभनत्कारस्त्वं किं गोपसे । अवत्यादयो न स्युरिति रमानाथः । कुत्सा निन्दा । सा जुगुप्साम्प्रचक्रेऽह्निनिति भट्टिः । १४ । ५९ ।

**गुप्य दूर्व्याकुलत्वे ङ ग्लेप दैन्ये ङ गेप च ।**
**केपवत् चपक्म कल्के चप् सान्त्वे चुप् शनैर्गतौ ।**

९ । गुप्य दूर्व्याकुलत्वे ( गुप, दिवा, प ) व्याकुलत्वं व्याकुलीभावस्तत्करणञ्च । य—धीरो न गुप्यति महत्यपि कार्य्यजाते इति हलायुधः । ३ । गुप्यति गा इष्टिः, आकुलीकरोतीत्यर्थ इति चतुर्भुजः । इर्—अगुपत् अगोपीत् । अस्याद्भित्यं ङ इति दुर्गसिंहः ।

१० । ङ ग्लेप दैन्ये ( ग्लेप, भ्वा, आ ) अन्तःस्थाद्वितीययुक्तः । ङ—ग्लेपते निर्धनः सदा । ऋ—अजिग्लेपत् ।

११ । ङ गेप च केपवत् ( गेप, भ्वा, आ ) ङ—गेपते । ऋ—अजिगेपत् । चकारात् 'ङ ग्लेप च' केपवत् गतिकम्पनयोः ।

१२ । चपक्म कल्के ( चप, चु, प ) कल्कश्चूर्णीकरणम् । क, म—चपयति तण्डुलान् शिला ।

१२ । चप् सान्त्वे ( चप, भ्वा, प ) सान्त्वः प्रियवचनम्, उपशमो वा । चपति पुत्रं माता ।

१३ । चुप् शनैर्गतौ ( चुप, भ्वा, प ) चोपति खञ्जः । चोपति दुष्टं राजा इति रमानाथः । (१) ।

---

(१) सर्वेष्वादर्शपुस्तकेषु चोपति दुष्टं राजा इति रमानाथ इति पाठो दृश्यते ।

**चुलुम्प् लोपे छपिक् सर्पे छुप् शौ स्पर्शे त्रपक् मतु ।**
**त्रपौ जप हृदुच्चारे जल्पच् वाचि टिपक् नुदि ।**

१४ । चुलुम्प लोपे ( चुलुम्प, भ्वा, प ) अन्तःस्थान्तोपधः, पञ्चमस्वरद्वयी, ओष्ठ्यवर्गेणोपधशायम् । चुलुम्पति । यगादौ चुलुम्प्यते इत्यादि । न च 'नकारजावनुस्वारपञ्चमौ' इति सरसाङ्कस्य नप्रकृतित्वे यगादौ नलोप इति वाच्यम्, तर्हि नोपधस्यैव पठितुमुचितत्वात् ( १ ) । एवं सति अञ्चादीनां नप्रकृतित्वेऽपि ङमध्यपाठः कथमिति चेन्न, नैव कस्यचिन्मते ङमध्या एवेति ज्ञापनाय ङमध्याः पठिताः । न च तर्हि इदित्पाठेऽपीष्टसिद्धिरिति वाच्यम्, क्विपि संयोगान्तलोपे चुलुन्, चुलुम्पपाठे चुलुम् इति भेदात् । एवं सर्वत्र ।

१५ । छपिक् सर्पे ( छम्प, चु, प ) इ, क—छम्पयति । सर्पो गतिः ।

१६ । छुपशौ स्पर्शे ( छुप, तुदा, प ) श—छुपति । औ—छोप्ता ।

१७ । त्रपक् मतु त्रपौ ( त्रप, चु, प ) क, म—त्रपयति । "क्षपिमार्ग्यालोकनिगानस्तुतयः । आकम इत्यनेनैवेष्टसिद्धौ क्षपपाठचुरादिसमयपदीति मते फलवत्कर्तरि परस्मैपदार्थं" इति धातुप्रदीपः । वस्तुतस्तु क्षपिपदस्यैव निष्पादितम् । तेन अनिर्दिष्टार्थत्वात् क्षपिरिह ज्ञानम् । अतएव प्रक्षौति क्षीपे इत्यत्र

---

[illegible] इत्युदाहरणमस्तीति तत्त्वं चिन्त्यम् ।

( १ ) चुल चुलति स्यात् यदि इति दन्त्योपान्त्यमकारादिपाठेन तद्वचनं अभिप्रायमिति च क्वचित् पाठः ।

अस्यैव सनन्तस्य नित्यादित्येन ञीप्सयन्त्येन भ्रातुमिच्छेति प्रतिपाद्यते। एवं ज्ञानपर्याये प्रतिपज्ञप्सिचेतना इत्यमरश्च।

१८। जप ध्वद्ग्रारे (जप, भ्वा, प) जिह्वोष्ठादिव्यापाररहितं शब्दार्थयोश्चिन्तनं ध्वद्ग्रारः। जपति मन्त्रं साधकः।

१९। जल्प च वाचि (जल्प, भ्वा, प) अन्तःस्थाद्यतृतीयोपधः। जल्पति। चकारात् जप च।

२०। टिपक् तुहि (टिप, चु, प) क—टेपयति। तुहि प्रेरणे।

## डिप ग्क्षिय दूर्च डिपि डिप् डप् डपिक् ङञ संहतौ।

२१। डिप ग्क्षिय दूर्च (डिप, तुदा, चु, दिवा, प) ग्क्षि—डिपति, अडिपीत्। क—डेपयति। य—डिप्यति। दूर्—अडिपत् अडेपीत्। तुदाद्यन्तर्गणस्यैव कुटादित्वमिति दिवादिमध्ये शुद्धः। दिवादिमध्ये पुषादित्वाञ्जित्यं ङ इत्यन्ये। चकारात् तुहि।

२१। डिपि कङञ संहतौ (डिम्प, चु, उ)
२१। डिप कङञ संहतौ (डिप, चु, उ)
२२। डप कङञ संहतौ (डप, चु, उ)
२२। डपि कङञ संहतौ (डम्प, चु, उ) मूर्द्धन्यवर्गतृतीयाद्याः सर्व्वे। ङ, क, ङ—डिम्पयते। ञ—डिम्पयति डिम्पयते। क, ङ—डेपयते। ञ—डेपयति डेपयते। क, ङ—डापयते। ञ—डापयति डापयते। क, ङ—डम्पयते। ञ—डम्पयति डम्पयते। पुनः पाठान्मध्यमौ नेदनुबन्धौ। एते चात्मनेपदिन इत्यन्ये। संहतीराशीकरणम्।

## तप् ङञ् दाहे तप कञ्च तपौ तप्यौङ् दृचैश्वयोः।

२३। तप् ङञ् दाहे (तप, भ्वा, उ) ङ—तपते। ञ—तपति तपते। अयमात्मनेपदीत्यन्ये।

२१ । तपक् च (तप, चु, प) क—तापयति । चकाराद्दाहे । अयमात्मनेपदीत्येके ।

२२ । तपौ दवैश्वर्ययोः } (तप, भ्वा, प) (१)

२३ । तपौङ् दवैश्वर्ययोः } (तप, दिवा, आ) दव उपतापः । तपति तनुगात्रि मदनस्त्वाम् । औ—अताप्सीत् । य, ङ—तप्यते धनी, ईश्वरः स्यादित्यर्थः । औ—अतप्त । दिवादिपक्षे ऐश्वर्य्य एव इत्यन्ये ।

त्रपू षमिङ् ह्रियि तिप ञष्टङ स्रुति तेपृङ ।
कम्पे च तृप् कि सन्दीपे तृप च प्रीणने ञिल्ट ।
तृम्पू च तृप् षघ् च तुप तुप् वधे तुप् षग्न ल्किपि ।
वधे तुमिक् त्वहिने माक् चतुष्को नोपधो न पित् ।

२४ । त्रपू षमिङ ह्रियि (त्रप, भ्वा, आ) ञ—अत्रपिष्ट अत्रप्त । ष—त्रपा । मि—त्रपयति त्रापयति । ङ—त्रपते । ह्रियि लज्जायाम् ।

२५ । तिप ञ ष्ट ङ स्रुति (तिप, भ्वा, आ) ञ—तेपिष्यते तेप्स्यते । ष्ट—अतितेपत् । ङ—तेपते तितेपे । स्रुत् क्षरणम् ।

२६ । तेपृङ कम्पे च (तेप, भ्वा, आ) ष्ट—अतितेपत् । ङ—तेपते वृक्षः । तितेपे । चकारात् स्रुति च ।

२७ । तृप कि सन्दीपने (तृप, चु, भ्वा, प) कि—तर्पयति तर्पति ।

---

(१) आम्रेडितानुबन्धेष्विन्दुत्वेऽत्र ङकारो न पूर्व्वस्यानुबन्धः, औकारस्य पुनरुक्तत्वादाम्रेडितानुबन्धत्वं बोध्यम् ।

२७। तृप च प्रीणने ( तृप, भ्वा, प ) प्रीणनं प्रीतीकरणम्। न—तर्पति पितरं पुत्रः। ततर्प। चकारात् तृपकि च (प्रीणनार्थकः) योऽग्निलयं तर्पतीति हलायुधः। १०।

२७। त्रिक तृप्यू च (तृप, दिवा, प) त्रि—तृप्तोऽस्ति। ऋ—अतृपत्। अस्य त्रिदित्त्वेऽपि कृप स्पृषेत्यादिना पक्षे सि', तेन अतार्प्सीत् अत्राप्सीत् अतर्पीदित्यादि। य—तृप्यति। ऊ—तर्पिष्यति तर्प्स्यति। चकारात् प्रीणने। प्रीणनमिह प्रीतीभावः प्रीतीकरणञ्च। स्यन्दीनि तृप्यत मधूनि पिबन्निवायमिति श्रीहर्षः। पितृनतार्प्सीत्समपक्ततोयैरिति भट्टिः। २। ५२।

२७। तृप प श च (तृप, तुदा, प) प, श—तृम्पति। ततर्प। चकारात् प्रीणने।

२८। तुप वधे } ( तुप, भ्वा, प )
२६। तुप वधे } ( तुप, भ्वा, प ) तोपति। तोपति।

२६। तुप पश क्लिशि वधे (तुप, तुदा, प) प, श—तुम्पति। तुतोप।

२८। तुपिक् त्वर्हने ( तुम्प, चु, प ) पञ्चमस्वरी। इ, ञ—तुम्पयति। अर्हनं वधः।

प्राक् चतुष्को नोपधो न पित्।

तुपिकः पूर्व्वं चत्वारो ये धातवस्ते नकारोपधा भूत्वा पकारेतो न स्युरित्यर्थः। यथा—

३०। तृनूप श प्रीणने ( तृनूप, तुदा, प )
३१। तुनूप वधे ( तुनूप, भ्वा, प )
३२। तनूप वधे ( तनूप, भ्वा, प )
३२। तनूप श क्लिशि वधे ( तनूप, तुदा, प ) इति।

प्रीणनमिह प्रीतीभावः । श—तृम्पति लाभाम्लोकः । ततृम्प । तृम्पति । तृम्पति । श—तृपति । ततृम्प । तृप प्रम, तृम्प श्र प्रीणने दृत्येताभ्यां तृम्पति तृपतीति रूपद्वयसिद्धौ तृम्प प्रधे इत्यस्य भ्वादौ पाठस्तु वेदे अवन्तस्य धान्तस्य च उच्चारणभेदार्थः ।

दीपोङ्य ऋ दीपने ञि दृप्य् दृर् हर्षगर्व्वयोः ।

३३ । दीपोङ्य ऋ दीपने (दीप, दिवा, आ) दीपनमुज्ज्वलीभावः । ई—दीप्तः । ङ, य—दीप्यते निशि चन्द्रमाः । ऋ—अदीदिपत् अदिदीपत् ।

३४ । ञि दृप्य् दृर् हर्षगर्व्वयोः (दृप, दिवा, प) ञि—दृप्तोऽसि । य—दृप्यति । ऌ—दर्पिष्यति द्रप्स्यति (यद्वेरिक दित्यनेन द्रप्स्यतीत्यपि) । दृर्—अदृपत् अदर्पीत् अद्राप्सीत् अदार्प्सीत् ।

दृप् कि सन्दीपने दृपृश वाधने दृम्प दिम्प अङ् । क सङ्घाते धूपक दीप्तौ धूप् तापे पुष्प्य फुल्लने ।

३४ । दृप् कि सन्दीपने (दृप्, चु, भ्वा, प) कि—दर्पयति दर्पति ।

३४ । दृप श वाधने (दृप, तुदा, प) श—दृपति, दर्पिता । वाधनं विहतिः ।

३५ । दृम्प अ ङ क सङ्घाते (दृम्प, चु, उ)

३६ । दिम्प अ ङ क सङ्घाते (दिम्प, चु, उ) द्वावेतौ वर्गद्वयोपधौ, क्रमात् सप्तमतृतीयस्वरिणौ च । ऋ, क—दृम्पयति दृम्पयते । दिम्पयति दिम्पयते । सङ्घातो राशीकरणम् । ङ—दृम्पयते दिम्पयते । एतौ केचिन्न मन्येते ।

३७। धूपक् दीप्तौ (धूप, चु, प) षष्ठस्वरी। क—धूपयति।

३७। धूप तापे (धूप, भ्वा, प) षष्ठस्वरी। धूपायति धूपायते। धायान्तत्वादुभयपदमिति बोपदेवः। मरेत्तु आयस्याप्राप्तिपक्षे परस्मैपदमेव। अधूपीत् दुधूपेत्यादि। तापः सन्तप्तीकरणम्।

३८। पुष्प फुल्लने (पुष्प, दिवा, प) पञ्चमस्वरी, मूर्द्धन्योपधश्च। फुल्लनं विकसनम्। य—पुष्प्यति कुन्दकोरकः।

ङ मेप गत्यां युप् रुप्य दुर्विमोहेऽथ रप् वदे।

३९। ङ मेप गत्याम् (मेप, भ्वा, आ) ङ—मेपते मिमेपे। द्य—अमिमेपत्।

४०। युप्य दुर्विमोहे (युप, दिवा, प)

४१। रुप्य दुर्विमोहे (रुप, दिवा, प) आद्योऽन्तःस्थाद्यादिः। विमोह आकुलीकरणम्। य—युप्यति, रुप्यति लोक शोकः। इर्—अयुपत् अयोपीत्। अरुपत् अरोपीत्। आभ्यां नित्यं ङ इति दुर्गः।

४२। अथ रप् वदे (रप, भ्वा, प) रपति। वदः कथनम्।

ङ रेप शब्दे लेपङ्च गमने ञि लिपौ शप्ञ।
लेपे लुपृश् लुञौ छेदे दृलुंप्य युपि ऋटलप।
भाषे व्यप्क च्चये विपक क्षेपे ड्व ङ वेप् चले वपौञ्।
ङु सुराङतन्तुवीजोप्तौ: शूर्पक् माने य शप्शपौञ्।
आक्रोशे व्वपौ खलु ञि शये ष्टिप ष्टेप ङ तु क्षुरति।

४३। ङ रेपृ शब्दे ( रेप, भ्वा, आ ) ङ—रेपते। रिरेपे। चङ—अरिरेपत्।

४४। लेपृ ङ च गमने ( लेप, भ्वा, आ ) चङ—अलिलेपत्। ङ—लेपते। लिलेपे। चकारात् ङरेपृ च ( गमनार्थकः )।

४५। ञि लिपौ श पञ उपलेपे ( लिप, तुदा, उ ) ञि—लिप्तोऽसि। औ—लेप्ता। श, प, ञ—लिम्पति लिम्पते चन्दनेन गात्रं सुखी।

४६। लुपॢ शपञौ छेदे ( लुप, तुदा, उ ) ॠ—अलूलुपत् अलुलोपत्। श, प, ञ—लुम्पति लुम्पते। ॡ—अलुपत्। औ—लोप्ता।

४६। इर्लुप्य-युपि ( लुप, दिवा, प ) इर्—अलुपत् अलोपीत्। अस्मान्नित्यं ङ इति दुर्गः। य—लुप्यति। युपि ( इच ) आकुलीभावे। मातुं लुप्यति साश्वयं नेत्रपञ्जलिपुटैर्नर इति हलायुधः। १७३।

४७। ॠ लप भाषे ( लप, भ्वा, प ) ॠ—अलीलपत् अललापत्। भाषः कथनम्।

४८। व्यपक् क्षये ( व्यप, चु, प ) अन्तःस्थाद्युतः। क—व्यापयति।

४९। विप्क क्षेपे ( विप, चु, प ) क—वेपयति।

५०। टुङ्ङ् वेपृ चले ( वेप, भ्वा, आ ) चलः कम्पनम्। टु—वेपथुः। चङ—अविवेपत्। ङ—वेपते वायुना दृक्षः।

५१। वपौञ् डु मुण्डतन्तुवीजोप्तयोः ( वप, भ्वा, उ ) औ—वप्ता। ञ—वपति वपते। डु—उप्त्रिमम्। ऐ—उप्यात्। मुण्डो लोमच्छेदः, वपति मस्तकं नापितः। तन्तुवीजयोरप्तिः तन्तु-

बीजोप्तिः । वपति तन्त्रं तन्त्रवायः । यदि वपति कृषाणः क्षेत्रमासाद्य बीजमिति ।

५२ । शूर्पक् माने ( शूर्प, चु, प ) षष्ठस्वरी । क—शूर्पयति धान्यं स्त्री ।

५३ । य शपौ ञ कोशे } ( शप, दिवा, उ )
५३ । शपौ ञ कोशे } ( शप, भ्वा, उ ) तालव्यादी ।
य, ञ—शप्यति शप्यते । औ—शप्ता, अशाप्सीत् । ञ—शपति शपते । क्रोशो दिवादिपक्षे उक्तिविशेषः । निर्भर्त्सनमिति चतुर्भुजः । सपत्नयोऽसौ शपथानशप्यदिति भट्टिः । ३ । ३२ । भ्वादिपक्षे गालिदानम् । शपतेर्ञित्त्वेऽपि शपथार्थोर्गत्यनुकार इति नियमात् शपथे आत्मनेपदम्, अन्यत्र परस्मैपदम् । कृष्णाय शपते गोपी (१) । प्रजेति त्वा शशाप सा इति रघुः । १ । ७७ । सख्यः शपामि यदि किञ्चिदपि स्मरामीति तु शरीरस्पर्शनाभावादिति पाणिनीयाः । केचित्तु शपथे नित्यमात्मनेपदमन्यत्र विभाषेत्याहुः, तेन प्रतिवाचमदत्त केशवः शपमानाय न चेदिभूभृते इति माघः । १६ । २५ ।

५४ । ष्वपौ ञिष्वप् शये ( स्वप, अदा, प ) षकारयुक्तमूर्द्धन्यादिः । औ—अस्वाप्सीत् । ष, लु—स्वपिति । ञि—सुप्तोऽस्ति । शयः शयनम् ।

५५ । ष्टिपृङ क्षरति } ( ष्टिप, भ्वा, आ )
५६ । ष्टेपृङ क्षरति } ( ष्टेप, भ्वा, आ ) ऋ—अतिष्टेपत् । ङ—स्तेपते । तिष्टिपे, तिष्टेपे । क्षरत् क्षरणम् ।

---

(१) कस्यचित् शरीरं स्पृष्टा मया एतच्च कृतमिति दिव्येन कृष्णं स्वाभिप्रायं विज्ञापयितुमिच्छतीत्यर्थः । एतादृशशरीरस्पर्शनादिना मिथ्यानिरसनं शपथः ।

ष्टूप् कोच्छ्राये ष्टूप्य इर्चे षप् सख्ये स्थादयस्त्रयः ।

५७। ष्टूप् कोच्छ्राये ( ष्टूप, चु, प ) षट्स्वरी। उच्छ्रायो राशीकरणम्। क—स्तूपयति धान्यं कृषकः। तुष्टूपयिषति।

५७। ष्टूप्य इर्चे ( ष्टूप, दिवा, प ) षट्स्वरी। य—स्तूप्यति। इट्—अस्तूपत् अस्तूपीत्। अकारान्वितत्वं ह इति दुर्गः। अतुष्टूपत्।

षकारादुच्छ्राये।

५८। षप सख्ये ( षप, भ्वा, प ) सर्हन्त्यादिः। सपति। असीषपत्। सख्यः सम्बन्धः। (१)।

स्थादयस्त्रयः।

ष्टूपकाद्ययस्त्रयो दन्त्यमाद्ययव स्युरित्यर्थः। (२)।

५९। स्तूपकोच्छ्राये ( स्तूप, चु, प ) तुस्तूपयिषति। (३)।

५९। स्तूप्य इर्चे ( स्तूप, दिवा, प ) अतुस्तूपत्।

६०। सप सख्ये ( सप, भ्वा, प ) असीसपत्।

क्षेपक क्षेपे लट सृपौ गत्यां क्लेटङ च क्लपङ् ।
भायणे स्युः पकारान्ताश्चतुःषष्टिस्तु धातवः ।

६१। क्षेपक् क्षेपे ( क्षेप, चु, प ) एकादशस्वरी। क—क्षेपयति। चिक्षेपयिषति।

६२। लट सृपौ गत्याम् ( सृप, भ्वा, प ) लट—असृपत्। अस्य

---

(१) सख्य इति सख्यक् सम्बन्धे इत्यस्य भक्ति रूपम्।

(२) तव इति प्रथमोपस्थितपरित्यागे प्रमाणाभावात् सन्निहितास्त्रय एव इमे ष्टूपकादय इति बोध्यम्।

(३) यत्र जिह्वो लेरिति नियमेन षत्वप्रसक्तेऽपि दन्त्यादिपाठसामर्थ्यात् षत्वाभावमिति बोध्यम्।

१९। चुबि कि चुम्बने (चुम्ब, चु, भ्वा, प) चुम्बनं मुखसंयोगः। द्ध—चुम्ब्यते। कि—चुम्बयति चुम्बति कान्ताधरं कामी। प्रिया-मुखं किम्पुरुषश्चुचुम्बे इति तु व्यतीहारे आत्मनेपदम्।

२०। डबिक् नोदे } (डम्ब, चु, प)

२१। डिबिक् नोदे } (डिम्ब, चु, प) द्वौ मूर्द्धन्यवर्ग-तृतीयादी। द्ध, क—डम्बयति, डिम्बयति। नोदः प्रेरणम्।

२२। तुबि कि तु अर्द्दे (तुम्ब, चु, भ्वा, प) तवर्गाद्यादिः पञ्चमस्वरौ। द्ध—तुम्ब्यते। कि—तुम्बयति तुम्बति। अर्द्दो वधः।

२३। तर्वि गतौ (तर्व, भ्वा, प)
२४। तम्ब गतौ (तम्ब, भ्वा, प)
२५। नर्वि गतौ (नर्व, भ्वा, प)
२६। नम्ब गतौ (नम्ब, भ्वा, प)
२७। पर्वि गतौ (पर्व, भ्वा, प)
२८। पम्ब गतौ (पम्ब, भ्वा, प) आद्यतृतीयपञ्चमा रेफोपधाः शेषा ओष्ठ्यवर्गशेषोपधाः। तर्वति, तम्बति, नर्वति, नम्बति, पर्वति, पम्बति।

पूर्वक् निकेतने वर्व वम्ब मर्व मम्ब रिवि।
रवि गत्यां रविङ् शब्दे लबिङ स्रंसने च कि।
लुव्यर्द्दने शम्ब गतौ शर्व हिंसे च शुल्व क।
माने सर्गे पर्व पम्ब सर्व सम्ब तु सर्पणे।

२९। पूर्वक् निकेतने (पूर्व, चु, प) षष्ठस्वरौ। निकेतन-मिह निमन्त्रणं निवासो वा। क—पूर्वयति द्विजान् भोक्तुं गृही। पूर्वयति तीर्थे साधुः।

३०। वर्वं गत्याम् (वर्वं, भ्वा, प)
३१। वम्ब गत्याम् (वम्ब, भ्वा, प)
३२। मर्वं गत्याम् (मर्वं, भ्वा, प)
३३। मम्ब गत्याम् (मम्ब, भ्वा, प)
३४। रिवि गत्याम् (रिम्ब, भ्वा, प)
३५। रवि गत्याम् (रम्ब, भ्वा, प) आद्यतृतीयौ रेफोपधौ, द्वितीयचतुर्थावोष्ठ्यवर्गशेषोपधौ। वर्वति, वम्बति, मर्वति, मम्बति। इ—रिम्ब्यते। इ—रम्ब्यते।

३५। रविङ् शब्दे (रम्ब, भ्वा, आ) इ—रम्ब्यते। ङ—रम्बते।

३६। लविङ स्रंसने च (लम्ब, भ्वा, आ) इ—लम्ब्यते। ङ—लम्बते। स्रंसनमिहावलम्बनमिति गोविन्दभट्टः। मनाङ् धरण्यामुषसत्यपि मौनमालम्बते इति। चकारात् शब्दे च।

३७। कि लुम्ब्यर्द्दने (लुम्ब, चु, भ्वा, प) पञ्चमस्वरी। कि—लुम्बयति लुम्बति। इ—लुम्ब्यते। अर्द्दनं वधः।

३८। शम्ब गतौ (शम्ब,भ्वा,प) ओष्ठ्यवर्गशेषोपधः। शम्बति।

३९। शर्वं हिंसेच (शर्वं, भ्वा, प) शर्वति। चकारात् गतौ।

४०। शुल्वक माने सर्गे (शुल्व, चु, प) पञ्चमस्वरी, तालव्यादिरन्तःस्थतृतीयोपधः। सर्गः सृष्टिः। क—शुल्वयति वेधाः पृथिवीं, परिमाति सृजति वेत्यर्थः।

४१। पर्वं सर्पणे (पर्वं, भ्वा, प)
४२। पम्ब सर्पणे (पम्ब, भ्वा, प)
४३। सर्वं सर्पणे (सर्वं, भ्वा, प)
४४। सम्ब सर्पणे (सम्ब, भ्वा, प) द्वावाद्यौ मूर्द्ध-

न्यादौ, ग्रेषौ स्म्यादौ, द्वितीयचतुर्थावोष्ठ्यवर्गशेषोपधौ । सर्म्बति, सम्बति । सिसर्म्बयिषति, सिसम्बयिषति । सिसर्म्बयिषति, सिसम्बयिषति । (एतेनिंसमन्तोदाहरणैः षोपदेशाषोपदेशपाठफलं दर्शितम्) ।

**सम्ब साम्बक सम्बन्धेऽपञ्चाः पञ्चाशदन्तवाः ।**

४४ । सम्बक सम्बन्धे ( सम्ब, चु, प )
४५ । साम्बक सम्बन्धे ( साम्ब, चु, प ) द्वावोष्ठ्यवर्गशेषोपधौ, ग्रेषो द्वितीयस्वरौ । क—सम्बयति साम्बयति धनं लोकः, बध्नातीत्यर्थः । आद्यस्तालव्यादिरिति धातुप्रदीपः, स्वरूं-न्यादिरप्येके ।

अपञ्चाः पञ्चाशदन्तवाः ।

(अन्तवाः अन्ते वो येषां ते वकारान्ता धातव इत्यर्थः.) अपञ्चाः न विद्यन्ते पञ्च यत्रेति संख्याया डोऽवह्नोरिति ड. । (तादृशाः पञ्चाशत) पञ्चचत्वारिंशदित्यर्थः ।

---

## भान्तवर्गः ।

**अभिङ् ध्वनावुन्भ पुभ् श पूर्त्तौ तुभ् ल्टङ सञ्चले ।**

१ । अभिङ् ध्वनौ ( अम्भ, भ्वा, आ ) इ—अम्भते । ङ—अम्भते ।

२ । उन्भ पश पूर्त्तौ ( उन्भ, तुदा, प )
३ । उभ् श पूर्त्तौ ( उभ, तुदा, प ) द्वौ स्वरादी ।

प, ग—उम्भति (इलुङ्नो लोप इति नलोपे पुनर्मुचादित्वान्नुम्)। ग—उभति कुम्भं जलेन लोकः। उम्भामास। उवोभ।

४। क्षुभ् ङ सञ्चले (क्षुभ, भ्वा, आ) ङ—अक्षुभत्। ङ—क्षोभते नानुजीविषु इति हलायुधः। ५६।

**क्षुभ्यग् च गल्भङ् धृष्टत्वे चीभ्ङ् कत्थे जभिक् नशि।**

४। क्षुभ्यग् च (क्षुभ, दिवा, क्रया, प) य—यः क्षुभ्यति रिपुष्वेवेति हलायुधः। ५६। ग—क्षुभ्नाति। चुक्षोभ। चकारात् सञ्चलने।

५। गल्भङ् धृष्टत्वे (गल्भ, भ्वा, आ) अन्तःस्थतृतीयोपधः। ङ—गल्भते लोकः, प्रगल्भ स्यादित्यर्थः।

६। चीभ्ङ् कत्थे (चीभ, भ्वा, आ) कत्थः श्लाघा। ऋ—अचिचीभत्। ङ—चीभते गुणिनं गुणी। चोचवर्गादिद्वयमित्येके। (पीभ इत्यर्थः)।

७। जभिक् नशि (जम्भ, चु, प) नशीति अन्तर्भूतणार्थत्वात् नष्टीकरणे। इ, क—जम्भयति पापं गङ्गा।

**जभि जभ् यभने जभ्ङ् जृम्भे जभजृभिङ् चर्व्वणे।**
**तृभ् च डभ् डिभिञक् सङ्के णभ्यग् हिंसेऽथ णभ् तुभ्ल्ट।**
**ङ च तुभ्यग् च कि इभी भये श्री दृभ् कि गुम्फने।**

७। जभि यभने } (जम्भ, भ्वा, प)

७। जभ यभने } (जभ, भ्वा, प) यभनं मैथुनम्।

इ—जम्भते। जम्भति, जभति युवा।

७। जभङ् जृम्भे (जभ, भ्वा, आ) जृम्भो गात्रशैथिल्य-

मिति गोविन्दभट्टः । ङ—जम्भते लोकः । नुण्जभोऽचीति यस्यैव नुण्, आत्मनेपदप्रकरणे तत्सूत्रविधानसामर्थ्यात् ।

७ । जभि ङ च } ( जम्भ, भ्वा, चा )
८ । जृभि ङ च } ( जृम्भ, भ्वा, चा ) ञेयः सप्तमस्वरी ।
ङ—जम्भते, जृम्भते । चकारात् जृम्भे । प्रत्यूषकाले भुजगाङ्गनाना सुखेषु कालः प्रतिजृम्भतीवेति गणकृतानित्यत्वात् ।

८ । ञी जृभ च (जृभ, भ्वा, चा) ङ—जर्भते । ई—जृब्धः । चकारात् जृम्भे ।

६ । डभि अक सङ्घे } ( डम्भ, चु, उ )
१० । डिभि अक सङ्घे } ( डिम्भ, चु, उ ) द्वौ स्वहैन्यवर्गतृतीयादी । इ, ञ, क—डम्भयति डम्भयते । डिम्भयति डिम्भयते । एतावात्मनेपदिनाविति केचित् । सङ्घो राशीकरणम् ।

११ । णभ्य ग हिंसे ( णभ, दिवा, क्रया, प ) य—नभ्यति । ग—नभ्नाति ।

११ । णभ णभ् ल्ड च } ( णभ, भ्वा, चा )
१२ । तुभ् ल्ड च } ( तुभ, भ्वा, चा ) ल्ड—अनभत् । अतुभत् । ङ—नभते । तोभते । चकाराद्धिंसे ।

१२ । तुभ्यग् च ( तुभ, दिवा, क्रया, प ) य—तुभ्यति । ग—तुभ्नाति । तुतोभ । चकाराद्धिंसे ।

१३ । कि दृभी भये ( दृभ, चु, भ्वा, प ) कि—दर्भयति, दर्भति । ई—दृब्धः । रामस्तु दृ भी इति धातुद्वयं मत्वा दारयति दरति, भाययति भयतीत्याह ।

१३ । ग्री दृभ् कि गुम्फने ( दृभ, तुदा, चु, भ्वा, प ) ग—दृभति । ई—दृब्ध । कि—दर्भयति, दर्भति । गुम्फनं ग्रन्थनम् ।

**दन्भुन् दम्भे दन्भ दिन्भ कङ् सङ्घातेऽथ दिभ् दभि ।**
**दभक् नोदे भर्भ हिंसे यभौ मैथुन ईरितः ।**

१४। दन्भु न दम्भे ( दन्भ, स्वा, प ) दम्भः परवञ्चना-हेतुव्यापारः। उ—दम्भित्वा दब्ध्वा। न—दभ्नोति छलः, छलयतीत्यर्थः।

१४। दन्भ क ङ सङ्घाते ( दन्भ, चु, आ )
१५। दिन्भ क ङ सङ्घाते ( दिन्भ, चु, आ ) क, ङ—दम्भयते, दिम्भयते। सङ्घातो राशीकरणम्।

१६। अथ दिभिक् नोदे ( दिन्भ, चु, प )
१७। दभिक् नोदे ( दन्भ, चु, प )
१७। दभक् नोदे ( दभ, चु, प ) इ, क—दिम्भयति, दम्भयति। क—दाभयति। नोदः प्रेरणम्।

१८। भर्भ हिंसे ( भर्भ, भ्वा, प ) रेफोपधः। भर्भति।

१९। यभौ मैथुन ईरितः (यभ, भ्वा, प) औ—ययाप्सीत्। यभति युवा।

**रभौङ् स्यात्तु राभस्ये रभिङ् शब्दे ङ रेभ च।**

२०। रभौङ स्यात्तु राभस्ये ( रभ, भ्वा, आ ) राभस्यमुत्सुकीभावः। निर्विचारप्रवृत्तिरितिगोविन्दभट्टः। औ—रब्धा। ङ—रभते साधुः पुण्ये। आङ्पूर्व्वोऽयमारम्भे। शास्त्रं पठितुमारभते शिष्यः।

२०। रभिङ् शब्दे ( रम्भ, भ्वा, आ ) इ—रम्भते। ङ—रम्भते।

२१। ङ रेभृ च (रेभ, भ्वा, आ) ङ—रेभते। रिरेभे। द्य—अरिरेभत्। चकारात् शब्दे।

**लभिङ् शब्दे लभ ड्वौ षङ् प्राप्तौ श् लुभ विमोहने।**

२२। लभिङ् शब्दे (लम्भ, भ्वा, आ) इ—लम्भते। ङ—लम्भते।

२२। लभ ड्वौषङ् प्राप्तौ (लभ, भ्वा, आ) डु—लब्धिमम्। ओ—लब्धा। ष—लभा। ङ—लभते। लभन्ति पुनरत्यानमिति गणाकृतानित्यत्वात्, पचादित्वादनि लभा इवाचरन्तीति क्वौ वा साध्यम्।

२३। श लुभ विमोहने (लुभ, तुदा, प) श—लुभत्यात्मनि (१) कामेनेति हलायुधः। २६५। लोभिता लोब्धा।

**लुभ्येगार्ध्येङ् वल्भ भुक्तौ शीभृ शल्भ ङ कत्थने।**

२३। लुभ्येगार्ध्ये (लुभ, दिवा, प) गार्ध्यमाकाङ्क्षा। य—लुभ्यति धनं लुब्धः। इर—अलुभत् अलोभीत्। अप्रान्नित्यं ङ इति दुर्गः। लोब्धा लोभिता।

२४। ङ वल्भ भुक्तौ (वल्भ, भ्वा, आ) अन्तःस्थात्तृतीयोपधः। भुक्तिर्भक्षणम्। ङ—वल्भते अन्नं लोकः।

२५। शीभृङ कत्थने } (शीभ, भ्वा, आ)
२६। शल्भङ कत्थने } (शल्भ,भ्वा,आ) शेषोऽन्तःस्थात्तृतीयोपधः। द्य—अशिशीभत्। ङ—शीभते, शल्भते। कत्थनं प्रशंसा।

**शुभल्टङ् दीप्तौ शुम्भ शुनृभश् पुन्भ च पिन्भु च हिंसने।**

---

(१) लुभत्यर्थे चेत्यपि पाठ।

२७। शुभ रुच् दीप्तौ ( शुभ, भ्वा, आ ) लु—अशुभत्। ऌ—शोभते। न शोभति सभामध्ये इति गणकृतानित्यत्वात्, मघादित्वादनि शोभइवाचरतीति क्वौ वा साध्यम्।

२७। शुभ पश दीप्तौ ) ( शुभ, तुदा, प )
२८। शुन्भ श दीप्तौ } ( शुन्भ, तुदा, प )
२९। पुम्भ च ) ( पुम्भ, भ्वा, प ) छायादौ ताल-व्यादी, शेषो मूर्द्धन्यादिः। तयः पञ्चमस्वरिणः। प, श—शुम्भति। शुशोभ। श—शुम्भति। शुशुम्भ। सुम्भति। चकाराद्दीप्तौ। माधवस्तु भ्वादौ च शुभ शुम्भ भासनहिंसनयोरिति पठन्ति।

३०। पिम्भु च हिंसने ( पिम्भ, भ्वा, प ) उ—सिम्भित्वा सिब्धा। चकारात् पूर्व्वाश्च ( पूर्व्वे त्रयो धातवोऽपि हिंसार्थका इत्यर्थः )।

ष्टुभु ष्टभि स्तभिङ् स्तम्भे स्तभिङ् च स्तनभुङ स्मृतः।
प्रमादे लृ स्तनभुङ विश्वासे स्त्रिम्भ स्तम्भ स्त्रिभु।
हिंसे सुन्भ द्युतौ चैकोनचत्वारिंशदन्तभाः।

३१। ष्टुभु ङ स्तम्भे ) ( ष्टुभ, भ्वा, आ )
३२। ष्टभि ङ स्तम्भे } ( ष्टनुभ, भ्वा, आ )
३३। स्तभि ङ स्तम्भे ) ( स्तम्भ, भ्वा, आ ) शेषो दन्त्यादिः। उ—स्तोभित्वा स्तुब्धा। ङ—स्तोभते। इ—स्तम्भते। ङ—स्तम्भते। इ—स्तम्भते। ङ—स्तम्भते। तुष्टोभयिषति। तिष्टम्भयिषति। तिस्तम्भयिषति। इकारस्त्वोभयत्र पाठात् पूर्व्वो नेदनुबन्धः। ननु आम्रेडितानुबन्धोऽप्यत्र कथं पूर्व्वो ङिदितिचेत् सत्यम्। अत्र इकारस्य पुनरुक्तिः पूर्व्वेण सम्बन्धनिषेधार्थैव, ङितस्तु सर्व्वे, एक एवेत् पाठबलाद्वाध्य इतिवत् ( १ )। स्तम्भो जडीभावो

(१) एतद्दोषं ३१ स्तम्भपदे लुपङ्च, ङचिङ्च इत्युभयोर्व्याख्याने विहतम्।

जडीकरणञ्च, स्तम्भो स्थूणाजडीभावावित्यमरोक्तेः, भीतेनावस्तम्भो जडीकृत इत्यर्थं इति कमदीश्वरोक्तेश्च । शास्त्रेण स्तोभते भूयो लघुप्रकृतिको नर इति हलायुध. । १२८ । स्तोभते इषं भीतो वायुरिति चतुर्भुजः । स्तम्भ इह क्रियानिरोध इति भीमः । दोष इविरिति गोविन्दभट्टः । अनयोः पक्षे स्तम्भो स्तब्धीकरणञ्च । स्तम्भते कवाटेन द्वारं लोकः ।

३४ । स्कभिङ् च ( स्कन्भ, अा, आ ) चकारात् स्तम्भे, स चेह स्तब्धीकरणम् । इ—स्कम्भते । ङ—स्कम्भते कवाटेन द्वारं लोकः । चस्कम्भे ।

३५ । स्तम्भु ङ न्ययतः प्रमादे ( स्तन्भ, अा, आ ) प्रमादोऽनवधानता । उ—स्तम्भित्वा स्तब्ध्वा । ङ—स्तम्भते धर्मे नीचः ।

३५ । ङ स्रम्भु ङ विश्वासे ( स्रन्भ, अा, आ, अां च ) विश्वासः शङ्काराहितीभावः । ङ—असस्रभत् । उ—स्रम्भित्वा स्रब्ध्वा । ङ—स्रम्भते पुत्रो मातरि । तालव्यादिरयमित्येके ।

३६ । शिन्भु हिंसे ( शिन्भ, अा, प )

३७ । क्षुभु हिंसे ( क्षुभ, अा, प )

३८ । खिभु हिंसे ( खिभ, आ, प ) आद्यन्तौ रेफयुक्ततृतीयस्वरिणौ, मध्यमः सप्तमस्वरी । उ—शिन्भित्वा शिब्ध्वा । क्षुभित्वा क्षुब्ध्वा । खेभित्वा खिब्ध्वा । शिम्भति, क्षुभति, खेभति ।

३९ । सुम्भ शुतौ च (सुन्भ, अा, प) पञ्चमस्वरी । सुम्भति । चकाराद्धिंसे च ।

## एकोनचत्वारिंशदन्तभाः ।

( अन्ते भो येषां ते, भकारान्ता धातव इत्यर्थः ।

**अम् गतौ भजने शब्देऽमक् रोगे कमुकङ् स्पृहि।**

१। अम गतौ भजने शब्दे (अम, भ्वा, प) अमति। (अमन्ति व्याधयोऽप्येनं न कदाचिद्भयादिवेति हलायुधः। (६०))।

१। अमक रोगे (अम, चु, प) क—आमयति व्याधिर्लोकम्।

२। कमुकङ् स्पृहि (कम, चु, आ) ङ—कमित्वा कान्त्वा। क, ङ—कामयते। अन्यैर्भ्वादौ पठ्यमानस्याप्यस्य किस्करणं कम वत इत्यादिना विहितस्य णिङोऽप्रापणार्थं, तेन परे णिङो-ऽप्राप्तिपक्षे अचकमत चकमे कमितेत्यादि। (निष्क्रष्टुमर्थं चकमे कुबेरादिति रघुः। ५। २६)।

**ञि क्लम्य क्लमु भिग्लानौ क्रम्य क्रमु गतौ चमु।**
**दूर्ध्ये सर्पे छमूङ् ञिप् च कुम्भ कङ मतीच्छिते।**
**कुत्सितौ गमॢ गत्यां चम नचम छम् जम जिम् झमु।**
**भक्षे णमौ शब्दनत्योस्तिमृतीम्य क्लेदने तमु।**
**दूर्ध्ये खेदेच्छयोर्दमृम्यु दूर् शमे द्रम् गतौ भ्रमिर्।**
**भ भ्रम्य भ्रमु जण् चाले भामङ् क्रोधे म्ट मीम गतौ।**
**शब्दे यमौ उ विरतौ यमञि परिवेषणे।**
**तटभावे रमुङ ञौ क्रीड़े ण् जुटु वमुद्गिरि।**

२। ञि क्लम्युभिग्लानौ } (क्लम, दिवा, प)
३। क्लमुभिग्लानौ } (क्लम, भ्वा, प) द्वावन्ताःस्था-तृतीययुतौ। ञि—क्लान्तोऽस्ति। य, भ—क्लाम्यति। उ—

क्रमित्वा क्रान्त्वा। ञ—क्रामति। भ्वादिपक्षेऽपि शमादित्वं, दिवु-क्रमाचम इति दीर्घज्ञापनार्थम्। इर्—अक्रमत् अक्रमीत्। अक्रामित्यं च इति दुर्गः।

४। क्रमु गतौ } (क्रम, दिवा, प)
४। क्रमु गतौ } (क्रम, भ्वा, प) य—क्राम्यति। गोविन्दभट्टमहीश्वरौ तु दीर्घं विधाय क्राम्यतीत्याहतुः। तथाच—दृश्यते यनि दीर्घत्वं शास्त्रलक्षणवेदिभिः। तेन क्राम्यति कौमारे(१) धानीत्यस्योपलक्षणादिति। उ—क्रमित्वा क्रान्त्वा क्रन्त्वा (क्रमोर्घौवेति वा दीर्घः) क्रामति। वारिपूर्णां नदीं तत्वा यथात् संक्रमते गुरुरित्यादौ सम्यगस्योपसर्गप्रतिरूपकत्वेनानुपसर्गत्वात् वागेरित्यात्मनेपदम्। इत्युक्तायनेषूपसर्गान्तरपूर्वादप्यात्मनेपदमिति शरणदेवः। संक्रामयतीत्यादि तु संक्रामन्तं करोतीति णत्वन्तात् ञौ साध्यम्। अन्यथा ममन्तत्वात् ह्रस्वः स्यात्। "चरेर्यदकामि पदैककेन च"मिति तु धातुपारायणमते चुरादित्वविवक्षायां सिद्धम्। तन्मतं परिभाषायां लिखितम्। अथवा 'क्राम' इति कर्मण्योण्यस्त्रारे भेदव्यौ साध्यम्। हरेरेकेन पदा आक्रा यत् पं नमयामके इत्यर्थः।

५। क्षमु दृष्यं मर्षे (क्षम, दिवा, प) मर्षः सहनम्। उ—क्षमित्वा क्षान्त्वा। पदव्यवस्थानुबन्धोऽयमित्येके। इर्—अक्षमत् अक्षमीत्। अक्षामित्यं च इति दुर्गः। भ, य—क्षाम्यति दीर्घं साधुः।

५। क्षमू ऊञ्चि ष (क्षम, भ्वा, आ) ऊ—क्षमिष्ट क्षंस्त। ङ—क्षमते। ञि—क्षान्तोऽस्ति। ष—क्षमा। षकाराकर्षे।

(१) शालिकक्षणेरिति [illegible]। [illegible]
[illegible]

( मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी। क्रियासमभिहारेण विराध्यन्तं क्षमेत कः इत्युभयत्र माघः। २। ४३ )।

५। कुस्म कङ स्मितेक्षिते कुस्मिति ( कुस्म, चु, आ ) ह्रस्वोदन्त्योपधः। स्मितेक्षितं बुद्धिपूर्व्वकदर्शनम्। कुस्मित् कुत्सितमीषद्धास्यम्। क, ङ—कुस्मयते जनः, कुदृशा पश्यति, कुत्सितं स्मयते वेत्यर्थः। चुकुस्मयिषते।

७। ओ गम्लृ गत्याम् ( गम, भ्वा, प ) ओ—गन्ता। लृ—अगमत्। गतिरत्र देशसंयोगफलकव्यापारः।

८। चम नद भक्षे ( चम, स्वा, प )
८। चमु भक्षे ( चम, भ्वा, प )
९। छमु भक्षे ( छम, भ्वा, प )
१०। जमु भक्षे ( जम, भ्वा, प )
११। जिमु भक्षे ( जिम, भ्वा, प )
१२। झमु भक्षे ( झम, भ्वा, प ) पठेते। न—चम्नोति। र—वैदिकः। उ—चमित्वा चान्त्वा। चमति। उ—छमित्वा छान्त्वा। जमित्वा जान्त्वा। जेमित्वा जीन्त्वा। झमित्वा झान्त्वा।

१३। णमौ शब्दनत्योः (णम, भ्वा, प) औ—नन्ता। शब्दार्थो न भाषायाम्। नतिरिह नमस्कारो नम्रीभावश्च। नमति गुरुं शिष्यः। नमन्ति फलिनो वृक्षाः। अमन्तत्वेऽप्यस्य ज्वलह्वले-त्यादिना ञौ केवलस्य ह्रस्वविधानात् सोपसर्गस्यैव नित्यं ह्रस्वः। नमयति, नामयति, प्रणमयति। धनुष्कमननामितं बधिरकर्णजापः कृत इत्यादौ अवगमनं अवनामः घञ्, ततोऽवनामं करोतीति ञौ रूपम्।

( मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी । क्रियासमभिहारेण विराध्यन्तं क्षमेत क इत्युभयत्र माघः । २ । ४३ ) ।

५ । कुस्म कङ मतीचिते कुस्मयति ( कुस्म, चु, आ ) ह्रस्वोदन्त्योपधः । मतीचितं बुद्धिपूर्व्वकदर्शनम् । कुस्मित् कुत्सितमीषद्धास्यम् । क, ङ—कुस्मयते जनः, बुद्धा पश्यति, कुत्सितं स्मयते वेत्यर्थः । चुकुस्मयिषते ।

७ । ऌ गम्लृ गत्याम् ( गम, भ्वा, प ) ऌ—गन्ता । ऌ—अगमत् । गतिरुत्तरदेशसंयोगफलकव्यापारः ।

८ । चमु नद भक्षे ( चम, स्वा, प )
८ । चमु भक्षे ( चम, भ्वा, प )
९ । छमु भक्षे ( छम, भ्वा, प )
१० । जमु भक्षे ( जम, भ्वा, प )
११ । जिमु भक्षे ( जिम, भ्वा, प )
१२ । झमु भक्षे ( झम, भ्वा, प ) पठेने । न—चम्नोति । र—वैदिक । उ—चमित्वा चान्त्वा । चमति । उ—छमित्वा छान्त्वा । जमित्वा जान्त्वा । जेमित्वा जीन्त्वा । झमित्वा झान्त्वा ।

१३ । णमौ शब्दनत्योः (णम, भ्वा, प) औ—नन्ता । शब्दार्थो न भाषायाम् । नतिरिह नमस्कारो नम्रीभावश्च । नमति गुरुं शिष्यः । नमन्ति फलिनो वृक्षाः । अमन्तत्वेऽप्यस्य ज्वलह्वलेत्यादिना ञौ केवलस्य ह्रस्वविधानात् सोपसर्गस्यैव नित्यं ह्रस्वः । नमयति, नामयति, प्रणमयति । स्वपुच्छमवनामितं वधिरकर्णजापः कृत इत्यादौ अवनमनं अवनामः घञ्, ततोऽवनामं करोतीति ञौ रूपम् ।

१४ । तिम्य क्लेदने ) (तिम, दिवा, प)
१५ । तीम्य क्लेदने ) (तीम, दिवा, प) य—तिम्यति, तीम्यति । तितेम तितीम । क्लेदनमार्द्रभावः । (स्यात्तेमनन्तु निष्ठानमित्यमरे व्यञ्जनपर्य्यायः) ।

१६ । तमु इच्छे खेदेच्छयोः (तम, दिवा, प) ख—तमित्वा तान्त्वा । इर्—अतमत् अतमीत् । अस्यानित्यं क इति दुर्गः । भ, य—ताम्यति लोक उत्तमः स्यादित्यर्थः ।

१७ । दमु भ्यु इर् शमे (दम, दिवा, प) भ, य—दाम्यति । ख—दमित्वा दान्त्वा । इर्—अदमत् अदमीत् । अस्यानित्यं क इति दुर्गः । शमः शान्तीभावः । दाम्यति मुनिः । शम इति पदस्य अन्तस्यापि सम्भवे शान्तीकरणेऽप्ययमिति धातुप्रदीपः । दमित्वाप्यरिसंघातानिति ।

१८ । द्रम गतौ (द्रम, भ्वा, प) दन्त्यवर्गतृतीयादिः । द्रमति ।

१९ । भ्रमिर्थ्यु जण चाले ) (भ्रम, दिवा, शमादिः, प)
१९ । भ्रमु जण चाले } (भ्रम, दिवा, प)
१९ । भ्रमु जण चाले ) (भ्रम, भ्वा, प) ओष्ठवर्गचतुर्थाद्याः । इर्—अभ्रमत् अभ्रमीत् । भ, य—भ्राम्यति । ख—भ्रमित्वा, भ्रान्त्वा । ज—भ्रमः भ्रामः । ज्वलादित्वात् णप्रत्ययेऽपि जनवध इत्यादिना ह्रस्वे भ्रम इत्येव ; तेन ज्वलादावस्य पाठो निष्फल इति धातुप्रदीपादयः । वस्तुतस्तु यथा द्रुह्यतेर्मुहां घड् येत्यनेन घडोऽप्राप्तिपक्षे घोढोभावित्यनेन ढ एव, सुहादिपाठसामर्थ्यात् दादेर्ष इत्यनेन घो न स्यात्, तथात्रापि ज्वलादिपाठात् जनवध इति ह्रस्वो न स्यात् । ण—बभ्रमतुः भ्रेमतुः ।

य—भ्रम्यति। भ्रमति। चाल इह पादविहरणम्। न जाने को हेतुर्भ्रमति भुवने भिक्षुक इव। भ्रेमुः शिलोच्चयांस्तुङ्गानिति भट्टौ (७। ५५) गत्यर्थविवक्षया सकर्मकत्वम्।

२०। भाम ङ क्रोधे (भाम, भ्वा, आ) ङ—भामते। (कोपना सैव भामिनीत्यमरः)।

२१। ऋ मीम् गतौ शब्दे (मीम, भ्वा, प) ऋ—अमिमीमत्।

२२। यमौ ङ विरतौ (यम, भ्वा, प) औ—यन्ता। ङ—यमित्वा यत्वा। विरतिर्निवृत्तिः। यच्छति पापात् साधुः।

२२। यमक् मि परिवेषणे तदभावे (यम, चु, प) (तदभावे अपरिवेषणे इत्यर्थः) यमयति यामयति। परिवेषणमन्नादेरुपसर्पणं, वेष्टनमित्येके। विच्छ्याप्राविवस्य रूपमिति रमानाथः। केचित्तु परिवेषण एवायं मानुबन्धः। क, मि—यमयन्नं स्त्रो, अन्यत्र नियामयति संयामयतीत्यादीत्याहुः। अन्येतु अपरिवेषण एवायं मानुबन्धः। नियमयति विमार्गप्रस्थितानात्तदण्ड इति शाकुन्तले। परिवेषणेतु यामयत्यन्नं द्विजाय स्त्रीत्याहुः। अनेनोभयोर्मतयोः प्रामाणिकत्वादुभयत्र मानुबन्धः कृतः।

२३। रमु ङ क्रीड़े (रम, भ्वा, आ) उ—रमित्वा रत्वा। ङ—रमते। ज—रामः रमः। औ—रन्ता।

२४। ञ्ऋटु वमुञ्ञिरि (वम, भ्वा, प) वकारादिः। ण—येमतुः ववमतुः। अन्ये तु एतत्कार्यविधायकसूत्रे फणादौ वेमं न मतन्तो "वेमुश्च केचिद्रुधिरमित्यादिसिद्धये तत्सूत्रे दन्त्यवकारादिवर्जनसानित्यतां स्वीकुर्वन्ति। केचित् पुनर्वर्गयवरादिधात्वन्तरमप्यस्तीति प्रलपन्ति। ज—वामः वमः। उ—

वमित्वा वान्त्वा। टु—वमथुः। क्तिरि वान्तौ। वमत्यन्नमशीर्णवान्। अमन्तत्वेऽप्यस्य ञौ ज्वलह्वलेत्यादिना केवलस्य ह्रस्वविकल्पनात् सोपसर्गस्यैव नित्यं ह्रस्वः। वमयति वामयति प्रवमयति।

**शमुध्य ईर् शमे शमृङ् कञालोचे श्रमुध्यञि।**
**इर्तपःखेदयो ष्टीम ष्टिम्य क्लेदे षम ष्टम।**
**वैक्लव्येऽथ क साम् सान्त्वे स्यमुञ् श ध्वनने स्यम।**
**अक् वितर्के ह्मल गतौ त्रियुतास्त्रिंशदन्तमाः।**

२५। शमुध्य इर् शमे (शम, दिवा, प) उ—शमित्वा शान्त्वा। प, य—शाम्यति। इर्—अशमत् अशमीत्। शमान्नित्यं ङ इति दुर्गः। शमः शान्तीभावः। शशाम वृष्ट्यापि विना दवाग्निरिति रघुः। २। १४। शम इति पदस्य अशान्तस्यापि सम्भवे शान्तीकरणेऽप्ययमिति धातुप्रदीपः (१)। वरेण शमितुं(२) लोकानलं दग्धुं हि तत्तपः इति कुमारसम्भवम्। २। ५६। यथो नियमस्याधिपतिर्दिवौकसामित्यादावनेकार्थत्वात् श्रुत्वेत्यर्थः। वा शम यमेत्यत्र वाशब्दस्य व्यवस्थावाचित्वादस्य ञौ नित्यं ह्रस्वः। शमयति।

२५। शमङ्कञालोचे (शम, चु, ङ) आलोचः प्रणिधानम्। वा शमयमेत्यत्र वाशब्दस्य व्यवस्थावाचित्वादस्य ञौ

---

(१) कातन्त्रधातुवृत्तौ यत्र दश उपशमे इत्यनयोर्व्याख्याने "एतौ सकर्मकावपि, उपशमशब्दादिनन्तादपि व्युत्पत्तेरिति धातुप्रदीप" इत्युक्तम्।

(२) इदानीन्तनपुस्तकेषु वरेण शमितमिति पाठो दृश्यते, तत्र शमितमिति अन्तक्तान्तस्य रूपम्, तथात्वे सकर्मकोदाहरणं सुधीभिर्भाव्यम्।

क्लमाभावः। ङ, क—शामयते कार्य्यं सुधीः। ञ—शामयति शामयते। निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति। चय-मात्मनेपदीति केचित्।

२६। श्रमुश ञि दूतप.खेदयोः (श्रम, दिवा, प) ताल-व्यादिः। उ—श्रमित्वा श्रान्त्वा। म, य—श्राम्यति लोकस्तपः करोति खिद्यते वेत्यर्थः। ञि—श्रान्तोऽस्मि। दूर्—अश्रमत् अश्रमीत्। चक्राम्रिलं ङ इति दुर्गः। पुर्य्यान् विश्रामयेति स इति रघौ श्रामक मन्त्रे इत्यदन्तस्य रूपम्।

२७। ष्टीम्य क्लेदे } (ष्टीम, दिवा, प)

२८। ष्टिम्य क्लेदे } (ष्टिम, दिवा, प) तौ षड्यन्यादी।
य—स्तीम्यति, स्तिम्यति। तिष्टीम, तिष्टेम। तिष्टीमयिषति, तिष्टेमयिषति। क्लेद आर्द्रभावः।

२९। षम वैक्लव्ये } (षम, भ्वा, प)

३०। ष्टम वैक्लव्ये } (ष्टम भ्वा, प) वैक्लव्यं विह्वलीभावः।
समन्ति यद्वियोगेन सीमन्तिन्यः स्मरातुरा इति हलायुधः।२२३।
समति। असीसमत्, अतिष्टमत्। (न च समति योकेनेति हलायुधः। २४५)।

३१। षच ष साम सान्त्वे (साम, चु, प) दन्त्यादिर्द्वितीय-स्वरी। सान्त्वं प्रियकरणम्। क—सामयति दीनं दानेन दाता। (यः साम्यति सामज्ञः स्निग्धैरालोकनैश्च ता इति हलायुधः। ताः सीमन्तिनीरित्यर्थः २२३।)।

३२। स्यमु अय ध्वनने (स्यम, तदा, प) अन्तःस्थादिरुक्तः। उ—स्यमित्वा स्यान्त्वा। श—स्येमतुः सस्यमतुः। य—स्यमती स्यमन्ती।

३२। स्यमु ञक वितर्के (स्यम, चु, उ) अन्तःस्यादियुक्तः। अस्य स्वार्थणौ ह्रस्वो न स्यात् प्रेरणणौ तु स्यादिति माधवः। स्यमते तु बाधमयमेति बाधब्दाद्यमवस्याप्यम्। अ, क—स्यामयति स्यामयते परगुणं सुधीः।

३३। इम्म गतौ (इम्म, भ्वा, प) महयान्तः। इम्मति।

त्रियुतास्त्रिंशदन्तमाः।

(अन्ते मो येषां ते, मान्ता धातव इत्यर्थः, त्रियुतास्त्रिंशत् त्रयस्त्रिंशत्संख्यका इत्यर्थः.)।

---

## यान्तवर्गः।

### अयङ् गतावीर्क्ष्य ईर्ष्य ईर्ष्ये जयीङ् सेवने।

१। अयङ् गतौ (अय, भ्वा, आ) ङ—अयते।

२। ईर्क्ष्य ईर्ष्ये } (ईर्क्ष्य, भ्वा, प)

३। ईर्ष्य ईर्ष्ये } (ईर्ष्य, भ्वा, प) द्वौ दीर्घादी रेफिणौ। ईर्ष्ये इति शेषस्य षष्ठि क्वचाल्लोप इति यत्वात् सिद्धम्। ईर्ष्याः पराभ्युदयासहिष्णुत्वम्। परदोषासहिष्णुत्वमिति केचित् (अक्षमेत्यर्थः)। ईर्क्ष्यति ईर्ष्यति खलः साधवे। एतौ यकारान्तावित्येके।

४। जयीङ् सेवने (जय, भ्वा, आ) दीर्घादिः। सेवनमिह सिव्युतन्तुसन्तताबित्यस्य रूपम्। ई—जतः। ङ—जयते पटं सौचिकः।

### क्नूयीङ् दुर्गन्ध आर्द्रत्वे शब्दे क्ष्मायीङ् विधूनने।

५। क्नूयीङ् दुर्गन्ध आर्द्रत्वे शब्दे (क्नूय, भ्वा, आ) ह्रस्वनकार-

युक्तो दीर्घो। तथा च "क्नूयीक्ष्मायतितेविदेवय इमे सेविद्य मेवि-त्वये"ति शार्दूलविक्रीडिते चक्रेश्वरः। (क्नू इति दीर्घं विना शार्दूलविक्रीडितछन्दइति न स्यात्)। ई—क्नूतः। ङ—क्नूयते मत्स्यः, दुर्गन्धः स्यादित्यर्थः। क्नूयते वसमम्भसा।

६। क्ष्मायीङ विधूनने (क्ष्माय, भ्वा, आ) चोष्मवर्गयोप-युक्तचादिः। विधूनन इति विधून्यतेऽसाविति कर्म्मणि घञि विधूनः सकम्पस्ततो विधून इवाचरतीति क्वौ कर्त्तर्य्यनटि रूपं कम्पनमित्यर्थः। अन्यथा कम्पनप्रेरणमेवार्थः स्यात्। ई—क्ष्मातः। ङ—क्ष्मायते द्रुमः। चक्ष्माये च मधौति भट्टिः। १४। २१। क्ष्मायते कम्पते लङ्गत्येजतीर्त्ते च वेपते इति कम्पार्थे भट्टमल्लः।

च्युचीलभिषवे चीयृञ् संहत्यादानयोश्चयङ्।
गतौ चायृञ् निशामेऽर्च्चे चाय् तयङ् गतिरक्षयोः।

७। चुच्चीलभिषवे (चुच्य, भ्वा, प) तालव्यवर्गाद्योपधः। पञ्चमस्वरी। ई—चुक्तः। यद्वयान्तोऽयमित्येके। अभिषवः स्नानं मन्थनं पीडनं सन्धानञ्च। (षु ञ न सन्धाक्लेदपीडामन्थे इति निघण्टुात्)।

८। चीयृ ञ संहत्यादानयोः (चीय, भ्वा, उ) चतुर्थस्वरी। ञ—अचिचीयत्। ञ—चीयति चीयते। (संहतिराच्छादनम्)।

९। चय ङ गतौ (चय, भ्वा, आ) ङ—चयते।

१०। चायृ ञ निशामेऽर्च्चे (चाय, भ्वा, उ) ञ—अचचायत्। ञ—चायति चायते। निशाम इह चाक्षुषज्ञानम्। तं पर्व्वतीयाः प्रमदाश्चचायिरे इति माघः। १२। ५१।

११ । णय ङ गतिरक्षयोः } ( णय, भ्वा, आ )
१२ । तय ङ गतिरक्षयोः } ( तय, भ्वा, आ ) ङ—नयते । तयते ।

तायृङ् पालनसन्तत्योर्ञिदयङ् ग्रहणे गतौ ।
वधे दानेऽवने दायृङ् दाने नय पयङ् गतौ ।

१३ । तायृङ पालनसन्तत्योः ( ताय, भ्वा, आ ) सन्ततिर्विस्तारः । ऋ—अततायत् । ङ—तायते विद्यां सुधीः ।

१४ । ञि दयङ ग्रहणे गतौ वधे दानेऽवने ( दय, भ्वा, आ ) अवनं पालनम् । ञि—दयितोऽस्ति । ङ—दयते दीनं दयालुः । तेषां दयसे न कस्मादित्यत्र कर्मणि षष्ठी ।

१५ । दायृङ दाने ( दाय, भ्वा, आ ) ऋ—अददायत् । ङ—दायते ।

१६ । नय ङ गतौ } ( नय, भ्वा, आ )
१७ । पय ङ गतौ } ( पय, भ्वा, आ ) ङ—नयते । पयते ।

पूयीङ् दुर्गन्धशीर्ण्योरो प्यायीङ् दृद्धौ मयङ् गतौ ।

१८ । पूयीङ दुर्गन्धशीर्णौ (पूय, भ्वा, आ) षष्ठस्वरी । ई—पूतः । ङ—पूयते मतस्यः दुर्गन्धः स्यादित्यर्थः । शीर्णिर्भेदनम् ।

१९ । ओ प्यायीङ दृद्धौ ( प्याय, भ्वा, आ ) ओ—पीनं मुखम् । उपसर्गात्तु प्रप्यानम् । अस्वाङ्गेतु प्यानः पीनः स्वेदः । ङ—प्यायते ।

२० । मयङ गतौ ( मय, भ्वा, आ ) ङ—मयते ।

मव्य वन्धे रय् लय् वयङ् व्ययञ् गतौ व्ययक् तुदि ।

२१। मव्य बन्धे ( मव्य, भ्वा, प ) मव्यति चौरं राजा। यद्दयान्तोऽयमित्येके।

२२। रयङ गत्याम् ) ( रय, भ्वा, आ )
२३। लयङ गत्याम् | ( लय, भ्वा, आ )
२४। वयङ् गत्याम् | ( वय, भ्वा, आ )
२५। व्ययञ् गत्याम् ) ( व्यय, भ्वा, आ ) शेषोऽन्तःस्थादियुक्तः। (अत्र पूर्वे धातवो न कथं आनुबन्धा इत्याशङ्क्याह) धातुभेदे ङञोरसङ्कर इति वोपदेवः। ( धातुभेदे सति परोऽनुबन्धः पूर्वेषामिति नियमात् ङञावित्यनुबन्धावेकस्य धातोर्न भवत इति भावः ) । ङ—रयते, लयते, वयते। ञ—व्ययति व्ययते।

२५। व्ययक् नुदि ( व्यय, चु, प ) अन्तःस्थादियुक्तः। क—व्याययति। नुदि प्रेरणे।

शुच्यी त्वभिषवे पूर्व्य ईर्षे सूर्व्य त्वनादरे।
ईर्षे स्फायीङ संवृद्धौ हय हर्य्य क्लमे गतौ।
*एकत्रिंशद् यकारान्ता धातवः परिकीर्त्तिताः।*

२६। शुच्यी त्वभिषवे ( शुच्य, भ्वा, प ) तालव्यादिः पञ्चमस्वरी तालव्यवर्गाद्योपधः। ई—शुक्तः। यद्दयान्तोऽयमित्येके। अभिषवः स्नानं मन्थन पीडनं सन्धानञ्च।

२७। पूर्व्य ईर्षे ( पूर्व्य, भ्वा, प ) ओष्ठ्यादिर्दीर्घरेफमध्यः। सूर्व्यति सुपूर्व्य। यद्दयान्तोऽयमित्येके। ईर्षार्थः प्रागुक्तः।

२८। सूर्व्य त्वनादरे ईर्षे ( सूर्व्य, भ्वा, प ) दन्त्यादिर्दीर्घरेफमध्यः। सूर्व्यति। सुसूर्व्य।

२९। स्फायीङ संवृद्धौ (स्फाय, भ्वा, आ) ई—स्फीतः स्फातः।

ङ—स्मायते । पस्माये । स्मायत्त्विर्मोकसन्धीति गणसूत्रानित्यत्वात् । स्मायते स्मायः पचादित्वादच्, स्माय इवाचरतीति क्वौ ग्रवन्तं वा ।

३० । ज्य क्षामे गतौ } (ज्य, भ्वा, प)

३१ । ज्य्यं क्षामे गतौ } (ज्य्यं, भ्वा, प) शेषो रेफोपधः । ज्यति । ज्य्यंति । क्षामो ग्लानिः ।

एकत्रिंशद् यकारान्ता धातवः परिकीर्त्तिताः । (सुगमम्) ।

---

## रान्तवर्गः ।

अम्र गत्यामीड्डं कम्पगत्योरीर्कि गतौ नुदि ।

१ । अम्र गत्याम् (अम्र, भ्वा, प) ओष्ठ्यवर्गचतुर्थोपधः । अम्रति । (वनेष्वानम्र निर्भय इति भट्टिः ।४।११।) ।

२ । ईड्ड़ कम्पगत्योः (ईर, अदा, आ) दीर्घादिः । ङ, ञ—ईर्त्ते लता वायुना ।

२ । ईर्कि गतौ नुदि (ईर, चु, भ्वा, प) कि—ईरयति ईरति । नुदि प्रेरणे ।

क्मर् कौटिल्ये कुरथ शब्दे घरज सञ्चलने चुरथ । विलेखे खनने क्षुद्रिक मिथ्योक्तौ खोर् ऋ्ट खोटने ।

३ । क्मर् कौटिल्ये (क्मर, भ्वा, प) ओष्ठ्यवर्गाद्योपयुक्तः । क्मरति खलः कुटिलः स्यादित्यर्थः ।

४ । कुरथ शब्दे (कुर, तुदा, प) थ—कुरति । कोरिता ।

५ । घरज सञ्चलने (घर, भ्वा, प) ज—घारः घरः ।

मस्खलनमिव मोचनं स्रवणाय । व्यादौ सकर्मकः । स्रोतोभि-
स्त्रिद्यगला मदं चरन्त इति किराते ।७८। स्रवणेतु चरत्घृतज-
हत्तय इति । (अचारिषुः शराम्भांसि तस्मिन् रच:पयोधरा
इति भट्टिः ।२।८। चारुल्काः प्रचचरुरिति भट्टिः ।१४।२७। )।

६। क्षुरश विलेखे खनने (क्षुर, तुदा, प) श—क्षुरति
भूमिं लोकः। क्षोरिता। क्षुरो लोमच्छेदनः।

७। कुद्रिक् मिथ्योक्तौ (कुन्द्र, चु, प) पञ्चमस्वरी दन्त्यवर्ग-
तृतीयोपधः। इ, क—कुन्द्रयति नीचः मिथ्या वदतीत्यर्थः। कुन्द्र
इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेपूच्चारणभेदार्थः।

८। खोर् ङ खोटने (खोर, भ्वा, प) क—अचुखोरत्।
खोरति खञ्जः।

खुरश् चोरच्छिदो गुर्ङौग्नि गूरङक उद्यमे।

९। खुरश चोरच्छिदोः (खुर, तुदा, प) चोरो विलेखनम्।
श—खुरति भूमिं त्वचं वा लोकः। खोरिता।

१०। गुर्ङौग्नि उद्यमे } (गुर, तुदा, कुटा, आ)

११। गूरङक उद्यमे } (गूर, चु, आ) द्वौ क्रमात् ह्रस्व-
दीर्घिणौ। ङ, ग्नि—गुरते, अगुरिष्ट। ईं—गूर्णः। ङ, क—
अन्नेषु नोगूरयतेऽक्षमाहवे (यः) इति हलायुधः। ५१।

गूरी यङ् वधे गत्यां गुद्रिक् कुन्द्रे घुरश् ध्वनौ।
भीमार्थे घुर् यङी हिंसाज्यान्योश्चर् गमनेऽदने।
आचारे चर्क संशीत्यसंशीत्योश्चूर्ङ्यी दहि।

११। गूरी यङ वधे गत्याम् (गूर, दिवा, आ) दीर्घी।
तथा च—दीपि पूरि जनि गूरि घूरयः काशि पाशि मदि सूरि

त्वरयः। घूरि जूरि खिदि विद्यति क्लिश्यूरि शुध्यति मनो दिवादिष्विति रयोद्धताया चण्डेश्वरः। ईूं—गूर्णः। य, ङ—गूर्यते।

१२। गुद्रिक् कुन्द्रे ( गुन्द्र, चु, प ) पञ्चमस्वरी दन्त्यवर्गतृतीयोपधः। कुन्द्रो मिथ्योक्तिः। इ, क—गुन्द्रयति नीचः मिथ्या वदतीत्यर्थः। गुन्द्र इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेपूच्चारणभेदार्थः।

१३। घुरश्च घने भीमार्थे (घुर, तुदा, प) भीमोभयानकरसः तस्यार्थो हेतुर्भीमार्थः, भीमार्थ इति ध्वनावित्यस्य विशेषणम्। य—घुरति व्याघ्रो मनुष्याणां भयजनकशब्दं करोतीत्यर्थः। अर्थद्वये तु शब्दं करोति भयहेतुर्भवति वेत्यर्थः। घोरिता। घुर भीमार्थशब्दयोरिति माधः। आर्त्त इति शब्दविशेषणमिति रमानाथः। घुरत्यार्त्तंच कुरतीति शब्दानुदत्तो भट्टमल्लः। (१)। ( विभिन्ना जुघुरर्घोरमिति भट्टिः। १४। ४० )।

१४। घूर्ईड़ी हिंसाज्यान्योः ( घूर, दिवा, आ ) दीर्घी। य, ङ—घूर्यते। ईूं—घूर्णः। ज्यानिर्गतवयोभावः।

१५। चर गमनेऽदने आचारे ( चर, भ्वा, प ) चरति।

१५। चर्क संशीत्यसंशीत्योः ( चर, चु, प ) संशीतिः संशयः, असंशीतिरसंशयः। क—विचारयति यो धर्ममिति हलायुधः। १२५। चर असंशये इति माधः। केचित्तु चर संशये इति पठित्वा संशये हि विचारणा स्यादित्याहुः। (२)।

१६। चूर्ईयी दहि (चूर, दिवा, आ) दीर्घी। ङ, य—चूर्यते वह्निरिन्धनम्। इ—चूर्णः।

---

(१) घुर कुर इत्युभावार्त्तशब्दे इत्यर्थः।

(२) संशये इति पाणिनि॰। असंशये इति कातन्त्रम्।

चुर्कि स्तेये छुर्धि लोपे ज्वर्म रोगे ङ जूर यी।
ज्यानौ वधे त्सर छद्मगत्यां ञि त्वर्पमङ् स्वदे।

१७। चुर कि स्तेये (चुर, चु, भ्वा, प) क्रि—चोरयति चोरति धनं चौरः।

१८। छूर धि लोपे (छूर, तु, प) धि—छूरति, अच्छुरीत्, चुच्छोर। लोपश्छेदः। (१)।

१९। ज्वर म रोगे (ज्वर, भ्वा, प) म—ज्वरयति। ज्वरति जनोधातुवैषम्यात्।

२०। ङ जूर यी ज्यानौ वधे (जूर, दिवा, आ) दीर्घी। ङ, य—जूर्य्यते। ई—जूर्णः। ज्यानिर्गतवक्रवयोभावः।

२१। त्सर छद्मगत्याम् (त्सर, भ्वा, प) दन्त्यवर्गाद्यस्याधोदन्त्य सकारः। त्सरति धूर्त्तश्छलेन गच्छतीत्यर्थः। तत्सार।

२२। ञि त्वर प मङ स्वदे (त्वर, भ्वा, आ) ञि—त्वरितः त्वर्णोऽसि। वयाम त्वपत्वरसंघुपास्तनिभ्यो निष्ठाया वेमत्तेऽपि वेदपूर्वाख्यभेदार्थमेतस्यादनुबन्धमन्ये न मन्यन्ते। प—त्वरा। म—त्वरयति। ङ—त्वरते। स्वद इह शीघ्रमनुष्ठानम्। मानुनेतुमबलाः स तत्वरे इति। १९। ३८।

तूर्यङौ हिंसे च तुर्लि वेगे तविक् ङ धारणे।

२३। तूर्यङौ हिंसे च (तूर, दिवा, आ) दीर्घी। य, ङ—तूर्यते। ई—तूर्णः। चकारात् स्वदे च।

---

(१) रञ्जनेऽप्ययम्। छुरति अलं वाससापः।

२४ । तुर त्विर वेगे (तुर, चा, प) ऊखौ । त्वि—तुतूर्त्ति । र—वैदिकः । वेगः शीघ्रगमनम् । अदादिवर्ज्जधातुभ्यः श्नपो-विधानेनैवेष्टसिद्धौ अदादेः श्नप विधाय तल्लुक्करणमस्य निष्ठायां भावादिद्वे वोदुडोऽव्यत इत्यनेन गुणार्थमितिचतुर्भुजः । तेन तोरितं तुरितमिति, एवं रोदितं रुदित मित्यादि ।

२५ । तत्रि कङ धारणे (तन्त्र, चु, आ) आदिमध्ययो-स्तकारः । धारणं धरणम् । आयायामस्य विस्तारणे प्रायः-प्रयोगः । इ, क, ङ—तन्त्रयते तन्तून् तन्त्रवायः । तन्त्र इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेयुच्चारणभेदार्थः । तत्रि कुटुम्ब धारणे इति माघः । द्वावेतौ धारणेऽर्थे वर्त्तेते इति चान्द्राः । केचित्तु कुटुम्बधातुममन्यमानाः तत्रिधातुः कुटुम्बस्य धारणे पोषणेऽर्थे वर्त्तते इत्याहुः ।

## ऋट धोर गतिचातुर्य्ये धूरी यङ वधे गतौ ।

२६ । ऋट धोर गतिचातुर्य्ये (धोर, भ्वा, प) ऋट—अदुधोरत् । गतौ चातुर्य्यं गतिचातुर्य्यम् । धोरत्याधोरणाक्रान्ता विनीता यस्य वारणा इति हलायुधः । १३८ ।

२७ । धूरी यङ वधे गतौ (धूर, दिवा, आ) दीर्घी । ई—धूर्णः । य, ङ—धूर्य्यते । (ज्ञात्वा श्रुर्य्यांच धूर्य्यन्ते साधुभिः साधुवादिता इति हलायुधः । १३८ । ) ।

## पुर्ष्ग्रगत्यां पूरी यङ् पूर्त्तौ पूरक् च बभ्रतु ।
## मभ्र गत्यां मवि काङ गुप्तोक्तौ सुर्भ वेष्टने ।

२८ । पुर्य अग्रगत्याम् (पुर, तुदा, प) पञ्चमस्वरी । अ—पुरति क्येड', कनिष्ठस्य अग्रे गच्छतीत्यर्थः । पोरिता ।

२८ । पूरी यङ पूर्त्तौ ( पूर, दिवा, आ ) दीर्घौ । पूर्त्तिरिह आप्यायनम् । ई—पूर्णः । य, ङ—पूर्य्यन्ते पितरस्तस्येति हलायुधः । १५१ ।

२९ । पूरक् च ( पूर, चु, प ) दीर्घौ । चकारात् पूर्त्तौ । पूर्त्तिरिहापि आप्यायनम् । क—पितॄन् पूरयति श्राद्धे हव्यैः कव्यैश्च यः सदेति हलायुधः । १५१ ।

३० । बभ्रतु गत्याम् } ( बभ्र, भ्वा, प )
३१ । मभ्र गत्याम् } ( मभ्र, भ्वा, प ) द्वावोष्ठ्यवर्गचतुर्थोपधौ । बभ्रति । मभ्रति ।

३२ । मत्रि कड गुप्तोक्तौ ( मन्त्र, चु, प ) दन्त्यवर्गाद्योपधः । इ, क, ङ—इति ध्रुवं मन्त्रयते नृपोऽयमिति मुरारिः । मन्त्र इतिपाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेपूच्चारणभेदार्थः ।

३३ । मुरश वेष्टने ( मुर, तुदा, प ) पवर्गीयाद्यः पञ्चमस्वरी । श—मुरति वृक्षं लता । मोरिता ।

**यन्त्रिक् सङ्कोचने बभ्र गत्यां श्वभ्रक् विले गतौ ।**
**तङ्के घूर् पूर्यङौ स्तम्भे हिंसे पुर्सुर्श भैश्वर्ययोः ।**

३४ । यन्त्रिक् सङ्कोचने ( यन्त्र, चु, प ) दन्त्यवर्गाद्योपधः । इ, क—यन्त्रयति मन्त्रेण सर्पं जाङ्गुलिकः ( विषवैद्यः ) । यन्त्र इति पाठेनैवेष्टसिद्धौ इदनुबन्धो वेदेपूच्चारणभेदार्थः ।

३५ । बभ्र गत्याम् ( बभ्र, भ्वा, प ) वकारादिरोष्ठ्यवर्गचतुर्थोपधः । बभ्रति ।

३६ । श्वभ्रक् विले गतौ तङ्के ( श्वभ्र, चु, प ) वकारयुक्तादिरोष्ठ्यवर्गचतुर्थोपधः । विलं रन्ध्रकरणम् । क—श्वभ्रयति भाण्डं

बालकः । तद्ध इति तकि दौस्थ्ये इत्यस्य रूपम् । स्त्रम्भयति दीनः दुःखेन जीवतीत्यर्थः । तद्ध स्थाने तन्त्र इति पाठो ज्ञेयः ।

३७ । स्मूर् यडी स्तम्भे दिवि } ( स्मूर, दिवा, आ )

३८ । धूर् यडी स्तम्भे दिवे } ( धूर, दिवा, आ ) द्वौ दीर्घिणौ क्रमात्तालव्यमूर्द्धन्यादी च । य, ङ—स्मूर्य्यते, धूर्य्यते । ई—स्मूर्णः धूर्णः । शेषः कैश्चिन्न मन्यते । स्तम्भो जडीभाव ।

३९ । घुर् श भैम्ययोः } ( घुर, तुदा, प )

४० । खुर् श भैम्ययोः } ( खुर, तुदा, प ) द्वौ पञ्चमस्वरिणौ । शेषो दन्त्यादिः । श—खुरति । सुघोर । सुखोर । भा दीप्तिः, ऐश्वर्यमैश्वर्य्यम् ।

## स्फुर्शि स्फुर्त्तौ चले स्फार्श द्विचत्वारिंशदन्तराः ।

४१ । स्फुरशि स्फूर्त्तौ चले ( स्फुर, तुदा, प ) स्फूर्त्तिः प्रकाश', चलनम् । शि—स्फुरति, अस्फुरीत् चामरम् । पुस्फोर ।

४२ । स्फरश च ( स्फर, तुदा, प ) आद्यस्वरी । श—स्फरती स्फरन्तौ मस्फार पिस्फरिषति वास्फर्य्यते । क्रमदीश्वरोऽप्येवम् । स्फरणं स्फुरणे इत्यमरोऽपि । चकारात् स्फूर्त्तिचलनयो. । अयं पञ्चमस्वरीति भ्रमो ज्ञेयः । तथात्वे पूर्व्वेणैवेष्टसिद्धावस्य वैयर्थ्यं स्यात् । न च कुटादित्वविकल्पनार्थमस्य पाठ इति वाच्यं पूर्व्वत्रैव शि श इत्यनुबन्धद्वयपाठादपि तत्सिद्धेः । एवं संख्याया अप्यसङ्गतिः स्यात् । यत्तु अस्मिन् सत्यपि स्फारयतीति साधनाय णौ स्फुरतेरेव उकारस्य आकारविधानं तदस्य सर्व्वसम्मतत्वाभावात् अतएव स्फर इत्येके इति रमानाथः ।

द्विचत्वारिंशदन्तराः । ( सुगमम् ) ।

---

## लान्तवर्गः ।

अलञ् वारणपर्य्याप्तिभूषास्विल् श शये गतौ ।

१ । अल अ वारणपर्य्याप्तिभूषासु ( अल, भ्वा, प ) अ—अलति अलते पापं गङ्गा, निवारयतीत्यर्थः । पर्य्याप्तिः सामर्थ्यम् । पर्य्याप्तन्तु यथेष्टं स्यात् तस्मो शक्ते निवारणे इति विश्वप्रकाशात् । अलति घोटको धावितुं, समर्थ स्यादित्यर्थः । अलति हारो जनं भूषयतीत्यर्थः ।

२ । इल श शये ( इल, तुदा, प ) श—इलति । शयः शयनम् ।

इल् कच् क्षेपे कलङ् संख्यानतोः कल् किल् शुदौ किलश् ।

शौल्यैर क्रीड़े कील बन्धे चलज चाले चये चलक् ।

शौचे कूलत्वाहतौ क्ष्मील् निमेषे ङ् काल्ल कूजने ।

शब्देऽशब्दे कुलज् बन्धुसंहत्योः क्षेल केलतु ।

चेल् खेल् चालगत्योः खल् चल् जार्थे खोल् खोटने ।

२ । इल काच क्षेपे ( इल, चु, प ) क्रुरादिः । क—एलयति । चकारादिलश च ( क्षेपार्थकः ) ।

३ । कलङ् संख्यानतोः ( कल, भ्वा, आ ) ङ—कलते दिवसं इन्द्र, गणयतीत्यर्थः । कल् शब्दः । ( निष्कलन्ते मुखादस्य नात्मीलपरुषा गिर इति हलायुधः । ७० ) ।

३ । कल क नुदौ } ( कल, चु, प )

४ । किल क नुदौ } ( किल, चु, प ) क—कालयति । केलयति । नुदिरिति नुद ञौ प प्रेरणे इत्यस्य औणादिककि-प्रत्यये रूपम् ।

४ । किलश श्वैत्ये क्रीडे ( किल, तुदा, प ) श—किलति प्रासादः शिशुर्वा । केलिता ।

५ । कील बन्धे ( कील, भ्वा, प ) चतुर्थस्वरी । कीलति ।

६ । चल ज चाले चये ( चल, भ्वा, प ) ज—चालः चलः । चालश्चलनं, चयश्चयनम् ।

६ । चलक शौचे ( चल, चु, प ) शौचमिह शुद्धीकरणम् । क—चालयति पात्रं पयसा लोकः ।

७ । कूल त आवृतौ (कूल, भ्वा, प) षष्ठ स्वरी । कूलति वाटीं प्राचीरः ।

८ । क्ष्मील निमेषे ( क्ष्मील, भ्वा, प ) कोष्ठवर्गश्चेपयुक्त-चादिलुप्त्यस्वरी । निमेषः पक्ष्मभिश्चक्षुष आवरणम् । क्ष्मीलति चक्षुः पक्ष्मभिरावृतं स्यादित्यर्थः ।

९ । ङ काश्र कूजने शब्देऽशब्दे ( काश्र, भ्वा, आ ) लहयान्तः । ङ—काश्रते लोकः, अव्यक्तशब्दं करोति, शब्दं न करोति वेत्यर्थः । कूजने इति चान्द्रकौमराः । शब्दमात्रे इति केचित् । अशब्दे इति कालापाः ।

१० । कुल ज बन्धुसंहत्योः ( कुल, भ्वा, प ) ज—कोलः कुलः ( षष्ठे इजुकत्वात् कप्रत्ययः ) ( बन्धुर्बन्धुभावः ) कोलति कुलीनः, सर्व्वेषां बन्धुः स्यादिति चतुर्भुजः । संहतीराशीकरणम् । केचित्तु संहतिस्थाने संस्थानं पठित्वा कोलति कुम्भान् कुलालः,

गणयतीत्यर्थ इत्याहुः। संस्त्यानं पठित्वा संस्त्यानमुपचय इति रामः। अन्ये तु बन्धुषु घातिषु वर्त्तमानोऽयमन्यत्रास्य न प्रयोगः, गडि गण्डे इतिवदित्याहुः।

११। क्षेल्ट चालगत्योः (क्षेल, भ्वा, प)
१२। केल्ट चालगत्योः (केल, भ्वा, प)
१३। स्खेल्ट चालगत्योः (स्खेल, भ्वा, प)
१४। खेल्ट चालगत्योः (खेल, भ्वा, प) आद्यो षकारयुक्तः। द्वौ कवर्गप्रथमादी। तृतीयो सकारयुक्त खादिः। शेषः कवर्गद्वितीयादिः। ङ—अचिक्षेलत्, अचिकेलत्, अचिस्खेलत्, अचिखेलत्। चालः कम्पः। चालः कैश्चिन्नमन्यते।

१५। खल् खल्नार्थे (खल, भ्वा, प) खलजार्थचालयर्थो। चालयेन स्खलनम्। खलति खलो धर्म्मात्।

१६। खोल्ट खोटने (खोल, भ्वा, प) ङ—अचुखोलत्। खोलति खञ्जः।

गल् भक्ष्ये गल् काङ्च स्रावे चल् ज गतौ मिश्रले चलम्।
विलासेक् चल् भृतौ चिलृश्च वासे चेल् चेल्लृ केल्टवत्।

१७। गल भक्षे (गल, भ्वा, प) गलति।

१८। गल काङ च स्रावे (गल, चु, आ) स्रावः क्षरणम्। क, ङ—गालयते रक्तं क्षतस्य। चकारात् गल च। स्वयं धाराकारा गलति जलधारा कुवलयादिति।

१८। चल ज गतौ (चल, भ्वा, प) ज—चालः चलः। चलति गौर्वनम्। चलमानोऽनिल इति ताच्छील्ये शतुः शानः।

मिश्रले। पूर्व्वेणान्वयः। चलधातुः कम्पने मानुबन्धः स्वादि-

त्यर्थः। चलति लता वायुना। अ—चलयति लतां वायुः। चलयन् भृङ्गरुचस्तवालकानिति रघुः। ८। ५३। चालयन् सकलां पृथ्वीमिति चसन्ताद्वालं करोतीति णौ ञलन्तम्। गत्यर्थस्य तु चालयति पृथिवीं यन्ता।

१८। चल श विलासे ( चल, तुदा, प ) श—चलती चलन्ती। विलासः क्रीड़नम्।

१८। क चल भृतौ ( चल, चु, प ) क—चालयति। दन्त्य-वकारादिरयमिति दुर्गसिंहजुमरौ। भृतिरिह पोषणम्।

१८। चिल श वासे ( चिल, तुदा, प ) वासः परिधानम्। श—चिलति वस्त्रं लोकः, परिदधातीत्यर्थः। चेलिता।

२०। चेल केल्लवत् } ( चेल, भ्वा, प )
२१। चेल्ल केल्लवत् } ( चेल्ल, भ्वा, प ) शेषो लद्दयान्तः। ङ—अचिचेलत्, अचिचेल्लत्। शेषस्य कदनुबन्धः कुडतेः कुटादित्वनिष्फलः, वेदेपूस्वारणभेदार्थो वा। शेषः कैश्चिन्न मन्यते। केल्लवच्चालगत्योः।

## चुल्ल हावकृतौ चिल्ल शैथिल्ये च जुलक् पिपि।

२२। चुल्ल हावकृतौ (चुल्ल, भ्वा, प) पञ्चमस्वरी लद्दयान्तः। एकोऽर्थः। कृतिग्रहणं स्पष्टार्थम्। चुल्लन्ति चारुनयनाश्च सह प्रियेणेति हलायुधः। ४७।

२३। चिल्ल शैथिल्ये च ( चिल्ल, भ्वा, प ) ह्रस्वी, लद्दयान्तः। चिल्लति। चेचिल्लयते। चकारात् हावकृतौ च।

२४। जुलक पिपि ( जुल, चु, प ) क—जोलयति। पिपि चूर्णीकरणे।

जलक् पिधाने जलज धान्ये ज्वल् जम् चलत्विषोः ।

२५ । जलक् पिधाने (जल, चु, प) क—जालयति चन्द्रं मेघः ।

२५ । जल ज धान्ये ( जल, भ्वा, प ) ज—जालः जलः । धीयते जीवोऽनेनेति धानं तस्य भावो धान्यं जीवनोपयोगिक्रिया । जलति लोकान् जलं, जीवयतीत्यर्थः । धीयते च्छाद्यतेऽनेनेति धानं तस्य भावो धान्यं आच्छादनक्रिया । जलति जालेन मत्स्यान् जालिक इति वा । गोविन्दभट्टस्तु धनस्य भावो धान्यं समृद्धिः । जलति धनी समृद्धः स्यादित्यर्थं इत्याह ।

२६ । ज्वल् जम् चलत्विषोः ( ज्वल, भ्वा, प ) वकारयुक्तः । ज—ज्वालः ज्वलः । म—प्रज्वलयति । मित्त्वेऽप्यस्य ज्वौ ज्वल ह्वल ह्मलेत्यादिना केवलस्य ह्रस्वविकल्पनात् सोपसर्गस्यैव नित्यं ह्रस्वः । ज्वलयति ज्वालयति । त्विट् दीप्तिः । ज्वलति वह्निः ।

टल् ट्वल्ज विक्लवे नील वर्णे ग्र् षिल् गहने णालज् । बन्धे तुल क्युन्मितौ तिल्ल तिल् गतौ तिल्कश्च स्निहि ।

२७ । टल् ज विक्लवे } ( टल, भ्वा, प )
२८ । ट्वल् ज विक्लवे } ( ट्वल, भ्वा, प ) ज—टालः टलः । ट्वालः ट्वलः । विक्लवो विह्वलीभावः ।

२९ । नील वर्णे ( नील, भ्वा, प ) वर्णे इह तथावर्णीभावस्तत्करणञ्च । नीलति पत्रं तमालस्य । नीलति सूत्रं तन्तुवायः ।

३० । ग्र षिल गहने ( षिल, तुदा, प ) ङस्वी । गहनं दुर्बोधः । ग्र—मिलति शास्त्रं जड़धीः, दुःखेन जानातीत्यर्थः ।

३१ । णाल ज बन्धे ( णाल, भ्वा, प ) ज—नालः नलः ।

नलति केयं लोकः, बध्नातीत्यर्थः । गन्धे इति केचित् । गन्धोऽदर्शनमिति गोविन्दभट्टः ।

३२ । तुल कि उन्मितौ ( तुल, चु, स्वा, प ) उन्मितिः परिमाणम् । कि—तोलयति तोलति काञ्चनं वणिक् । त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुमिति शङ्कराचार्यः । तुला करोतीति ण्यौ साध्यम् ।

३३ । तिल्ल गतौ } ( तिल्ल, भ्वा, प )

३४ । तिल गतौ } ( तिल, भ्वा, प ) आद्यो लद्वयान्तः । द्वौ कृस्निमौ । तिल्लति तेलति ।

३५ । तिल क श स्निहि ( तिल, चु, तु, प ) स्निह् स्निग्धीभावः । क—तेलयति । श—तिलति तैलेनाङ्गं । तितेल ।

तूल्काङ् पूरणे तूल्क निष्कर्षे तल् कि प्रतिष्ठितौ ।

३५ । तूलकङ पूरणे ( तूल, चु, आ ) षष्ठस्वरी । क, ङ—तूलयते ।

३५ । तूल्क निष्कर्षे ( तूल, चु, प ) षष्ठस्वरी । निष्कर्षं इयत्तापरिच्छेदः । क—तूलयति काञ्चनं वणिक् ।

३६ । तल कि प्रतिष्ठितौ ( तल, चु, भ्वा, प ) कि—तालयति तलति व्रतं, सम्पूर्णं स्यादित्यर्थः ।

दुल्कोत्क्षेपे दल्मि भेदे दलक् भेदेऽथ माल् पलक् ।
रक्षे पलज् पल्ल गतौ पेल्ल चाले च पिल् क्षुटि ।

३७ । दुल्कोत्क्षेपे ( दुल, चु, प ) दोलयति धूलिं वायुः ।

३८ । दलमि भेदे ( दल, भ्वा, प ) मि—दलयत्यष्टौ कुश-

स्याभत इति मुरारिः। दालयति। भेदो विदारणम्। दलति काष्ठं कुठारः। क्वचिद्दिटोर्णिभावे विकसने चायम्। श्रीमद्राघवबाहुदण्डविदलत्कोदण्डचण्डध्वनिरिति महानाटकम्। दरविदलितमल्लीवल्लिचञ्चत्परागेति जयदेवः।

३८। दलक् भेदे (दल, चु, प) क—दालयति गात्रं धाय्यः।

३९। पालक रक्षे } (पाल, चु, प)

४०। पलक रक्षे } (पल, चु, प) क—पालयति। क्रमिनैवेटचिह्नौ दीर्घियोऽपि पाठः कानुबन्धानामिदनुबन्धवत् णेरनित्यता बोधयति। तेन पालतीत्यपि सिद्धम्।

४०। पल ज गतौ } (पल, भ्वा, प)

४१। पल्ल गतौ } (पल्ल, भ्वा, प) शेषो लद्वयान्तः। ज—पालः पलः। पल्लति। (पलन्ति यद्दृहियो दिक्षु इति हला-युधः। २५९। पलायन्ते इत्यर्थः)।

४२। पेल चाले च (पेल, भ्वा, प) क्व—पपिपेलत्। पिपेलतुः। चालः कम्पः। चकारात् गतौ च।

४३। पिलक् क्षुदि (पिल, चु, प) क—पेलयति। क्षुदि प्रेरणे।

## पील रोधे पुलघ पुलज महत्त्वे पुलक उच्छ्रितौ।

४४। पील रोधे (पील, भ्वा, प) रोधः क्रियानिरोधः जडीभाव इत्यर्थः। पीलति पशुः।

४५। पुल घ महत्त्वे } (पुल, तुदा, प)

४५। पुल ज महत्त्वे } (पुल, भ्वा, प) द्वौ पञ्चमस्वरिणौ। घ—पुलति पुलिनं शरदि, महत् स्यादित्यर्थः। पोलिता। ज—पोलः पुलः। पोलति।

४५ । पुल क उच्छ्रितौ (पुल, चु, प) पञ्चमस्वरी । उच्छ्रिति-रुन्नीभावः । क—पोलयति पर्व्वतः ।

## पूलुकि स्यात् संहतौ फुल्ल विकासे ञि फला भिदि ।

४६ । पूल कि स्यात् संहतौ (पूल, चु, भ्वा, प) षष्ठस्वरी । कि—पूलयति पूलति । संहतोराशीकरणम् ।

४७ । फुल्ल विकासे (फुल्ल, भ्वा, प) फ्लस्वी लह्वयान्तः । विकास इति कस ञ गताविति रम्यान्तस्य घञि रूपम्, विपूर्व्वत्वेन विकसनमित्यर्थः । फुल्लति मल्लीकलिका ।

४८ । ञि फला भिदि (फल, भ्वा, प) ञि—फुल्तोऽसि । आ—फलितं फुल्तं तेन, प्रफलितः प्रफुल्तः सः । फलति काष्ठं कुठारः ।

## फल् निष्पत्तौ फल् ज गतौ फेल्ट च क् बल्ल जीवने ।

४८ । फल निष्पत्तौ (फल, भ्वा, प) इह नवशुककोमला मणीनां रविकरसम्वलिताः फलन्ति भास इति भारविः । ५ । ३८ । (निष्पद्यन्ते इत्यर्थः) । निष्पादनेऽपि वाल्मीकिः—फलति स्म यस्य चरितस्तोत्राय दिव्या गिर इति ।

४८ । फल ज गतौ (फल, भ्वा, ज्वलादि, प) ज—फालः फलः । फलति ।

४९ । फेल्ट च (फेल, भ्वा, प) च—अपिफेलत् । पिफेलतुः । चकारात्गतौ ।

५० । क बल्ल जीवने (बल, चु, प) क, म—बलयति । (जीवनं प्राणनम्) ।

**वल्ज धान्यावरोधे च वल्ङ दाने वधे ङ् वलक्। च निरूपे विल कश भेदने बुल्क मज्जने।**

५०। वलज धान्यावरोधे च (वल, भ्वा, प) ज—वालः वलः। घनस्य भावो धान्यं समृद्धिः, तस्यावरोधः प्रतिबन्धः। वलति पुण्यहीनं विधिः, पुण्यहीनस्य समृद्धिं प्रतिघ्नातीत्यर्थः। अयमर्थोऽन्यैर्न मन्यते। चकाराज्जीवने च। वलत्यन्नेन लोकः।

५०। वलङ दाने वधे (वल, भ्वा, आ) ङ—वलते।

५०। ङ वल क च निरूपे (वल, चु, आ) ङ, क—वालयते धर्मं धीरः। अयं कैश्चिन्न मन्यते। चकारात् वलङ च। (निरूपणार्थकः)।

५१। विल कश भेदने (विल, चु, तुदा, प) तृतीयस्वरी। क—वेलयति। श—विलति।

५२। बुल्क मज्जने (बुल, चु, प) पञ्चमस्वरी। क—बोलयति प्रस्तरः पयसि। तालव्यवर्गादिरयमिति केचित्। चोलः वस्त्रम्। निजा चोघा वाघो निचुलयति चोलेन निभृतमिति प्रङ्कराचार्य्यः। अत्र निचुलयतीति णेरनित्यतया कृगृह्मामीति क प्रत्यये निचुलां करोतीति णौ साध्यम्। मग्ना करोतीत्यर्थः। तालव्यवर्गाद्यादिपचे उकारोऽप्ययम्।

**भलङ् भल्कङ् भिल्क वादिवद्भल्लङ तु भलङवत्।**

५३। भल ङ वादिवत् (भल, भ्वा, आ)
५३। भल क ङ वादिवत् (भल, चु, आ)
५४। भिल क वादिवत् (भिल, चु, प) ङ—भलते।

क, ङ—भालयते। घ—भेलयति। वादिवदिति—(एते त्रयो धातवः पूर्व्वोक्ता मकारादयः मलङ, ङ बमक, बिलक घ इतिवदर्थ-बोधका इत्यर्थः। ततश्चैते धातव इत्थं पठनीयाः। यथा—भलङ दानवधनिरूपणेषु, भलक ङ निरूपणे, भिलक भेदने इत्यर्थः।

५५। भल्ल ङ ह भलङवत् (भल्ल, भ्वा, आ) लद्वयान्तः। ङ—भल्लते। भलङवत् दानवधनिरूपणेष्वित्यर्थः।

मल् मल्लङ धृतौ मील्ल निमेषे मिल शञ् श्लिषि।

५६। मल ङ धृतौ } (मल, भ्वा, आ)
५७। मल्ल ङ धृतौ } (मल्ल, भ्वा, आ) शेषोलद्वयान्तः।
ङ—मलते, मल्लते। (धृतिर्धारणम्)

५८। मील्ल निमेषे (मील, भ्वा, प) चतुर्थस्वरी। ष—अमिमीलत्। मीलति चक्षुः, पक्ष्मभिराहतं स्यादित्यर्थः।

५९। मिल श ञ श्लिषि (मिल, तुदा, उ) श्लिषि सम्बन्धी-भावे। श, ञ—मिलति मिलते लता दृश्येण। अयं विभाषया कुटादिरिति कुलचन्द्रः। तेन मिलिष्यन्ति। महापातकिनः पञ्च मिलितव्यं न तैः सहेति। एवं व्यालनिलयमिलनेन गरल-मिव कलयति मलयसमीरमिति जयदेवः।

मुल् मूलक् रोपणे मूलञ् प्रतिष्ठायां ललक् ङ ह।
ईप्सायां वेल्ल् वेल् वेह्ल चाले वलमि वल्लङ।
स्तृतौ विलश् च शल ङ चलने च शलञ् गतौ।

६०। मुलक रोपणे } (मुल, चु, प)
६१। मूलक रोपणे } (मूल, चु, प) द्वौ क्रमात्

पञ्चमषष्ठस्वरिणौ। रोपणमारोपणम्। क—मोलयति, मूलयति तरुं लोकः। गोविन्दभट्टस्तु रोहणेति पठित्वा रोहणं जन्मेति व्याख्याति।

६१। मूल ञ प्रतिष्ठायाम् ( मूल, भ्वा, उ ) पवर्गशेषादिः षष्ठस्वरी। प्रतिष्ठा स्थितिरिति गोविन्दभट्टः। मूलति मूलते वृक्षः। अयं परस्मैपदीति केचित्।

६२। लल ङ तु ईप्सायाम् ( लल, चु, आ ) क, ङ— लालयते। ईप्सा आप्तुमिच्छा।

६३। वेल्ल चाले　( वेल्ल, भ्वा, प )
६४। वेल चाले　( वेल, भ्वा, प )
६५। वेह्ल चाले　( वेह्ल, भ्वा, प ) त्रय एकादश-स्वरिणः। आद्यो लद्वयान्तः, शेष उष्मचतुर्थोपधः। ङ—अविवेल्लत् अविवेलत् अविवेह्लत्। आद्यन्तयोः लृदनुबन्धः कृतेः कुटादिपाठवन्निष्फलः, वेदेपूच्चारणभेदार्थो वा। चालः सञ्चलनम्। चलेल्लङ्कुलबल्लिकल्ल्याभनत्कारः ख्यातं वार्यतामिति। एते गता-वित्येके। शेषः कैश्चिन्न मन्यते।

६६। वल मिङ स्तृतौ　( वल, भ्वा, आ )
६७। वल्ल ङ स्तृतौ　( वल्ल,भ्वा, आ ) शेषो लद्वयान्तः। स्तृतिरिह संवरणम्। मि—वलयति वालयति। ङ—वलते वल्लते धनं लोकः, संवृणोतीत्यर्थः। ( कुवलयं वलयन् मरुदा ववाविति माघः। ६। ३।

६८। विलश च ( विल, तुदा, प ) तृतीयस्वरी। चकारात् स्तृतौ। स्तृतिराच्छादनम्। श—विलति वस्त्रं लोकः, परिदधातीत्यर्थः। वेलिता। अयं कैश्चिन्न मन्यते।

६६ । श्वल ङ चलने च (श्वल, भ्वा, आ) ङ—श्वलते । चलनं कम्पः । चकारात् स्तुतौ, स्तुतिरिह संवरणम् ।

६८ । श्वल ञ गतौ ( श्वल, भ्वा, प ) ञ—श्वालः श्वलः ।

श्वल् ङक् श्लाघे श्वल्ल स्वल्ल ख्वल् वेगे ङ् श्वाल्ह कत्थने ।

६८ । श्वल ङक श्लाघे ( श्वल, चु, आ ) ङ, क—श्वालयते पण्डितं धीरः ।

६८ । श्वल वेगे ( श्वल, भ्वा, प )
७० । स्वल्ल वेगे ( स्वल्ल, भ्वा, प )
७१ । ख्वल वेगे ( ख्वल, भ्वा, प ) शेषौ द्वौ वकारयुक्तादी । मध्यमो लहयान्तः । श्वलति स्वल्लति ख्वलति । वेगः शीघ्रगतिः ।

७२ । ङ श्वाल्ह कत्थने ( श्वाल, भ्वा, आ ) कत्थनं प्रशंसा । ङ—श्वालते गुणिनं गुणी । ङ—अशश्वालत् ।

षिल शुञ्छे ञि शील स्यात् समाधौ श्मील् निमेषणे ।

७३ । षिल य उञ्छे ( षिल, तुदा, प ) तृतीयस्वरी । उञ्छ उद्धृतशस्यशेषाहरणम् । य—षिलति धान्यं दीनः । शेलिता ।

७४ । ञि शील स्यात् समाधौ ( शील, भ्वा, प ) चतुर्थस्वरी । ञि—शीलितोऽस्ति । समाधिः सेवानुभावनं प्रवृत्तिर्वा । यः शीलति सदा धर्ममिति हलायुधः । २४५ ।

७५ । श्मील निमेषणे ( श्मील, भ्वा, प ) चोष्मवर्गयोगयुक्तः । श्मीलति चक्षुः, चक्षुर्भिरावृतं स्यादित्यर्थः ।

## मूल् रुजायां शेल् षेल् केलृवत् ठलज स्थितौ ।

७६ । मूल रुजायाम् ( मूल, भ्वा, प ) यवस्वरी । मूलति लोकं रोगः ।

७७ । शेल् केलृवत् } ( शेल, भ्वा, प )
७८ । षेल् केलृवत् } ( षेल, भ्वा, प ) द्वौ क्रमात्तालव्य-मूर्द्धन्यादी । अ—पशिशेलत्, पषिषेलत् । केलृवत् चालगत्यो-रित्यर्थः ।

७९ । ठलज स्थितौ ( ठल, भ्वा, प ) ज—ठाल: ठलः । ठलति लोकस्तिष्ठतीत्यर्थः । तिठालयिषति ।

## पिल् शुञ्छे पल् गतौ स्थलज स्थाने स्खलञि चये चले ।

८० । पिल श उञ्छे ( पिल, तुदा, प ) उञ्छ उद्धृतधान्य-शेषापकरणम् । श—पिलति धान्यं दीनः । पेलिता ।

८१ । पल गतौ ( पल, भ्वा, प ) मूर्द्धन्यादिः । षलति । सिषालयिषति ।

८२ । स्थल ज स्थाने ( स्थल, भ्वा, प ) दन्त्यादिः । ज—स्थाल: स्थलः । तिस्थालयिषति । अयं नास्तीति केचित् ।

८३ । स्खलञि चये चले ( स्खल, भ्वा, प ) ञि—स्खलयति वचनं ते सर्व्वथा सुभ्रु खेदमिति मालत्याम् । स्खालयति । चस्खाल । चयः सञ्चयः । स्खलति पुष्पं मालिकः, सञ्चिनो-तीत्यर्थः । चलः स्खलनम् । स्खलति पतं टचस्य । दृढः प्रेमा भ्रमः सदसिरिव सन्धिं न लभते लभेतापि प्रायः स्खलति खलु यत्नैरपि क्षत इति ।

स्फुल् ग्रि स्फूर्त्तौ च स्खल श चाले चमील् निमेषणे ।

८४ । स्फुल ग्रि स्फूर्त्तौ च ( स्फुल, तुदा, प ) ग्रि—स्फुलति, अस्फुलीत्, पुस्फोल । स्फूर्त्तिः प्रकाशः । चकारात् चयचलयोश्च ।

८५ । स्खल श चाले च ( स्खल तुदा, प ) आद्यस्वरी । श—स्खलती स्खलन्ती । पस्खाल । पिस्खलिषति । पास्खल्यते । सुरद्विपास्फालनकर्कशाङ्गुलाविति रघुः । ३ । ५५ । चालश्चलनम् । चकरात् स्फूर्त्तौ च । अयमपि पञ्चमस्वरीति श्रमो ध्येयः । तथात्वे कामधेनौ स्खलती स्खलन्तीत्युदाहरणासङ्गतेः । न च तत्रापि पञ्चमस्वर एवेति वाच्य तर्हि गुधाद्यानिनां पुलतिप्रभृतीनामिव मितादेरेवोदाहर्तुमुचितत्वात् । यत्तु अस्मिन् सत्यपि स्फुलतेरेव घञि स्फाल इति निपातनं तत् स्फोल इत्यनिष्टपदनिवारणार्थम्, अस्य सर्वसम्मतत्वाभावाच्च । अतएव स्खल इत्येके इति रमानाथः ।

८६ । मील निमेषणे ( मील, भ्वा, प ) ओष्ठवर्गशेषयुक्तः । मीलति चक्षुः, पद्माभिरावृतं स्यादित्यर्थः ।

सेलृ केले क्ष्वल क्ष्मल्म चाले ऊलच् हृतौ छर्दि ।

८७ । सेलृ केले ( सेल, भ्वा, प ) लृ—असिसेलत् । केले चालगत्योः ।

८८ । क्ष्वलम चाले } ( क्ष्वल, भ्वा, प )

८९ । क्ष्मलम चाले } ( क्ष्मल, भ्वा, प ) आद्यो वकारयुक्तः शेष ओष्ठवर्गशेषयुक्तः । म—प्रक्ष्वलयति । क्ष्वलयति क्ष्वालयति । क्ष्मलयति क्ष्मालयति (क्ष्वलक्ष्वल क्ष्मलेति वा क्रमः) चालश्चलनम् ।

९० । ऊल च हृतौ छर्दि ( ऊल, भ्वा, प ) च—चोलः ऊलः । छर्दीति छर्दि अ संहताविष्यस्य रूपं, संहरणे इत्यर्थः ।

छिलश्छावकृतौ छलज विलेखे ला नवतिस्त्रिभिः ।

८१ । छिल श छावकृतौ ( छिल, तुदा, प ) टतीयस्वरी । एकोऽर्थः । श—छिलति तदयवा तक्ष्णः ।

८२ । छल ज विलेखे ( छल, भ्वा, प ) ज—छालः छलः । छलति भूमिं कृषकः ।

ला नवतिस्त्रिभिः । ( लान्तास्त्रिनवतिसंख्यकाः ) । अत्र संख्यायामेकोनाशीतीति विस्मयम् ।

---

## वान्तवर्गः ।

अव रक्षे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ ।
प्राप्तौ श्लेषेऽर्थने वेशे भावे दृष्टौ ग्रहे वधे ।
सामर्थ्येऽवगमे कामे वृतावर्व वधे द्रुवि ।
व्याप्तिप्रीणनयोरुर्वी हिंसे नु क्षवि क्षतौ चङ ।
केष्ट सेवे कर्व दर्पे क्षाव षङ भये क्षिव ।
क्षिव्यु ष्ठीव निरासे ष्ठीव् कव क्लीष्टङ वान्तवत् ।

१ । अव रक्षे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ प्राप्तौ श्लेषेऽर्थने वेशे भावे दृष्टौ ग्रहे वधे सामर्थ्येऽवगमे कामे वृतौ (अव, भ्वा, प ) ऊनविंशतिरर्थाः । कान्तिरिच्छा, कमुङ स्पृहीति योगार्थत्वात् । काम इति अन्ताद्यत्यन्तेरिच्छोत्पादना इति भेदः । द्युतिः शोभा, श्रुतिराकर्णनम्, श्लेष आलिङ्गनम्, अर्थनं याच्ञा, वेशः प्रवेशः, भावः सत्ता, ग्रह आदानम्, सामर्थ्यं शक्तिः,

अवगमो ज्ञानम्, इतिधर्व्वणं, रचणे प्रसिद्धोऽयम् । प्रीतौ यथा न मामवति सद्दीपा रत्नसूरपि मेदिनीति रघुः । १ । ६५ । केचित्तु ग्रहणस्थाने दहनं पठन्ति (१) । अवति ।

२ । धर्व्व वधे ( धर्व्व, भ्वा, प ) धर्व्वति ।

३ । हुवि व्याप्तिप्रीणनयोः ( हुन्व, भ्वा, प ) क्रमादिः । ह्—हुन्व्यते । इत्यवकारपरत्वान्नानुखारः । प्रीणनं केचिन्न मन्यते ।

४ । उर्व्वी हिंसे ( उर्व्व, भ्वा, प ) क्रमादिः । व्येनघ्नतयीति दीर्घे ऊर्व्वति । क्विपि राच्छोर्लोप इति वलोपे ऊः उरौ उरः । एवं सर्व्वत्र । इं—ऊर्णः ।

५ । न क्षवि क्षतौ च ( क्षण्व, भ्वा, प ) सप्तमस्वरी । न—क्षणोति (क्षविधिव्योः क्षधीत्रौ ) ह्—क्षण्व्यते । चकाराद्धिंसे च ।

६ । ङ केव सेवे ( केव, भ्वा, भ्रा ) ङ—केवते । ङ—अचिकेवत् ।

७ । कर्व्व दर्पे ( कर्व्व, भ्वा, प ) कर्व्वति ।

८ । क्ष्वघ्न ङ भये ( क्ष्व, भ्वा, भ्रा) अन्तःस्थातृतीययुक्तः । प—क्ष्वा । म—क्ष्वयति । ङ—क्ष्वते । विक्ष्वन्ति दिवि प्रहा इति तु पचादित्वादनि विक्ष्वा इवाचरन्तीति क्वौ साध्यम् ।

९ । चिवु निरासे ( चिव, भ्वा, प )
९ । चिव्यु निरासे ( चिव, दिवा, प )
१० । चीव निरासे ( चीव, भ्वा, प ) द्वाथादौ क्रस्विनौ,

(१) केचित्तु स्तुतिभागमहकामष्टतीर्ने पठित्वा क्रियात्रयरदहनभावानाङ्गिरिमपि पाठ ।

ष्ठेपो दीर्घौ। निरास इह फुत्कार इति भट्टमल्लः, मुखेन श्लेष्मादेर्वमनमिति केचित्। पृथक्पाठात् पूर्व्वौ भ्वादिः। ष्ठेवति। ड—ष्ठेवित्वा ष्ठ्यूत्वा। य—ष्ठीव्यति। उ—ष्ठेवित्वा ष्ठ्यूत्वा। ष्ठीवत्यन्नं लोकः। (फुत्करोतीत्यर्थः)

१०। ष्ठीवृङ् वान्तवत् (ष्ठीव, भ्वा, आ)
११। कवृङ् वान्तवत् (कव, भ्वा, आ)
१२। क्लीवृङ् वान्तवत् (क्लीव, भ्वा, आ) ङ—अचिष्ठीवत्, अचकावत्, अचिक्लीवत्। ङ—ष्ठीवते, (ष्ठीवते दर्पगर्वित इति हलायुधः। ८५) कवते, क्लीवते। वान्तवदिति ष्ठीवृङ् दर्पे, कवृङ् स्तुतौ वर्णे, क्लीवृङ् अधार्ष्ट्ये इत्यर्थः। (ओष्ठ्यवकारान्तानामेतत्सजातीयानां त्रयाणामिवार्थो एषामपीत्यर्थः)।

**खवग् खच्वत् खर्व गर्व्वे खेव् गेव् ग्लेवृङ् सेव ई।**
**गुर्वुद्यमे गर्व मदे चोटञ ग्रहसंहतौ।**

१३। खव श खचवत् (खव, क्र्या, प) खचवदिति भूति-पूत्योरुत्पत्तौ। श—खौनाति राजा, समृद्धः स्यादित्यर्थः। ख्नोःश्नुटाविष्यूट्, आटूटौभिः। क्विपि खौः खावौ खावः। क्तौ खौतिः। केचित्तु प्वादित्वात् ह्रस्वे खुनातीत्याहुः। धातु-पारायणस्तु खव्नातीत्युदाहरन्ति।

१४। खर्व गर्वे (खर्व, भ्वा, प) खर्वति।
१५। खेवृङ् सेवे (खेव, भ्वा, आ)
१६। गेवृङ् सेवे (गेव, भ्वा, आ)
१७। ग्लेवृङ् सेवे (ग्लेव, भ्वा, आ) शेषोऽन्तःस्थादितीय-

युक्तः। ङ—अचिखेवत्, अजिगेवत्, अजिग्लेवत्। ङ—खेवते, गेवते, ग्लेवते।

१८। ई गुर्वैद्यमे (गुर्व, भ्वा, प) क्रसी। गू गुरौ गुरः। ई—गूर्णः। गूर्वति पत्तिः खड्गम्।

१६। गर्व मदे (गर्व, भ्वा, प) मद दृप्ताहङ्कारः। नीचो गर्व्वति सम्पदा।

२०। चीवज ग्रहसंहतौ (चीव, भ्वा, उ) चतुर्थस्वरी। ङ—अचिचीवत्। ज—चीवति चीवते वल्कलं भिक्षुः, गृह्णाति परिदधाति वेत्यर्थः। (अर्थद्वयं, ग्रहो ग्रहणं, संहतिराच्छादनम्)।

चीवञ् दीप्तौ चर्व कितु भक्षे जुर्वी वधे जिवि।
प्रीणने जीवङ् प्राणे णिवि सेकेऽथ नीवतु।
स्थौल्ये तीव च तुर्वी तु हिंसे तेष्टङ देवने।

२०। चीवञ् दीप्तौ (चीव, चु, प) चतुर्थस्वरी। क्य—चीवयति।

२१। चर्व कितु भक्षे (चर्व, चु, भ्वा, प) कि—चर्वयति चर्वति तण्डुलान् बालः।

२२। जुर्वी वधे (जुर्व, भ्वा, प) क्रसी। क्विपि जूः जुरौ जुरः। ई—जूर्णः।

२३। जिवि प्रीणने (जिन्व, भ्वा, प) क्रसी। इ—जिन्व्यते जिन्वति लोकः पितरम्।

२४। जीव ङ प्राणे (जीव, भ्वा, प) चतुर्थस्वरी। ङ—अजीजिवत् अजिजीवत्। प्राणः प्राणधारणम्। जीवति लोकः।

२५। णिवि सेके (णिन्व, भ्वा, प) क्रसी। इ—निन्व्यते। निन्वति।

२६। अथ जीव तु स्थौल्ये (जीव, भ्वा, प) चतुर्थस्वरी। जीवति लोकः स्थूलः स्यादित्यर्थः।

२७। तीव च (तीव, भ्वा, प) चतुर्थस्वरी। चकारात् स्थौल्ये।

२८। तुर्वी तु हिंसे (तुर्व, भ्वा, प) क्रसी। क्विपि तूः तुरौ तुरः। ई—तूर्णः।

२९। तेवृङ देवने (तेव, भ्वा, प) देवनमिह क्रीड़ा। अ—अतितेवत्। ङ—तेवते कन्दुकैर्नित्यमिति। देवनमिह रोदनमिति भट्टमल्लः।

युर्व दुर्वी वधे दिव्यु जिगीषेच्छापणिद्युतौ।
क्रीड़ागत्योर्दिवि प्रीतौ दिव काङ् परिकूजने।

३०। युर्व वधे } (युर्व, भ्वा, प)
३१। दुर्वी वधे } (दुर्व, भ्वा, प) द्वौ क्रसिनौ। क्विपि यूः युरौ युरः, दूः दुरौ दुरः। ई—यूर्नः दूर्णः।

३२। दिव्यु जिगीषेच्छापणिद्युतौ क्रीड़ागत्यो (दिव, दिवा, प) य—दीव्यति। उ—देवित्वा द्यूत्वा। दीव्यमानं पितान् वायानिति भट्टौ (५। ८१) तान्क्षोल्ये शतुः शानः। पणिर्व्यवहारः स्तुतिश्च। व्यवहारस्तु क्रयविक्रयरूपः। द्युतावेवाकर्मकः। क्रीड़ायान्तु दीव्यतेः करणस्य नित्यं कर्मत्वम्, तत्र तृतीया विभक्तिरेव विभाव्यते इति साम्प्रदायिकाः। तेन पाशा दीव्यन्ते छात्रैर्येति कर्मणि प्रत्ययः स्यात्। अक्षैर्दीव्यते छात्रेणेति भावे

प्रत्ययो न स्यात् (१)। अचीदेवयते छात्रेण गुरुरित्यत्र अण्यन्तकर्त्तुः कर्म्मत्वं न स्यात्। तेनादुद्युपयद्रामं च्छगेण च्छगलोचनेति भट्टौ तु, तेनेति करणं दुद्यूपेरेव न तु दीव्यतेः। तेनाकर्म्मकत्वात् राममित्यण्यन्तकर्त्तुः कर्म्मत्वम्।

३१। दिवि प्रीतौ (दिन्व, भ्वा, प) इ—दिन्वति। प्रीतिरिह प्रीतीकरणम्। दिन्वति लोकः पितरम्।

३२। दिव कङ परिकूजने ( दिव, चु, आ ) क, ङ—परिदेवयते कश्चित्तस्य राष्ट्रे न दुःखित इति हलायुधः। ६०।

## क दिवर्द्दे देदङ तु देवने दृव् धवि व्रजे।

३२। क दिवर्द्दे ( दिव, चु, प ) क—देवयति। अर्द्द इह पीडनमिति मैत्रेयः। याचनं गमनं वेति रमानाथः।

३३। देदृ ङ तु देवने ( देव, भ्वा, आ ) देवनमिह क्रीडा। ऋ—अदिदेवत्। ङ—देवते कन्दुकैर्नित्यमिति हलायुधः। ६०। देवनमिह रोदनमिति भट्टमल्लः।

३४। दृवि व्रजे } ( दृन्व, भ्वा, प )
३५। धवि व्रजे } ( धन्व, भ्वा, प ) इ—दृन्वति, धन्वति, व्रजो गतिः।

## धिविन् प्रीतौ गतौ धुर्वी हिंसे धावुञ् जवे स्रुजि।

३६। धिविन् प्रीतौ गतौ ( धिन्व, स्वा, प ) प्रीतिरिह प्रीती-

(१) कर्म्मणि विद्यमानेऽपि भावे तत्प्रत्ययः स्यादिति भाष्यादीनां मतम्। श्रीमदाम्नु मत व्याख्यातप्रत्ययमपीच्छन्ति तेन कृष्यर्थोदिधातूनां कर्म्मणि प्रयोगमाह भाह्न कर्ष्यते पुष्पैरित्याद्युदाहृतवन्त।

करणम् । णू—धिन्व्यते । न—धिनोति ज्येन हिरण्यरेतसमिति भारविः । १ । २२ । गतिः कैश्चिन्न मन्यते ।

३७ । धुर्वी हिंसे ( धुर्व, भ्वा, प ) ऊदित्वौ । क्विपि धूः धुरौ धुरः । ईू—धूर्णः । क्तिवेव वाच्ये धूर्त इति मनीषादित्वान्निपातः ।

३८ । धावु ञ जवे चलि ( धाव, भ्वा, उ ) उ—धावित्वा धौत्वा । ञ—धावति धावते । जवः शीघ्रगतिः । यस्य रोषाहृष्णा इहिधावति यत्र आलये । पापपापिः पुनस्तत्र यमदूतोऽपि धावतीति चलायुधः । १२८ । चट् शुद्धीभावः शुद्धीकरणञ्च । धावति ताम्रमन्लेन, शुध्यतीत्यर्थः । इधापाङ्क्षितचक्षुः सुग्रीवस्य विधौमन्व इति भट्टिः । ( ४ ) ५० । अस्य जवे निष्ठाया अप्रयोगः । ( तच्च धावितेति पदं तत् धावोधावनं स जातोऽस्य इति वाक्ये इत-प्रत्ययसाधितम् ) ।

## स्रवङ् गत्यां स्रेव पेष्ट ङ सेवे पिवि सेचने ।

३९ । स्रव ङ गत्याम् ( स्रव, भ्वा, आ ) अन्तःस्थान्तीयद्वन्द्वः । ङ—स्रवते ।

४० । स्रेष्ट ङ सेवे } ( स्रेव, भ्वा, आ )
४१ । पेष्ट ङ सेवे } ( पेव, भ्वा, आ ) आद्योऽन्तःस्थान्तीय-सन्त्यः । अ—अपिस्रेवत्, अपिपेवत् । ङ—स्रेवते, पेवते ।

४२ । पिवि सेचने ( पिन्व, भ्वा, प ) इतीयम्पञ्चो । णू—पिन्व्यते ।

## पीव स्थौल्ये पर्व पुर्व पूर्त्तौ पूर्वक् निकेतने ।

४३ । पीव स्थौल्ये ( पीव, भ्वा, प ) अन्तर्यस्थरी । पीवति लोकः, स्थूलःस्यादित्यर्थः ।

४४ । पर्व पूर्त्तौ } (पर्व, भ्वा, प)

४५ । पुर्व पूर्त्तौ } (पुर्व, भ्वा, प) शेषः पञ्चमस्वरी । पूः पुरौ पुरः । पर्वति, पुर्वति पयसा कुम्भं चेटी ।

४६ । पूर्वक् निकेतने (पूर्व, चु, प) षष्ठस्वरी । निकेतनमिह निमन्त्रणं निवासो वा । क—पूर्व्वयति द्विजान् भोजनाय स्टही, पूर्व्वयति तीर्थे साधुः ।

भर्व हिंसे मीव पीवे मर्व पूर्त्तौ गतौ मिवि ।
सेके मुर्वी मव नद्दे मेव क्लेट्ङ सेवने ।

४७ । भर्व हिंसे (भर्व, भ्वा, प) रेफोपधः । भर्वति ।

४८ । मीव पीवे (मीव, भ्वा, प) चतुर्थस्वरी । मीवति । पीवः स्थूलीभावः ।

४९ । मर्व पूर्त्तौ गतौ (मर्व, भ्वा, प) मर्वति पयसा कुम्भं चेटी ।

५० । मिवि सेके (मिन्व, भ्वा, प) इ—मिन्वते । मिन्वति ।

५१ । मुर्वी नद्दे } (मुर्व, भ्वा, प)

५२ । मव नद्दे } (मव, भ्वा, प) आद्यः पञ्चमस्वरी । मूः मुरौ मुरः । ई—मूर्णः । नद्दो बन्धनम् । मवति चौरं लोकः ।

५३ । मेट ङ सेवने } (मेव, भ्वा, आ)

५४ । क्लेट ङ सेवने } (क्लेव, भ्वा, आ) शेषोऽन्तःस्थाततीययुक्तः । ङ—अमिमेवत्, अचिक्लेवत् । ङ—मेवते, क्लेवते ।

रीट्ङ् चीवे रेट्ङ तु लतौ रव् रिवि च व्रजे ।

* ५५ । रीट ञ चीवे (रीव, भ्वा, उ) ङ—अरिरीवत् । ञ—रीवति रीवते । चीवे—ग्रहणसंवरणयोः ।

५६ । रेट ङ तु गतौ (रेव, भ्वा, आ) प्लुतिः प्लवेन गमनम् । क—चरिरेवत् । ङ—रेवते कपिः, उत्प्लुत्य गच्छतीत्यर्थः ।

५७ । रवि व्रजे } ( रण्व, भ्वा, प )

५८ । रिवि च व्रजे } ( रिण्व, भ्वा, प ) द्वौ रेफादी । इ—रण्वति, रिण्वति । चकारात् रेट ङ च (व्रजार्थकः) व्रजो गतिः ।

धाव् विकारे च धर्व् हिंसे षिव्यु तन्तुततौ ष्ठिवु ।
ष्ठिव्य ष्ठीव निरासेऽथ स्यात् षेट्टङ ञ सेवने ।

५९ । धाव विकारे च ( धव, भ्वा, प ) धवति चित्तं कामः । चकाराद्व्रजे च ।

६० । धर्व हिंसे ( धर्व, भ्वा, प ) तालव्यादिः । धर्वति ।

६१ । षिव्यु तन्तुततौ ( षिव, दिवा, प ) मूर्द्धन्यादिः । तन्तुततिस्तन्तुभिर्ग्रन्थनम् । य—सीव्यति वस्त्रं सौचिकः । उ—सेवित्वा, स्यूत्वा ।

६२ । ष्ठिवु निरासे } ( ष्ठिव, भ्वा, प )

६३ । ष्ठिव्य निरासे } ( ष्ठिव, दिवा, प )

६४ । ष्ठीव निरासे } ( ष्ठीव, भ्वा, प ) द्वावाद्यौ ह्रस्विनौ, शेषो दीर्घी । उ—ष्ठेवित्वा, ष्ठ्यूत्वा । ष्ठीवति ( ष्ठिवुक्लमाचमोऽपि षे इति दीर्घः) । य—ष्ठीव्यति । आद्यस्य क्त्वावेट्त्वात्ष्ठेमृशीभ्योत्यनेन इमो निषेधे निष्ठायां ष्यूतः, मध्यमस्य तु ष्ठिवित इति भेदः । ष्ठिवुक्लमाचमोऽपीत्यनेन यस्य ह्रस्विनो दीर्घः क्रियते, ष्ठीविष्यति ष्ठीवितश्चमित्यादिदर्शनात् स एवायं दीर्घी पठितो न तु तद्भिन्नो धातुः । तेन ह्रस्विनो ग्रहणेनैवास्मिन् गृहीते भ्वाद्यादिषा इत्यनेन मूर्द्धन्यषस्य दन्त्यसो न स्यात्, एवं ष्ठिवजाद्योरित्यादिना खेष्ठ-

कारस्य तकारे तिष्ठीव टिष्ठीव इत्याद्यपि स्यात्। यत्तु अस्मिन् सत्यपि अनटि ष्ठीवनमिति निपातनं, तदस्य सर्व्वसम्मतत्वाभावात्। निरास इव थुत्कार इति भट्टमल्लः। मुखेन श्लेष्मादेर्व्वमनमिति केचित्। ष्ठीवत्यन्नं लोकः। ष्ठीवामि शुष्कं चुलताम्बिकल्पमिति।

६३। अथ स्यात् षेटङ ञ सेवने (षेव, भ्वा, उ) अ—असिषेवत्। ञ—सेवति सेवते। ङ—सेवते। (अस्य ञानुबन्धित्वं परस्मैपदित्वे मतभेदज्ञापनार्थम्)। सेवनमाराधनमुपभोग आश्रयणञ्च। विष्णुं सेवते, सुखं सेवते, तीर्थं सेवते साधुः। अन्येत्वस्मात् परस्मैपदमनन्यमाना "नीचं सद्गुणमपि सेवति नीच एवेति" "स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिन" इत्यादौ गणकृतानित्यत्वमाहुः। वक्ष्यमाणे दन्त्यादावप्येवं व्याख्येयम्।

**पान्त्व सान्त्वक् सामयोगे ष्विव्यु शोषे गतौ ञ ङ।**
**सेट सेवे ष्टिवि प्रीतौ वान्ता इत्यष्टषष्टिकाः।**

६४। पान्त्वक सामयोगे } (पान्त्व, चु, प)
६५। सान्त्वक सामयोगे } (सान्त्व, चु, प) द्वौ क्रमान्मूर्द्धन्यदन्त्यादी। सिपान्त्वयिषति, सिसान्त्वयिषति। क—सान्त्वयति शोकार्त्तं दयालुः।

६६। ष्विव्यु शोषे गतौ (ष्विव, दिवा, प) रेफयुक्तसकारादिस्तृतीयस्वरी। य—ष्वीव्यति। उ—स्वेवित्वा स्यूत्वा। सिष्वेव।

६७। ञ ङ षेट सेवे (सेव, भ्वा, उ) ञ—सेवति सेवते। अ—असिसेवत्।

६८। हिवि प्रीतौ (हिन्व, भ्वा, प) इ—हिन्वति। प्रीतिरिह प्रीतीकरणम्। हिन्वति लोकः पितरम्।

धान्ता इत्यष्टषष्टिकाः।

---

## शान्तवर्गः।

अशूङ् व्याप्तिसंहत्योरशग् भोजन ईश् ल ङ।
ऐश्वर्ये कश शब्दे यु काश काश्ङ् द्युतौ कुशि।
किच कुश्यर् स्त्रिपि कृशज्वौ रोदे ह्नतौ कशियैतु।
कार्श्ये क्लेशङ् वधेङ्क्लिश्युञ् चोपतापे क्लिशू ग तु।
विवाधे णश् ल्डय् नाशे णिश शौले दृशिक् त्विषि।

१। अशू ङ न व्याप्तिसंहत्योः (अश, स्वा, आ) ज—अशिष्यते अक्ष्यते। ङ, न—अश्नुते। संहतिः सङ्घः। (धं प्राश्नेयवैरिव चानयोश्चैरितिभट्टिः। २। ३०)।

१। अशग भोजने (अश, क्रा, प) ग—अश्नात्यन्नं बुभुक्षित'। (अशिता अष्टा, वेम् सइलुभेति वेम्)।

२। ईश लङ ऐश्वर्ये (ईश, अदा, आ) दीर्घादिः। ऐश्वर्यमीश्वरीभावोऽधीनीकरणञ्च। ल, ङ—ईष्टे धनी। विषयाणाञ्च नेशिषे इति भट्टिः। १८। १५। अत्र कर्मणि षष्ठी।

३। कश शब्दे (कश, भ्वा, प) कशति।

४। यु काश्ङ द्युतौ } (काश, दिवा, आ)

४। काश्ङ द्युतौ } (काश, भ्वा, आ) य, ङ—काश्यते।

उ—काशित्वा काष्टा । ङ—अचकाशत् । ङ—काशते चन्द्रः ।
शेषोऽन्त्यान्त इत्येके ।

५ । कुशि कि च ( कुन्श, चु, भ्वा, प ) पञ्चमस्वरी । इ—
कुंशयते । कि—कुंशयति कुंशति । चकारात् शतौ ।

५ । कुशेर् श्लिषि ( कुश, दिवा, प ) य—कुश्यति बाला
कान्तम् । इर्—अकुशत् अकोशीत् । अस्मान्नित्यं ङ इति दुर्गः ।

६ । कुश जौ रोदे ह्वतौ ( कुश, भ्वा, प ) अ—क्रोशः कृशः ।
औ—अकुक्षत् । रोदोऽश्रुविमोचनम्, ह्वतिराह्वानम् । ( विचु-
क्रुशुः केचन साश्रुमुच्चैरिति भट्टिः । ३।१० ) ।

७ । कृशिर् तु कार्श्ये ( कृश, दिवा, प ) कार्श्यं कृशीकरणम् ।
इर्—अकृशत् अकर्शीत् । अस्मान्नित्यं ङ इति दुर्गः । य—
कृश्यति चन्द्रः कृष्णपक्षे ।

८ । क्लेश ङ वधे ( क्लेश, भ्वा, आ ) एकादशस्वरी । एतदाद्या-
स्त्रयोऽन्त्यास्तालव्यान्ता: । ङ—क्लेशते, चिक्लेशे । धातुप्रदीपे तु
क्लेश व्यक्तायां वाचीति मूर्द्धन्यान्तो दृश्यते । क्लेशते (१) न तथा
वाक्यमिति हलायुधोऽपि । ८३ ।

९ । ङ क्लिशु अ चोपतापे ( क्लिश, दिवा, उ ) ङ, य—
क्लिश्यते । उ—क्लिशित्वा क्लिष्टा । अ—क्लिश्यति क्लिश्यते । उप-
ताप इह उपतप्तीभावस्तत्करणञ्च । क्लिश्यते न च निष्फलमिति
हलायुधः । ८३ । क्लिश्यते तपसा स्वर्गमपीति चतुर्भुजः । अन्ये-
त्वस्मात् परस्मैपदममन्यमानाः क्लिश्नन्नपि हि मेधावीति, प्रत्यासन-

---

(१) राजश्रीशौरीन्द्रमोहन ठाकुर मुद्रित पुस्तके तु क्लेशते न स्पष्टावाक्यमिति तालव्यान्त पाठोऽस्तीत्युभयो क समीचीनतर इति सुधीभिविचिन्त्यमिति ।

तुषारदीधितिकरक्लिश्यत्तमोवल्लरीत्यादि च क्लिशं करोतीति कण्ड्वादित्वात् क्ये शवन्तमाहुः। नृपात्मजौ चिक्लिशतुः ससीताविति भट्टिप्रयोगश्च कैयादिकात् समादधते, तद्धेयं कैयादिकस्य बाधनार्थत्वात् (बाधनं पीड़नं तदर्थत्वेन सकर्मकत्वादित्यर्थः) चकारात् क्लेयङ च (उपतापार्थकः)।

८। क्लिशू गतु विबाधे (क्लिश, क्या, प) विबाधोऽभिद्दतिः (विघ्नोत्पादनपीड़नादिकमित्यर्थः) ज—अक्लेशीत् अक्लिचत्। ग—बूत्यमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयमिति कुमारसम्भवम्।२।४०।

१०। णशू ल्वयू नाशे (णश, दिवा, प) नाशो दर्शनाभाव इति प्राञ्चः। लुक्कायनमिति सर्व्वस्वम्। ल—अनेशत् अनशत्। य—नश्यति अदृश्स्तिरोभवतीत्यर्थः। ज—नशिष्यति नङ्क्ष्यति।

११। णिश धीले (णिश, भ्वा, प) धीले समाधौ। नेशति योगी। निनिशतुः।

१२। दशिक् लिपि (दन्श, चु, प) इ, क—दंशयति। त्विषि दीप्तौ।

## दशिक् ङ दर्श्शे दनृशौ च दंशे दाशन् हिंसने।

१२। दशिक ङ दर्श्शे (दन्श, चु, आ) इ, क, ङ—दंशयते। दर्श्शो दर्शनम्।

१३। दनृशौ च दंशे (दन्श, भ्वा, प) औ—अदाङ्क्षीत्। दशति विम्बफलं शुकशावकः। दंशनमित्यनुस्वारयुक्तम्। अन्येतु अनुस्वारहीनं पठित्वा तन्निर्देशादनटि नकारलोप इत्याहुः। अतएव दशनो दन्तः। चकाराद्दशिक ङ च (दंशनार्थकः)।

नाहि दंशयते कश्चिद्विद्यया गाङ्गुराख्ययेति हलायुधः॥ २०५।
भट्टमल्लमते दंशनमिह (१) सन्नाहः, तेन सदंशयन्नरक्षित-
शौर्य्यंदंशनात्सन्नूरयन्वय इति रघिणभूस्त इति माघः। १७।२१।
तनूः सन्नश्चायकुरित्यर्थः। (२) अत्र परस्मैपदं चिन्त्यमिति
वल्लभः। वस्तुतस्तु दंशंकरोतीति णौ साध्यम्। (३)।

१४। दाशनृ हिंसने (दाश, स्वा, प) एतदाद्यास्त्रयो
द्वितीयस्वरिणः। न—दाश्नोति। र—वैदिकः।

दाश्टक् ङ दाने दाश्टञ् च दिशौञ् शौचेऽथ दृहंशौ।
मेले धूशक् कान्तिकृतौ पिश् शपावयवे पशञ्।
वाधे ग्रन्थे पशक् बन्धे भ्रश स्नृधिर्य्यधःपते।

१४। दाश्ट कङ दाने (दाश, चु, आ) क—अददाशत्।
क, ङ—दाशयते।

१४। दाश्ट ङञ (दाश, भ्वा, आ) ट—अददाशत्। ञ—
दाशति दाशते। चकाराद्दाने।

१५। दिशौ ञ श शौचे (दिश, तुदा, ङ) औ—अदिशत्।
ञ, श—दिशति दिशते। शौच इति ऊर्घ्यं समवायने इत्यस्य
अपि रूपम्। धातूनामनेकार्थत्वाच्छौच इह दानसाधनं वा।

---

(१) दंशि कङ दर्शे दंशने इत्यत्र।

(२) अतएव भट्टमल्ल संवर्मयति सन्नह्यत्यात्मने सज्जतीत्यपि। सन्दंशते दंशयते समाहे परपञ्चकमित्यस्य टीकायां मल्लिनाथः।

(३) केचित्तु चुरादिषूभयपदिषु पठन्तीति मल्लिनाथः।

दिदेश कौत्साय समस्तमेवेति रघुः।५।३०। कथनेऽप्ययं, धर्मं दिशति दैशिकः। (१)।

१६। अथ दृशौँ प्रेक्षे (दृश, भ्वा, प) दृश्—अदर्शत् अद्राक्षीत्। औ—द्रष्टा। प्रेक्षणञ्चाक्षुषज्ञानम्। पश्यति चन्द्रं लोकः। ततः स ददृशे च ताविति चण्डीप्रयोगे व्यतीहारे आत्मनेपदम्। द्रक्ष्येऽहं परमेश्वरीति गणकृतानित्यत्वादात्मनेपदम्।

१७। धूश क कान्तिकृतौ (धूश, चु, प) षष्ठस्वरी। कान्तिकृतिः शोभायुक्तकरणम्। चन्दनो धूशयत्यङ्गम्।

१८। पिश अवयवे (पिश, तुदा, प) श, प—पिंशति पटः, अवयवी स्यादित्यर्थः।

१९। पश ञ बाधे ग्रन्थे (पश, भ्वा, उ) ञ—पशति पशते। बाधो विहतिः, (व्याघात इत्यर्थः) ग्रन्थो ग्रन्थनम्। ग्रन्थस्थाने स्पर्शं पठन्ति केचित्।

१९। पश क बन्धे (पश, चु, प) क—पाशयति।

२०। भ्रंशिँर् अधःपतने } (भ्रंश, दिवा, प)
२१। भ्रन्शिँर् अधःपतने } (भ्रन्श, दिवा, प) शेषाद्याः

(१) क्वचित् पुस्तके मूले दिश शौच शौचे इति, टीकायाञ्च "शौच इह सूचकः पैशुन्ये यथादित्यादिना सूचकस्य भावः शौचं इत्यादि। तस्यार्थो ज्ञापनं द्रोहनं कथनञ्च। प्रमाणन्तु सूचकः पैशुन्ये इत्यत्र द्रष्टव्यम्। दिदेश कौत्साय समस्तमेवेति रघुः, दत्तमिति ज्ञापयामास इत्यर्थः। कौत्सायेति चतुर्थी गत्यर्थमन्यदे इत्यत्र चायन्त्र्य व्यवस्थया यदभिप्रेत्य भाष्यं प्रयुज्यते तस्मात् कर्मणोऽपि चतुर्थीविकल्पनात्। दानार्थत्वात् सम्प्रदाने चतुर्थीति रमानाथः। द्रोहणेऽस्य प्रयोगाभावः" इत्येवं पाठो दृश्यते।

पञ्च रेफयुक्ताद्याः । द्युर्—अभ्रमत् अभ्रमीत्, अभ्रमत् अभ्रंमीत् । आभ्यां नित्यं ङ द्युति द्युगे. । य—भ्रम्यति, पूर्व्यमाणा मरौचेण भ्रम्यत्यरिपताकिनीति हलायुधः । १७६ । ङ—भ्रमित्वा भ्रष्टा ; भ्रंमित्वा भ्रष्टा ।

## ऌभ्रन्शुङ्भ्रस्युचभ्राश्यभ्राऌटण्टुङ्भासि तौ रनौ ।

२१ । ऌ भ्रन्शु ङ च } ( भ्रन्श, भ्वा, आ )
२२ । भ्रंस्यु च } ( भ्रंश, दिवा, प ) ऌ—अभ्रशत् ।
ङ—भ्रंशित्वा भ्रष्टा । ङ—भ्रंशते । य—भ्रश्यति । ङ—भ्रंशित्वा भ्रष्टा । चकारादधःपते ।

२३ । भ्राश्य ऌटण टुङ भासि } ( भ्राश, दिवा, आ )
२३ । भ्राश ऌटण टुङ भासि } ( भ्राश, भ्वा, आ )
य, ङ—भ्राश्यते । ऌ—अबभ्राशत् । ऌमते अनयोर्ङ्गि ऋ्रस्वविकल्पनेऽपि समानस्वरानुबन्धोऽन्येषामनुरोधात् । ण—भ्रेशे बभ्राशे । टु—भ्राशथुः । ङ—भ्राशते । भासि दीप्तौ ।

तौ रनौ । तौ एतौ (भ्राशधातू) रनौ च स्याताम्, रेफस्थाने दन्त्यनकारो ययोस्तौ रनौ । यथा—

२४ । भ्लाश्य ऌटण टुङ भासि } ( भ्लाश, दिवा, आ )
२४ । भ्लाश ऌटण टुङ भासि } ( भ्लाश, भ्वा, आ ) य,
ङ—भ्लाश्यते । ऌ—अबभ्लाशत् । ण—भ्लेशे बभ्लाशे । टु—भ्लाशथुः । ङ—भ्लाशते ।

## मश्र मिश्रतुध्वनौ कोपे ऌशशौ ऌशि कश्रिश्रौश्र ।
## हिंसे लशक् शिल्पयोगे शौलिश गत्यां ङलिश्य च्यौ ।

तौच्छ्ये वृशिर्य वृत्यां शौ विश् प्रवेशे ङ वाश्य रुट ।
शब्दे वश्लु स्पृहि शश प्लवने स्पृश शौ स्पृशि ।

२५ । मश ध्वनौ कोपे (मश, भ्वा, प)
२६ । मिश तु ध्वनौ कोपे (मिश, भ्वा, प) मशकः। मेशति।

२७ । मृश शौ स्पृशि (मृश, तुदा, प) श—मृशति। औ—अम्राक्षीत् अमार्क्षीत् अमृक्षत्। मृशीति तालव्यान्तस्यैव रूपम्, तेनानिर्दिष्टार्थत्वात् स्पर्शनं प्रणिधानञ्च तस्यार्थः। स्पर्शने—परामृशन् हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितमिति रघुः। ३। ६८। प्रणिधाने—रामप्रवासे व्यमृशन्न दोषं जनापवादं सनरेन्द्रमृत्युं, कैकयीति शेष इति भट्टिः। ३।७। विमर्शः परामर्शः। मृषीति मूर्द्धन्यान्तपाठो हेयः, तर्हि क्षमैवार्थः स्यात्।

२८ । रुशौ श हिंसे (रुश, तुदा, प)
२९ । रिशौ श हिंसे (रिश, तुदा, प) औ—अरुक्षत्, अरिक्षत्। श—रुशति, रिशति। रोक्ष्यति, रेक्ष्यति (अनेनोदाहरणेनायं न कुटादिरिति सूचितम्)।

३० । लश क शिल्पयोगे (लश, चु, प) क—लाशयति कुशलो नृत्ये, शिल्प युनक्तीत्यर्थः।

३१ । शौ लिश गत्याम् (लिश, तुदा, प) श—लिशति। औ—अलिक्षत्। लेष्टा।

३१ । ङ लिश्य औ तौच्छ्ये (लिश, दिवा, आ) तौच्छ्यमल्पीभावः। ङ, य—लिश्यते धर्म्मः कलौ। औ—लेष्टा।

३२ । वृशिर्य वृत्याम् (वृश, दिवा, प) इर्—अवृशत् अवर्शीत्। अस्मान्नित्यं ङ इति दुर्गः। य—वृश्यति वरं कन्या।

३३ । शौ विश प्रवेशे (विश, तुदा, प) श—विशति । शौ—अविक्षत् । विवेश कश्चिज्जटिलस्तपोवनमिति कुमारसम्भवम् । ५।३०। विपरात्परिभ्यःकौबाद्यभिमानेपदविधानेऽपि 'अङ्ग निविशतो भयादि'ति रघौ केवलात् शतप्रत्ययं विधाय परादुपसर्गेण योग इति दुर्घटवृत्तिः । निशब्द इहोपसर्गप्रतिरूपकोऽत्र । यद्वाहिम-मिदं सर्वं तस्य शत्रुः मनागमः । तस्माद्देवोव्यते विपत्तुर्विशेषतो. प्रवेशनादिति पुराणे विष्णुशब्दव्युत्पादनात् सुहंस्यान्तोऽयमिति केचित्, तच्चिन्त्यं तालव्यान्तस्य सर्वसम्मतत्वात् ।

३४ । उ वाश्य घ शब्दे (वाश, दिवा, आ) शब्द इह तिरश्चामेव । तिरश्चां वाशितं रुतमित्यमरात् । उ, श—वाश्यते पक्षी । घ—अववाशत् । चुक्रान्दमानः पितरं भरामिति भट्टी (३ । ३२) अनेकार्थत्वाद्रोदनार्थः । वासितं सुरभीकृते । ज्ञानमात्रे प्रगाढाय वासितं वस्त्रवेष्टिते इति विश्वप्रकाशात् दन्त्यान्तोऽयमपीति ।

३५ । वश लु स्पृहि (वश, अदा, प) लु—वष्टि धनं लोकः ।

३६ । शश प्लवने (शश, भ्वा, प) तालव्यादिः । शशीशशि-शुशीः शशन्ति ति किरातयमकात् । १५ । ५ । शशति भेकः, प्लवेन गच्छतीत्यर्थः । तृणलभमेत्यत्र वर्जनमस्यैव । दन्त्यान्तोऽप्ययमित्येके ।

३७ । स्पृश शौ स्पृशि (स्पृश, तुदा, प) श—स्पृशति । शौ—अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् । करेण पस्पर्श तदङ्गमिन्द्र इति कुमारसम्भवम् । ३ । २२ ।

स्पर्शकङ्ग्रहणे श्लेषे स्पशज्ञ ग्रन्थबाधयोः ।
शकारान्ता नवत्रिंशदिह धातव ईरिताः ।

येन सहेत्यादिनैवेष्टसिद्धावस्योदनुबन्धस्तत्फले दृपगाभीच्णेत्र दृप्य सर्पणे इत्येतयोरप्राप्तये विशेषणार्थः। न च पिबादिग्रहणवत् तत्र दृच्छेति ग्रहणेनैवेष्टसिद्धिरिति वाच्यं लाघवाभावे प्राचीनमतस्यैव न्याय्यत्वात्। श—दृच्छन्तौ दृच्छती। अस्यैव दृच्छादेशः। दृच्छति धर्न लोकः।

३। दृप्य सर्पणे (दृप, दिवा, प) य—दृप्यति। सर्पणं गतिः।

४। दूंप ङ दानेच्छिंसे च (दूंप, भ्वा, आ) दीर्घादिः। ङ—दूंपते। दूंपो दर्शनम्। चकारात् सर्पणे च।

४। दूंपुच्छे (दूंप, भ्वा, प) उच्छ उच्छृतयस्यशेषामरणम्। दूंपति धान्यं दीन।

५। दूंच ङ दर्शने (दूंच, भ्वा, आ) दर्शनं चाक्षुषज्ञानं प्रणिधानञ्च। ङ—दूंचते चन्द्रं लोकः। न कामहन्तिर्वचनीयमीक्षते इति कुमारसम्भवम् ।५।८२। निरीचियामि यम्मनीनिति गणकृतानित्यत्वात्, मधादित्वादनि निरीच इवाचरतीति क्वौ साध्यम्।

६। उच्च दृपि (उच्च, भ्वा, प) इट् सेकः। उच्चति इच्चं मेघ.।

उपूष् वधे दह्माप् रोगे ऋत्यात्न् वध ऋपोश् गतौ।

७। उपु वधे दहि } (उप, भ्वा, क्वावेट्, प)
७। उप वधे दहि } (उप, भ्वा, प) द्वौ क्त्वादौ। उ—ओषित्वा उष्ट्वा। ओषति। पूर्व्वस्य क्वावेट्त्वान्नेम् डीश्वीत्यादिना इमो निषेधे निष्ठायां उष्टः, शेषस्य उषित इति भेदः। दहि भस्मीकरणे।

८। ऊप रोगे (ऊप, भ्वा, प) दीर्घादिः। ऊपति सन्तं खलः (पीड़यतीत्यर्थः)।

९। ऋच्नु न वधे (ऋच्न, स्वा, प) र—वैदिकः। न—ऋच्नोति।

१०। ऋपी श गतौ (ऋप, तुदा, प) ऋकारादिः। ई—ऋप्टः। श—ऋपति। अर्पिता।

**एपृङ् च कप् वधे कुप्ग निष्कर्षे काङ्क्षि काङ्क्षणे।**

११। एपृङ् च (एप, भ्वा, आ) एकारादिस्वरी। ऋ—मा भवान् एपिपत्। ङ—एपते। चकाराद्गतौ।

१२। कप वधे (कप, भ्वा, प) कपति। अयमुभयपदीति चतुर्भुजजुमरौ। रामरमानाथौ तु इमं परस्मैपदिनं मत्वा उभयपदिनं तालव्यान्तमन्यं मन्येते।

१३। कुप्ग निष्कर्षे (कुप, क्र्या, प) ग—कुप्णाति। चुकोप। निष्कर्षे इयत्तापरिच्छेदः। तुलैरवकुप्णाति इति वोपदेवः। निष्कर्षोऽन्तःप्रकाशनमिति गोविन्दभट्टः। ततोऽकुप्णाद्धयग्रीवः क्रुद्धः प्राणान् वनौकसामिति भट्टौ (१७। ८०) अनेकार्थत्वान्निष्कासनार्थः।

१४। काङ्क्षि काङ्क्षणे (काङ्क्ष, भ्वा, प) इ—काङ्क्षति धनं लोकः। नमध्यपाठेनैवेष्टसिद्धाविदनुबन्धो वेदप्रचारणभेदार्थः।

**क्षपौत्वात्क्षपि क्षप् शौञ्च विलेखे खप् वधेऽयगेप्।**
**ग्लेपृङ्ङन्वेपेऽथ हपु सङ्कर्षे घुष्कि इन्नृतौ।**
**विशब्द श्राङः सततक्रन्द इर्षुप् वधे घुपिङ्।**

घूषे घषिङ् घ्वरे च्यूष् पाने चञ्चलुङ् वदे चपञ् ।
भक्षेऽथ चप् वधेक्रुप् जप् जूप् ञ चग्डीञ्जि जुप् सुदि ।
सेवे कि जुप् तर्कटपगो र्जिपु सेकेऽघ जेपृङ ।
गत्यां जञ्जिम् ङ दाने च जञ्चलुघ् भक्षहासयोः ।

१४ । क्षपौ त्वाक्षपि (क्षप, भ्वा, प) षौ—अक्षाचीत् अक्षार्चीत् अक्षचत् । आक्षपि आकर्षणे । कर्षन्ति तुरगा रथम् ।

१५ । क्षप शौ ञ च विलेखे (क्षप, तुदा, उ) श, ञ—क्षपति क्षपते भूमिं क्षपकः । षौ—अक्षाचीत् अक्षार्चीत् अक्षचत् । चकारात् क्षपौ च । (विलेखः कर्षणम्) ।

१६ । ख्षप वधे (ख्षप, भ्वा, प) ख्षपति ।

१७ । अथ गेपृ ङ अन्वेषे } (गेप, भ्वा, आ)

१८ । ग्लेपृ ङ अन्वेषे } (ग्लेप, भ्वा, आ) आद्यः केचिन्न मन्यते । शेषोऽन्तःस्थातृतीययुक्तः । ङ—अजिगेपत् अजिग्लेपत् । ङ—गेपते, ग्लेपते । जिगेपे, जिग्लेपे । अन्वेषोऽनुसन्धानम् । ग्लेपते यः सता मार्गमिति हलायुधः । २४७ ।

१९ । अथ घृषु सङ्घर्षे (घृष, भ्वा, प) उ—घर्षित्वा घृष्ट्वा । घर्षति चन्दनं लोकः ।

२० । घुष्कि इर्न्तौ विशब्दे (घुष, चु, भ्वा, प) एतदाद्यास्त्रयः पञ्चमस्वरिणः । विशब्द इह आविष्करणं, कथनं, नानाशब्दकरणं वा । कि—घोषति गूढमर्थमभियुक्तः । नावद्यं घोषति हारि यस्य कश्चिदुपद्रवमिति हलायुधः । १४१ । इर्—अघुषत् अघोषीत् ।

आङः सततक्रन्दे । घुष्कि इर् इत्यनुवर्त्तते । (आङित्युपसर्गात्

घुष्कि इर् इत्यस्य सततकन्दनमर्थं इति ) क्कि—घाघोषयति घोकार्त्तः, सततं कन्दतीत्यर्थः ।

२० । घुर्घुष वधे ( घुष, भ्वा, प ) इर्—घघुषत् घघोषीत् ।

२० । घुषिङ् घूषे ( घुन्ष, भ्वा, घा ) घूषः कान्तिक्षतिः । ङ—घुंष्यते । ङ—घुंषते घन्दनो गात्रम् ।

२१ । घषि ङ चरे ( घन्ष, भ्वा, घा ) घाद्यस्वरी । इ— घंष्यते । ङ—घंषते । घयं कैश्चिन्न मन्यते ।

२२ । चूष पाने ( चूष, भ्वा, प ) दीर्घी । चूषत्याम्रं लोकः ।

२३ । चच लङ वदे ( चच, घदा, घा ) वदः कथनम् । ल, ङ—चष्टे धर्म्मं धीरः । तृतीयस्वरानुबन्धोऽयमिति प्राञ्चः । इकार उच्चारणार्थं इति केचित् । छन्दसि नुमागमार्थं इति केचित् । वेदेपूच्चारणभेदार्थं इति केचित् । तत्र वञ्चवस्तु तृतीयस्वरो-ल्लिपिकदप्रमादक्षतः किन्तु चतुर्थस्वरानुबन्धोऽयं निष्ठाया इम्‌निषेधार्थः, तेन वर्ज्जनार्थे ख्याञ्‌ख्याआदेशयोरप्राप्तौ घाचष्ट वर्ज्जनमित्याहुः ।

२४ । चप ञ भक्षे ( चप, भ्वा, उ ) ञ—चपति चपते ।

२४ । चप चप वधे ( चप, भ्वा, प ) चपति ।

२५ । छप ञ च ( छप, भ्वा, उ )

२६ । जप ञ च ( जप, भ्वा, उ )

२७ । जूप ञ च ( जूप, भ्वा, उ ) शेषः षष्ठस्वरी । ञ—छपति छपते ; जपति जपते , जूपति जूपते । घाद्यः कैश्चिन्न मन्यते । घन्यौ परस्मैपदिनावित्यन्ये । चकाराद्दधे ।

२८ । ग्र ञोञि जुष मुदि सेवे (जुष, तुदा, घा) पञ्चमस्वरी । ग्र, ङ—जुषते । ई, ञि—जुष्टोऽस्ति । मुदि हर्षे ।

२८। किं जुष तर्कोटृप्तोः ( जुष, चु, आ, प ) पञ्चमस्वरी । कि—जोषयति, जोषयत्यर्गुणं गुणी, तर्कयतीत्यर्थः ।

२८। जिषु सेके ( जिष, भ्वा, प ) उ—जेषित्वा, जिष्टा ।

३०। अथ जेषृङ गत्याम् ( जेष, भ्वा, आ ) एकादशस्वरी । ङ—अजिजेषत् । ङ—जेषते, जिजेषे ।

३१। जचि मङ दाने च ( जङ्क, भ्वा, आ ) ङ—जङ्कते । नमध्यपाठेनैवेट्सिद्वाविदनुबन्धो वेदेप्‌ज्ञापाभेदार्थः । म—अजङ्कि अजाङ्कि, जङ्कं जङ्कं जाङ्कं जाङ्कं । अनुबन्धबलादनुपधाया अपि दीर्घः । समते दीर्घविधिरुपधां नोपेक्षते । ङ—जङ्कते । चकारान्नत्वाच्च ।

३१। जच जलुष भक्षहासयोः ( जच, भदा, प ) केचित्तु विष्णुपुराणे यक्षराक्षसोत्पत्तिप्रसङ्गे "यक्ष्यतामिति यैरुक्तं ते वै यक्षास्तु यक्षणादि"ति भक्षणार्थस्यैव यक्षव्युत्पादनादेतमन्तःस्थादिं मन्यन्ते । तत्र अमरटीकायां वर्गजकारस्यान्तःस्थयकारस्थान्दसो दृष्टव्य इत्युक्त्वा वर्गादिरयं निर्णीतः । च—जक्षति । लु, व—जक्षिति ।

झषञ् ग्रहेऽपिधाने झष वधे णोपृङ णास्तृ व्रजे ।

३२। झष ञ ग्रहेऽपिधाने ( झष, भ्वा, उ ) ञ—झषति झषते वस्त्रं जनो, गृह्लाति परिदधाति चेत्यर्थः । सप्तमस्वरादिरयमिति पूर्णचन्द्रत्रिलोचनरामाः । ( तन्मतेऽयं च्छषधातुरित्यर्थः ) अर्षति अर्षते ।

३२। झष वधे ( झष, भ्वा, प ) आद्यस्वरी । झषति । षष्ठस्वरी चायमिति केचित् । झूषति ।

३३। योपृ ऊ वर्जे } (योप, भ्वा, प्या)
३४। याच वर्जे } (याच, भ्वा, प) ऊ—अनिनेपत्। ऊ—नेपते, मिनेपे। नचति। व्रजो गतिः।

## णिपु सेके णिच चुम्बे तृप् तुष्टौ तुप् ल्ट यौ ञि च।

३५। णिपु सेके (णिप, भ्वा, प) ऊ—नेपित्वा निष्ट्वा।

३६। णिच चुम्बने (णिच, भ्वा, प) निचति। (प्रणिचति प्रनिचति)।

३७। तृप तुष्टौ (तृप, भ्वा, प) पञ्चस्वरी। तृपन्ति कुल-देवताः।

३८। तुप्ल्ट यौ ञि च (तुप, दिवा, प) ऌ—अतुपत्। य—तुप्यति। यौ—तोप्टा। ञि—तुष्टोऽस्ति। चकारात् तुष्टौ।

## त्विपौञ् भासेऽवान्निवासे दाने चेयं ञि तृप् तृपि।

३९। त्विपौ ञ भासे (त्विप, भ्वा, उ) यौ—अत्विचत्। ञ—त्वेपति त्वेपते। भासो दीप्तिः।

अवान्निवासे दाने च। त्विपौञ इत्यनुवर्त्तते। चकाराद्भावे च। यौ—अवात्विचत्। ञ—अवत्वेपति अवत्वेपते, निवसति ददाति दीप्यते वेत्यर्थः।

४०। इर्यञि तृप तृपि (तृप, दिवा, प) इर्—अतृपत् अतर्पीत्। अप्यान्वितं ङ इति दुर्गः। य—तृप्यति। ञि—तर्पितोऽस्ति। तृट् आकाङ्क्षा। इच्छाकाङ्क्षास्पृहेहातृट्वाञ्छा-लिप्सामनोरथ इत्यमरात्। तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णयेति रघुः। ८। २। तृप्यति घर्न लोकः, तृप पिपासया-मिति माघः। तृप्यति तोयं पान्य इति रमानाथः।

त्वचित्यां त्वच् त्वचोग्राहे त्वचू कार्श्येऽथ ताववौ ।

४१ । त्वच् दृत्याम् ( त्वच, भ्वा, प ) सप्तमस्वरी । त्वचति । दृत्यां गतौ ।

४२ । त्वच त्वचोग्राहे ( त्वच, भ्वा प ) त्वचोग्राहस्वर्म्मणो ग्रहणम् । त्वच त्वचने इति माघः । त्वचनं संवरणमिति रमानाथः । त्वचति कायं वर्म्मणा भटः ।

४२ । त्वचू कार्श्ये ( त्वच, भ्वा, प ) ऊ—त्वचिष्यति त्वच्यति । कार्श्यं क्षयीकरणम् । त्वचति काष्ठं तचा ।

अथ तावयौ ।

तौ एतौ (त्वचधातू) वयौ वकाररहितौ स्याताम् । यथा—

४३ । तच त्वचोग्राहे } ( तच, भ्वा, प )

४३ । तचू कार्श्ये } (तच, भ्वा, प, वेट्) तचति । ऊ—तचिष्यति तच्यति ।

तचून् तचेङ् दीच मौरण्ड्याज्योऽर्थे दचङ् स्यदे ।
दृहौ दल्भप् ङ रून्त्यर्थे दुर्दुभ्यो वैकृतेल् द्विपौ ञ् ।
वैरे द्राच भाच भ्राचि काङ्क्षे घोरकृते ध्रपक् ।
ङ ग्रन्तिवन्धे ञि ध्रपान् प्रागल्भ्ये ध्रप् संहतौ ।
हिंसे ध्रपा कि त्वमर्षे धूपक् धूप्रोर्लिधिप् रवे ।

४३ । तचून तचे (तच, स्वा, प) तचः क्षयकरणम् । ऊ—तचिष्यति तच्यति । न—तच्णोति काष्ठं तचा ।

४४ । ङ दीच मौरण्ड्याज्योर्थे ( दीच, भ्वा, श्रा ) मौरण्डं

मुण्डितमस्तकीभावः। इज्या यजनम्। व्योदर्थो नियमव्रता-देशोपनीतयः (श्रोकारान्तगणे व्योङ नियमव्रतादेशोपनीति-ष्वित्युक्तं, श्रस्यापि तदर्थो इत्यर्थः)। ङ—दीयते वटुर्मुण्डित-मस्तकः स्यादित्यर्थः। दीयते जनो यजतीत्यर्थः। दीयते याज्ञिको नियमी स्यादित्यर्थः। दीयते पण्डितो जन, व्रतमुपदिशती-त्यर्थः। दीयते पुत्रं विप्र, उपनयतीत्यर्थः।

४५। दच ङ स्वदे दक्षौ (दच, भ्वा, श्रा,) स्वद इह घ्रीम-करणम्। ङ—दचते धनसुद्योगी, घ्रीमसुत्पादयतीत्यर्थः।

४५। दच्चादङ हन्त्यर्थे (दच, भ्वा, श्रा, घटादि.) न—श्रदच्चि श्रदाच्चि, दचं दचं दाचं दाचं। श्रानुबन्धबलादनुपधाया-श्रपि दीर्घः। क्षमतेतु दीर्घविधिवयथा नोपेच्यते। प—दचा, 'घेमक्षात् घटोरित्यनेनैवेष्टसिद्धावस्य पानुबन्धकरपर्यन्त-घटादिभ्यो ङ इति प्राचीनमतानुवादार्थः। ङ—दचते। हन्त्यर्थौ गतिवधयोः।

४६। इर्द्यौ वैक्षते (दुष, दिवा, प) वैक्षतमप्रसन्नीभावः। इर्—श्रदुषत् श्रदुचत्। श्रद्यान्नित्यं ङ इति दुर्गः। य—दुष्यति लोक. पापात्। श्रौ—दोष्टा।

४७। ल द्विषौ ञ वैरे (द्विष, श्रदा, उ) ल, ञ—द्वेष्टि द्विष्टे। श्रौ—श्रद्विचत्। द्विषन्ति मन्दाश्चरितं महात्मनामिति कुमार-सम्भवम्। ५। ७५।

४८। द्राच्चि काङ्क्षे घोरवते } (द्राक्ष, भ्वा, प)
४९। ध्राच्चि काङ्क्षे घोरवते } (ध्राक्ष, भ्वा, प)
५०। ध्राच्चि काङ्क्षे घोरवते } (ध्राक्ष, भ्वा, प) श्राद्यन्तौ रेफयुक्तादी, मध्यम श्रोष्ठ्यवर्गशेषयुक्तादिः। घोरवतमिति तिरश्चा-

मेव घोरशब्दः । इ—द्राङ्क्षति, घ्राङ्क्षति, ध्राङ्क्षति पक्षी । नमध्यपाठेनैवेटसिद्धावेषामिदनुबन्धो वेदेपूच्चारणभेदार्थः ।

५१ । धृष कड शक्तिबन्धे ( धृष, चु, चा ) शक्तेर्बन्धः शक्तिबन्धः ( अभिभव इत्यर्थः ) । क, ङ—धर्षयते वह्निंपयः ।

५१ । ञि धृषान प्रागल्भ्ये ( धृष, स्वा, प ) ञि—धृष्टोऽसि । चा—धर्षितं धृष्टं तेन, प्रधर्षितः प्रधृष्टः सः । न—न धृष्णोति गुरोरग्रे ( यः ) इति हलायुधः । ८७ ।

५१ । धृषु संहतौ हिंसे ( धृष, भ्वा, प ) उ—धर्षित्वा धृष्ट्वा । संहतिः सन्तुहः ।

५१ । धृषा कि त्वमर्षे ( धृष, चु, भ्वा, प ) चा—धर्षितं धृष्टं तेन, प्रधर्षितः प्रधृष्टः सः । कि—धर्षयति धर्षति । अमर्ष इह अभिभव इति रूद्रमह्मः । न धर्षति निजाः प्रजाः । तमेव धर्षयत्येकं यस्तास्तु प्रतिकूलतीति हलायुधः । ८७ ।

५२ । धूप क धूप्ये ( धूप, चु, प ) षष्ठस्वरी । धूपः कान्तिक्षतिः । क—चन्दनो धूपयत्यङ्गम् ।

५३ । लिँ धिप रवे ( धिप, ह्वा, प ) र—वैदिकः । लि—दिधेष्टि । रवः शब्दः ।

**धिक्ष धुक्षङ सन्दीपे क्लेशे जीवे पुषग् पुष ।**
**पुष्टौल्ट पुष्यौच पुषक् धृतौ धौ पिष ल्ट चूर्णने ।**

५४ । धिक्ष ङ सन्दीपे क्लेशे जीवने } ( धिक्ष, भ्वा, चा )
५५ । धुक्ष ङ सन्दीपे क्लेशे जीवने } ( धुक्ष, भ्वा, चा )

द्वौ क्रमात् तृतीयपञ्चमस्वरिणौ । ङ—धिक्षते, धुक्षते वह्निः, सन्दीप्यते इत्यर्थः । धिक्षते धुक्षते जनः, क्लिश्यति जीवति चेत्यर्थः ।

५६। पुष ग पुष्टौ } (पुष, क्र्या, प)
५६। पुष पुष्टौ } (पुष, भ्वा, प) ग—पुष्णाति। पुपोष। पोषति पुत्रं तातः।

५६। ऌ पुष्यौ च (पुष, दिवा, प) ऌ—अपुषत्। य—पुष्यति। औ—पोष्टा। चकारात् पुष्टौ।

५६। पुषक् धृतौ (पुष, चु, प) क—पोषयति। (तृष्णां न पुष्णाति यशांसि पुष्यति प्रवाल्यौविप्रमनांसि पोषति। इत्यादि यः पोषयतीप्सितैर्धनैरिति सर्वत्र हलायुधः। २१।

५७। औ पिष् ऌ चूर्णने (पिष, रुधा, प) ध—पिनष्टि लोको गोधूमम्। औ—पेष्टा। ऌ—अपिषत्।

## पषक् बन्धे पषञ् बाधे ग्रन्थे पक्षक् परिग्रहे।

५८। पष क बन्धे (पष, चु, प) क—पाषयति। तालव्यान्त एवायमिति बहवः, दन्त्यान्त इति केचित्। मूर्द्धन्यान्तपाठस्तु केषाञ्चिदनुरोधात्।

५८। पषञ बाधे ग्रन्थे (पष, भ्वा, उ) ञ—पषति पषते। बाधो विहतिः। ग्रन्थो ग्रन्थनम्। ग्रन्थस्थाने स्पर्शं पठन्ति केचित्।

५९। पक्ष क परिग्रहे (पक्ष, चु, प) क—पक्षयति।

## पर्ष ङ् स्नेहे प्रुषग् सेकपूर्त्योश्च प्रुष् दहाम्।
## रलौ लुष्यल्टच प्लुष्येर्भागे च प्लुषकुत्सृजि।

६०। पर्ष ङ स्नेहे (पर्ष, भ्वा, आ) रेफोपधः। स्नेह इहार्द्रीभावः। ङ—पर्षते पयसा पटः। स्पर्श इति चतुर्भुजः। स्पर्शते पस्पर्शे।

६१ । मुष ग. सेकपूर्त्योश्च ( मुष, क्या, प ) ग—मुष्णाति, पुमोष । सेकस्थाने मोचनमिति धातुप्रदीपभट्टमल्लौ । चकारात् स्नेहे च ।

६१ । मुषु हवि ( मुष, भ्वा, प ) उ—मोषित्वा मुष्ट्वा । मोषति । हवि भक्षीकरणे ।

अन्त्र्‌ रलौ ।

अन्त्र्‌ एतौ ( मुषधातू ) रलौ च स्याताम् । रेफस्थाने अन्तःस्थाद्वतीयो यथोक्तौ रलौ । यथा—

६२ । लुष ग सेकपूर्त्योश्च } ( लुष, क्या, प )
६२ । लुषु हवि } ( लुष, भ्वा, प ) ग—लुष्णाति ।
उ—लोषित्वा लुष्ट्वा । लोषति ।

६२ । लुष्य ङ च ( लुष, दिवा, प ) अन्तःस्थाद्वतीययुक्तः । य—लुष्यति । ङ—अलुषत् । लुलोष । चकाराद्वृद्धि ।

६३ । प्युषेर् भागे च ( प्युष, दिवा, प ) अन्तःस्थाद्ययुक्तः । य—प्युष्यति धनं दायादः । इर्—अप्युषत् अप्योषीत् । अस्मान्नित्यं ङ इति दुर्गः । चकाराद्दृद्धि च ।

६३ । प्युष क उत्सर्ज्जि ( प्युष, चु, प ) अन्तःस्थाद्ययुक्तः । उत्सर्ज्जि उत्सर्गे । क—प्योषयति धनं दाता । (१) ।

### ऋषु सेके पूष वृद्धौ लक्ष भुक्ष ञ भक्षणे ।

६४ । ऋषु सेके ( ऋष, भ्वा, प ) उ—पर्षित्वा ऋष्ट्वा । पर्षति ।

६५ । पूष वृद्धौ ( पूष, भ्वा, प ) षष्ठस्वरी । पूषति । ( प्रतिक्षणं पूषति यस्य विक्रम इति हलायुधः । २१ ) ।

---

(१) प्युष इति गोविन्दभट्टः, श्लोके त्रिकट्, इत्यधिकः पाठः ।

६६। म्रक्ष ञ भक्षणे } (म्रक्ष, भ्वा, उ)

६७। भ्लक्ष ञ भक्षणे } (भ्लक्ष, भ्वा, उ) द्वावन्तःस्था-तृतीययुक्तौ। ञ—म्रक्षति म्रक्षते; भ्लक्षति भ्लक्षते। मम्रक्ष, बभ्लक्ष। (१)। शेषस्य लस्थाने रमभक्षर इति दुर्गः। भ्रक्षति भ्रक्षते।

**भक्षक् च भिक्षङ् लाभार्थलोभोक्तिक्लिशि भाषङृदृ।**
**वाचि भ्रेपृ ञ् चले भेपृ ञ् च भये भूप् कि भूषणे।**

६८। भक्षक् च (भक्ष, चु, प) क—भक्षयति। चकारात् भक्षणे।

६९। भिक्ष ङ लाभार्थे लोभोक्ति क्लिशि (भिक्ष, भ्वा, आ) (चत्वारोऽर्थाः) अर्थो याचनम्। लोभादुक्तिर्लोभोक्तिः। ङ—भिक्षते भूमिं नृपात् पण्डितः, लभते इत्यर्थः। भिक्षते दातारं धनं भिक्षुर्याचतीत्यर्थः। भिक्षते दातारं दीनः, लोभाद्वदतीत्यर्थः। भिक्षते जनः क्लिश्यतीत्यर्थः।

७०। भाष ङ ऋदृ वाचि, (भाष, भ्वा, आ) ङ—भाषते। ऋदृ—अबीभषत् अबभाषत्।

७१। भ्रेपृ ञ चले (भ्रेप, भ्वा, उ) रेफयुक्तः। ऋदृ—अबिभ्रेपत्। ञ—भ्रेपति भ्रेपते। बिभ्रेपे धर्मात् खलः।

७२। भेपृ ञ च भये (भेप, भ्वा, उ) ऋदृ—अबिभेपत्। ञ—भेपति भेपते; बिभेपे। चकाराद् भ्रेपृ ञ च (भयार्थकः)

(१) केचित्तु भकारादिरिति कातन्त्रभीमरादयः। भक्षति भक्षते। मांसं भक्षन्ति मौषितमिति हलायुधोऽपि। भक्षते तु चौरादिकस्य भक्षयतेर्णे रणित्यतायां सिद्धिः। न च लभतेऽपि केचिद्भकारादिरितिवाच्यम्, तथात्वे संख्याया व्याहतेः।

७३। भूष कि भूषणे (भूष, चु, भ्वा, प) कि—भूषयति भूषति चारो जनम्।

## भष् वुक्के पिशुनोक्तौ मष् मुष वधे मुष्य दूर्च्छिदि

७४। भष् वुक्के पिशुनोक्तौ (भष, भ्वा, प) वुक्कः कुक्कुरादिकर्त्तृकशब्दः। भषति श्वा। भषत्यन्यदोषं खलः, सूचयतीत्यर्थः। भर्त्सने इति प्राञ्चः। भषति श्वा पान्थं, शब्देन निर्भर्त्सयते इत्यर्थः इति रमानाथः।

७५। मष वधे } (मष, भ्वा, प)
७६। मुष वधे } (मुष, भ्वा, प) द्वौ क्रमादाद्यपञ्चमस्वरिणौ। मषति। मोषति।

७६। मुष्य दूर् छिदि (मुष, दिवा, प) पञ्चमस्वरी। छेद इह खण्डनम्। य—मुष्यति विपक्षं चतुरः। इर्—अमुषत् अमोषीत्। अस्मात् पुषादित्वान्नित्यं ङ इति दुर्गः। (मुष्यत्यपहृतार्थानां दुःखं धनसमर्पणादिति हलायुधः। (११५)।

## मुषग् मूष लुण्ठने मिषश स्पर्द्धे मिष् म्रिषु सेचने।

७६। मुष ग लुण्ठने } (मुष, क्र्या, प)
७७। मूष लुण्ठने } (मूष, भ्वा, प) द्वौ क्रमात् पञ्चमषष्ठस्वरिणौ। ग—मुष्णाति। यो मूषति परद्रव्यमिति हलायुधः। ११५। येषोऽपि क्रुशीत्येके। मोषति। (१)।

७८। मिष श स्पर्द्धे (मिष, तुदा, प) स्पर्द्धः पराभिभवेच्छेति वोपदेवः। श—मिषति बली बलवन्तम्। मेषिता।

---

(१) राजपुस्तके यो मोषति परद्रव्यमिति हलायुध श्लोको दृश्यते।

७८। षिधु सेचने } (षिध, भ्वा, प)
७६। ष्टपु सेचने } (षृध, भ्वा, प) आद्यस्तृतीयस्वरी। शेषाद्यास्त्वारः सप्तमस्वरिणः। उ—सेधित्वा सिद्धा। मर्षित्वा मृष्टा। सेधति। मर्षति।

**मृषक् क्षान्तौ मृष अ ङुमृष्य च क् भक्ष म्रक्षणे।**
**स्नेहने म्रक्ष सङ्घाते मक्ष रोषे च मोक्ष कि।**
**क्षेपे माक्षि स्पृहे येषृ ङ यत्ने यक्ष काङ् महि।**

७६। मृष क क्षान्तौ (मृष, चु, प) क—मर्षयति। अयमात्मनेपदीत्येके।

७६। मृष अ ङु च } (मृष, भ्वा, उ)
७६। मृष्य अ च } (मृष, दिवा, उ) अ—मर्षति मर्षते। ङ—मर्षते। उ—मर्षित्वा मृष्टा। अयमात्मनेपदीत्यन्ये। य, अ—मृष्यति मृष्यते। ममर्ष। चकारात् क्षान्तौ। अपि गुरुमपराधं मर्षति ब्राह्मणानामिति हलायुधः। १५। (मृषयति न नृपाणां मृष्यते चोद्धतानामनुचितमनुमार्तं न द्विषा मर्षते यः। अपि गुरुमपराधं (१) मर्षति ब्राह्मणानां सितवसनभृतां यो मर्षयत्यागमज्ञमिति सर्वत्र हलायुधः। १५।

८०। क भक्ष म्रक्षणे स्नेहने (म्रक्ष, चु, प) रेफयुक्तादिः। म्रक्षणं द्रव्यस्य द्रव्यान्तरेण संयोजनम्। क—म्रक्षयति घृतेनान्नं लोकः।

८०। म्रक्ष सङ्घाते (म्रक्ष, भ्वा, प) रेफयुक्तादिः। म्रक्षति पयसा सक्तून् लोकः, राशीकरोतीत्यर्थः (सङ्घातोऽत्र निविड़संयोगकरणम्)।

(१) अपि शतमपराधानिति चान्यत्र पाठः।

८१। मद्य रोधे च ( मद्य, भ्वा, प ) मद्यति। चकारात् सद्यति च।

८२। मोच कि क्षेपे ( मोच चु, भ्वा, प ) कि—मोचयति। मोचति। सुमोचतुः।

८३। माङ्क्षि स्पृहे ( माङ्क्ष, भ्वा, प ) द्वितीयस्वरी। इ— माङ्क्षति। नमध्यपाठेनैवेष्टसिद्धाविदनुबन्धो वेदेपुरादागमेदार्थः।

८४। येषृ ङ यत्ने ( येष, भ्वा, आ ) अन्तःस्थादिः। ऋ— अयियेषत्। ङ—येषते, यियेषे।

८५। यक्ष क ङ अर्चि ( यक्ष, चु, आ ) क, ङ—यक्षयते। अर्चि पूजायाम्।

यूप् रिप् वधे रुप् ञि च रुष्येर्ञि क्रुधि रुपक् तथा।

८६। यूप वधे } ( यूप, भ्वा, प )
८७। रिप वधे } ( रिप, भ्वा, प ) आद्यः षष्ठस्वरी। यूपति। रेपति।

८८। रुप ञि च ( रुप, भ्वा, प ) एतदाद्यास्त्रयः पञ्चमस्वरिणः। ञि—रुष्टः रुषितोऽस्ति ( वाक्यामक्षपेत्यादिना इम-निषेधविकल्पनात् ) रुरोष। चकाराद्वधे।

८९। रुष्येर्ञि क्रुधि ( रुष, दिवा, प ) य—रुष्यति भृत्याय भूपालः। इर्—अरुषत् अरोषीत्। अस्याञ्चित्यं ङ इति दुर्गः। ञि—रुष्टः रुषितोऽस्ति।

८९। रुष क तथा ( रुष, चु, प ) क—रोषयति। तथा— क्रुधि।

ञि रक्ष पालने रेपृ ङ् ह्वेषायामथ लूष् क वधे।

८९। जि रच्च पालने ( रच्च, भ्वा, प ) जि—रच्चितोऽस्ति। रच्चति ।

९०। रेपृ ङ कम्पायाम् ( रेप, भ्वा, चा ) क्रेपा घोटककर्त्तृकशब्दः। घट—चरिरेपत्। ङ—रेपतेऽश्वः। रिरेपे।

९१। अथ लूप क वधे ( लूप, चु, प ) पटक्षरी। क—लूपयति

लुप् च स्तेये लपक् शिल्पयोगे लप्य लप ञ् स्पृहि।

९२। लुप च स्तेये ( लुप, भ्वा, प ) लोपति। चकारात् लूपक च।

९३। लप क शिल्पयोगे ( लप, चु, प ) क—लापयति कुशलो वृत्ये, शिल्पं सुनक्तीत्यर्थः।

९३। लप्य ञ स्पृहि } ( लप, दिवा, उ )
९३। लप ञ स्पृहि } ( लप, भ्वा, उ ) य, ञ—लप्यति लप्यते। ञ—लपति लपते।

लक्ष क ञ् दर्शनेऽङ्के कङ् लक्षालोचे विपिर्लि औ।
ङ व्याप्तौ विप गौ विप्रयोगेऽथ विपु सेचने।

९४। लक्ष क ञ दर्शनेऽङ्के ( लक्ष, चु, उ ) क, ञ—लक्षयति लक्षयते घटं लोकः, पश्यति, चिह्नयुक्तं करोति चेत्यर्थः।

९४। क ङ लक्षालोचे ( लक्ष, चु, चा ) चालोचः प्रणिधानम्। क, ङ—लक्षयते कार्य्यं सुधीः।

९५। विपिर्लि औ ङ व्याप्तौ (विप, हा, उ) दृट्—अविपत् अविचत्। लि, ञ—वेवेष्टि वेविष्टे (निजा चेरेणुः) धौ—वेष्टा। ङ—वेविष्टे। उभयपदीत्यन्ये। चपालवल्कर्त्त्र्यात्मने-

पदार्थो डकारः । वेवेष्टि पिष्टपं सर्व्वं कीर्त्तिर्यस्यातिशायिनीति हलायुधः (१८१)।

८५। विष गौ विप्रयोगे (विष, क्या, प) ग—विष्णाति ख्यानी, पुत्रादिभ्यो वियुक्तः स्यादित्यर्थः। औ—अविषत्। इन्त्यान्तोऽयमिति विसयमव्युत्पत्तौ सुभूतिः (विसं स्यादामगन्धि यदित्यत्र विस विप्रयोगे बाहुल्यादृक् इत्युक्तम्) (विष्णाति विषवत् प्राणान् तयोषम्र्हियामसाविति हलायुधः। १८१)।

८५। अथ विषु सेचने (विष, भ्वा, प) ङ—वेषित्वा विष्ट्वा। वेषति।

वृषु चाथ काङ् वृषु च प्रजनैश्वेऽथ वृन्न ङ।
इतौ वन्न् रोपसंहत्योर्वाञ्छि काङ्क्षेऽथ वष्‌ शष।
शिष्‌वधे शिष्‌क्यसर्व्वोपयोगे वेरतिशायने।

८६। वृषु च (वृष, भ्वा, प) ङ—वर्षित्वा वृष्ट्वा। वर्षति। चकारात् सेचने।

८६। अथ क ङ वृषु च प्रजनैश्वे (वृष, चु, वा) क, ङ—वर्षयते। अस्य पञ्चमस्वराणुबन्धो लेखकभ्रमकृत एव, आन्तेभ्यः सर्व्वत्र नित्येमः साम्प्रदायिकत्वात्। न च प्राचामनुरोधात् पाठ्य इति वाच्यं, तर्हि यस्वकव्यक्तौ, काङ वस्त्र वस्त्रने, इतक दीप्तौ, इधक दीप्तौ, दिव काङ परिकूजने, क दिव अर्द्दे, इष काङ शक्तिबन्धे, जसक वधेऽनादरे इत्येषामष्टानामपि पञ्चमस्वरानुबन्धित्वापत्तेः। वस्तुतस्तु एषां (पूर्व्वोक्तानामष्टानां) पञ्चमस्वरानुबन्धः प्राचीनैः पठितोऽप्यनर्थः। अतएव रमानाथोऽपि एषामुदनुबन्धः पूर्व्वपठितधातवोऽर्थान्तरेषु चुरादयः स्युर्नत्वेते पृथग्धातव इति ज्ञापनार्थं

इत्याह। (१)। प्रजनो गर्भग्रहणम्, ऐश्यं ऐश्वर्य्यम्। चकारात् एषुच (एतदुभयार्थकः)।

९७। अथ वृच ङ वृतौ (वृच, भ्वा, आ) सप्तमस्वरी। ङ—वृचते वरं कन्या (२)।

९८। वच्च रोषसंहत्योः (वच्च, भ्वा, प) वच्चति।

९९। वाञ्छि काङ्क्षे (वाङ्छ, भ्वा, प) इ—वाङ्छति। नमध्यपाठेनैवेष्टसिद्धाविदनुबन्धो वेदेषूच्चारणभेदार्थः।

१००। अथ वष वधे (वष, भ्वा, प)

१०१। शष वधे (शष, भ्वा, प)

१०२। शिष वधे (शिष, भ्वा, प) वषति, शषति, शेषति।

१०२। शिष णिअसर्व्वोपयोगे (शिष, चु, भ्वा, प) असर्व्वोपयोगः परिशेषीकरणम्। णि—शेषयति कीर्त्तिं लोकः, अवशिष्टां करोतीत्यर्थः।

वेरतिशायने। शिष णिरनुवर्त्तते। णि—विशेषयति विशेषति सम्पत्त्या भूपं विधिः। (स्त्रिया शक्रं विशेषति। विशेषयति यो वाग्मी वाचा वाचस्पतेरपि इति हलायुधः। ९१)।

---

(१) भ्वादयो येऽस्य प्रभृतयो धातवस्त एवार्थान्तरेषु चुरादयो भवन्ति, न तु चुरादयस्ते पूर्वोक्तेभ्य पृथग्धातव इति ज्ञापनार्थमेव चुरादिष्वप्यादिषु उदनुबन्धः कृत इति रमानाथोक्तिसरणार्थं। उक्तञ्च धातुप्रदीपे उदित्त्वं णिज्विकल्पार्थमिति।

(२) अत्र वृतिर्वरणमावरणञ्च, तथाचामरटीकायां वधूशब्दव्युत्पत्तौ वृचते इति पचादित्वादचिति भरत।

**शिष्लृ धौ तु विशेषे थिप् क्षिपु दाहे क्षिपौ यलृञि ।**
**क्षेपे क्षिप कच शुष्यौ लृ शोषे श्लिष ङ श्लिषणे ।**

१०२ । शिष्लृ धौ तु विशेषे ( शिष, रुधा, प ) विशेष उपरञ्जनम् । लृ—अशिषत् । ध—विशिनष्टि स्मरं मूर्त्त्या ( यः ) इति हलायुधः । ८१ । मूर्त्तिविशिष्टं करोतीत्यर्थः । धौ—शेष्टा ।

१०३ । थिपु दाहे ) ( थिप, भ्वा, प )

१०४ । क्षिपु दाहे } (क्षिप, भ्वा, प) द्वौ कमात्षफान्तःस्यात्तृतीययुक्तौ । उ—थेपित्वा थिप्ता । क्षेपित्वा क्षिप्ता । थेपति । क्षेपति ।

१०४ । क्षिपौ य लृ ञि क्षेपे ( क्षिप, दिवा, प ) अन्तःस्यात्तृतीययुक्तः । औ—क्षेप्ता । य—क्षिप्यति । लृ—अक्षिपत् । आलिङ्गने तु अक्षिपत् । ञि—क्षिष्टोऽस्ति । क्षेप आलिङ्गनम्, यद्वोद्वयसंयोग इति यावत् । क्षिप्यति कामपीति जयदेवः । (मा न क्षिपः प्रियं प्रिये इति भट्टिः । ६ । १६ ) । क्षेपः सव्वङ्गीभावश्च । अलाकर्म्मकोऽयम् । क्षिप्यति हक्षे लता, लग्ना स्यादित्यर्थः ।

१०४ । क्षिप क च ( क्षिप, चु, प ) अन्तःस्यात्तृतीयुक्तः । क—क्षेपयति । चकारात् क्षेपे । (यः क्षिप्यति प्रियां प्रेम्ना क्षेपति द्विषतां पुरम् । दुःक्षेपाण्यपि कार्य्याणि धिया क्षेपयति द्रुतात्यादिति सर्व्वत्र हलायुधः । ६१ ) ।

१०५ । शुष्यौ लृ शोषे ( शुष, दिवा, प ) शोषः स्नेहरहितीभावः । य—शुष्यति धान्यमातपात् । औ—शोष्टा । लृ—अशुषत् ।

१०६ । श्लिष ङ श्लिषणे ( श्लिष, भ्वा, आ ) ऊस्वी । ङ—

शिक्षते । शिक्षणं विद्याग्रहणम् । अशिक्षतास्त्रं पितुरेव मन्त्रवदिति रघुः । २ । ३१ ।

**शूप् षूप प्रसवे त्सृच गमने षूर्क्ष सूर्क्षतु ।**
**अनादरे स्तृच् गत्यां स्नूप् प्रसवे हृषु हृष्य ञि ।**
**इर् हृष्टौ हृषुञि मोक्षोऽलीके ह्रेषृ ङ सर्पणे ।**

१०७ । शूप प्रसवे } (शूप, भ्वा, प)

१०८ । षूप प्रसवे } (षूप, भ्वा, प) द्वौ षष्ठस्वरिणौ क्रमात्तालव्यमूर्द्धन्यादी च । शूपति । षूपति । सुषूप । आद्यः केचिन्न मन्यते ।

१०९ । त्सृच गमने (त्सृच, भ्वा, प) सप्तमस्वरयुक्तसमध्यः । त्सृचति । तरीत्सृच्यते ।

११० । षूर्क्ष अनादरे } (षूर्क्ष, भ्वा, प)

१११ । सूर्क्ष तु अनादरे } (सूर्क्ष, भ्वा, प) द्वौ रेफयुक्तौ षष्ठस्वरिणौ क्रमान्मूर्द्धन्यदन्त्यादी च । सूर्क्षति दुष्टं लोकः । असूर्क्ष । ससूर्क्ष ।

११२ । स्तृच गत्याम् (स्तृच, भ्वा, प) सप्तमस्वरयुक्तसमध्यः । स्तृचति । तरीस्तृच्यते ।

११३ । स्नूप प्रसवे (स्नूप, भ्वा, प) षष्ठस्वरी । स्नूपति । सस्नूप ।

११४ । हृषु ञि इर् हृष्टौ } (हृष, दिवा, प, क्तावेट्)

११४ । हृष्य ञि इर् हृष्टौ } (हृष, दिवा, प) हृष्टिश्चित्तोत्साहः । उ—हर्षित्वा हृष्टा । य—हृष्यति लोकः सुखात् । ञि—हृष्टोऽस्ति । इर्—अहृषत् अहर्षीत् । अस्मान्नित्यं ङ इति

दुर्गः । पूर्व्वस्य व्रावेट्त्वान्नेम् डीख्वीत्यादिना द्रमो निषेधे निष्ठायां हृष्टः, शेषस्य हृषित इति भेदः ।

११४ । हृषु जि मोक्षोऽलीके ( हृष, भ्वा, प ) उ—हर्षित्वा हृष्ट्वा । जि—हृष्टोऽस्ति । अलीकं मिथ्याकरणम् । हर्षति कथां नीचः, मिथ्याकरोतीत्यर्थः ।

११५ । क्लेषृ ङ सर्पणे ( क्लेष, भ्वा, आ ) रेफयुक्तः । ऋ—अचिक्लेषत् । ङ—क्लेषते, चिक्लेषे ।

ङ ह्रेषृ च स्वनेऽश्वानां षान्ताः षोड़शकं शतम् ।

११६ । ङ ह्रे षृ च स्वनेऽश्वानां ( ह्रेष, भ्वा, आ ) (अश्वानां स्वनेऽर्थे ) । ङ—ह्रेषते घोटकः, जिह्रेषे । ऋ—अजिह्रेषत् । चकारात् क्लेषृ ङ च ( अश्वस्वनार्थकः ) । मधुरमधुरं क्लेषन्त्येते इति गणकृतानित्यत्वात् परस्मैपदम् ।

षान्ताः षोड़शकं शतम् ।

षोड़शकमिति षोड़शभिर्युक्तं शतमित्यर्थे दशादेर्डीयुते शताद्याविति डः, ततः स्वार्थे कः ।

---

## सान्तवर्गः ।

अस् भावेऽस्य इर्च्छीपे असन्नऽपार्थे जि लास ङः ।
उपवेशे शुभ्रसुन्दे कुंश्नसुतृप्तिपि च क्रसु ।
अय हृतौङ् क्रस् कुसि कि च भासने कास्य इर्च्छिपि ।

१ । अस् भावे ( अस, अदा, प ) भावः सत्ता । सा चेह विद्यमानतैव । ल—अस्ति विष्णुः ।

४। क्रसु स्य हृतौ (क्रस, दिवा, प) एतदादी द्वौ दन्त्यनकारयुक्तकक्षारादी। ङ—क्रसित्वा क्रस्त्वा। म—क्रसयति कान्त्या जगत् मान्यः (दीपयतीत्यर्थः, परत्र कुसि कि च भासने इति चकारानुकृष्टत्वादयं दीप्त्यर्थकोऽपि)। य—क्रस्यति खलः, कुटिलः स्यादित्यर्थः। (हृतिः कौटिल्यम्)।

४। क्रंसि कि भासने } (क्रन्स, चु, भ्वा, प)
५। कुंसि कि च भासने } (कुन्स, चु, भ्वा, प) शेषः प्रथमस्वरी। इ—क्रंस्यते, कुंस्यते। कि—क्रंसयति क्रंसति। कुंसयति कुंसति। चकारात् क्रसस्य च (भासनार्थकः) भासनं दीप्तिः।

५। कुस्य इ्लिषि (कुस, दिवा, प) य—कुस्यति बाला कान्तम्। इर्—अकुसत् अकोसीत्। अस्यान्वित्यं ङ इति दुर्गः।

## कास्ङ् कुशब्दे कुत्सक् ङ अवक्षेपे कसञ् गतौ।

६। कास्ङ कुशब्दे (कास, भ्वा, आ) कुशब्द इह रोगहेतुककुत्सितशब्दः। ङ—अचकासत्। ङ—कासते वृद्धः।

७। कुत्स क ङ ञ अवक्षेपे (कुत्स, चु, उ) प्रथमस्वरी दन्त्यवर्गाद्योपधः। अवक्षेपो निन्दा। यो न कुत्सयते कुत्समिति हलायुधः। २४८। ञ—कुत्सयति कुत्सयते। अयमात्मनेपदीत्यन्ये, कदाचित् परस्मैपदार्थो ञकारः।

८। कस ञ गतौ (कस, भ्वा, प) ञ—कासः कसः। विपूर्व्वोऽयं प्रफुल्लीभावे। तथा च प्रफुल्लोत्फुल्लसंफुल्लव्याकोपविकचस्फुटाः। फुल्लश्चैते विकसिते इत्यमरः। विकसति पङ्कजकलिका।

कसि कस् लङ घाते च ग्रस् कि ग्रासे ग्रस ग्लसु ।
ङ भक्षे लृ घसौ चाथ घसि ङ क्षरणे च्युसक् ।
हानौ चकास्ट्दलु दीप्तौ जस् क् वधेऽनादरे जसु ।
दृश्ये मोक्षे जसिक् रक्षे जर्त्सं झर्झे च लङ् णिसि ।
चुम्बे णसङ् कृतौ णास्टङ् तुसध्वाने त्रसक् धृतौ ।
ग्रहे निषेधे त्रसि कि भासि त्रस्य त्रसीण् भये ।

८ । कसि लङ घाते } (कनृष, अदा, आ)
८ । कस लङ घाते च } (कस, अदा, आ) घात इह ध्वंसना । इ—कंस्यते । ल, ङ—कस्ते कंसम् । चकाराद्गतौ च ।

९ । ग्रस कि ग्रासे (ग्रस, चु, भ्वा, प) रेफयुक्तः । कि—ग्रासयति फलं लोकः । ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय । इमं ग्रहणे पठन्ति केचित् ।

९ । ग्रसु ङ भक्षे } (ग्रस, भ्वा, आ)
१० । ग्लसु ङ भक्षे } (ग्लस, भ्वा, आ) द्वौ क्रमाद्रेफान्तःस्थातृतीययुक्तौ । उ—ग्रसित्वा ग्रस्त्वा । ग्लसित्वा ग्लस्त्वा । ङ—ग्रसते ग्लसते । हिमांशुमाशु ग्रसते इति माघः । २ । ४९ ।

११ । लृ घसौ च (घस, भ्वा, प) लृ—अघसत् । औ—घस्ता । चकाराद् भक्षे ।

११ । अथ घसि ङ क्षरणे (घनृस, भ्वा, आ) इ—घंस्यते । ङ—घंसते । अयं कैश्चिन्नमन्यते ।

१२ । च्युस क हानौ (च्युस, चु, प) अन्तःस्थादियुक्तः । कं—च्योसयति ।

१३। चकाॠ चल् दीप्तौ (चकास, अदा, प) ऋ—अचीचकासत् अचचकासत्। अनेकाचत्वात् सन्वद्भावविकल्पः। च—चकासति। लु—चकास्ति।

१४। जस क वधेऽनादरे (जस, चु, प) क—जासयति। (जिनौजसोज्जासयितुं जगद्द्रुहामिति माघः। १। ३७)।

१४। जसु ञ्यँ मोक्षे (जस, दिवा, प) ञ—जसित्वा जस्त्वा। ञ्यँ—अजसत् अजासीत् अजसीत्। असान्नित्यं ञ इति दुर्गः। य—जस्यति वत्सं गोपः।

१४। जसि क रक्षे (जन्स, चु, प) इ, क—जंसयति।

१५। जर्सँ झर्षँ प (जर्स, भ्वा, प) रेफयुक्तदन्त्यवर्गाद्योपधः। जर्सति। झर्षँ भर्त्सनमुक्तिश्च। चकाराद्वधे च।

१६। लङ् णिसि चुम्बे (णिन्स, अदा, आ) ल, ङ—निंस्ते। इ—निंस्यते।

१७। णस ङ कृतौ (णस, भ्वा, आ) कृतिरिह कुटिलीभावस्तत्करणञ्च। ङ—नसते खलः, कुटिलः स्यादित्यर्थः। नसते लतां वायुः कुटिलां करोतीत्यर्थः।

१८। णासृ ङ ध्वाने (नास, भ्वा, आ)
१९। तुस ध्वाने (तुस, भ्वा, प) ऋ—अननासत्। ङ—नासते। तोसति।

२०। तस क धृतौ ग्रहे निषेधे (तस, चु, प) एतदाद्यास्त्रयो रेफयुक्ताद्याः। क—त्रासयति मृगं व्याधः, धरति गृह्णाति निराकरोति वेत्यर्थः।

२०। तसि कि भासि (तन्स, चु, भ्वा, प) इ—तंस्यते। कि—तंसयति तंसति। भासि दीप्तौ।

२०। त्रसी या भये } ( त्रस, दिवा, प )
२०। त्रसी या भये } ( त्रस, भ्वा, प ) य—त्रस्यति। ई—त्रस्तः। ण—त्रेसतुः तत्रसतुः। त्रसति। (१)।

**तसिक्ष्वलङ्कृतौ तस् दस्ु इतूंत्क्षेपणे दसिक्।**
**भासि दसिङ् इशौ दंशे दासृञ् दानेनंदास् वधे।**

२१। तसि क्ष्वलङ्कृतौ ( तनुस, चु, भ्वा, प ) इ—तंस्यते। कि—तंसयति तंसति चारो जनम्।

२१। तसु इर् उत्क्षेपणे } ( तस, दिवा, प )
२२। दसु इर् उ उत्क्षेपणे } ( दस, दिवा, प ) य—तस्यति, दस्यति धूलिं वायुः। उ—तसित्वा तस्त्वा, दसित्वा दस्त्वा। इर्—अतसत् अतासीत् अतसीत्, अदसत् अदासीत् अदसीत्। अस्यान्नित्यं च इति दुर्गः।

२२। दसिक भासि ( दनुस, चु, प ) इ, क—दंसयति। भासि दीप्तौ।

२२। दसि ङ क इशौ दंशे ( दनुस, चु, भ्वा ) इशिरिति पश्यतेरौणादिककिप्रत्यये रूपम्। इ, ङ, क—दंसयते फलं शिशुः, पश्यति, दशति चेत्यर्थः। भट्टमल्लमते दंश इष सन्ताषः।

२३। दासृ ञ दाने ( दास, भ्वा, उ ) ऋ—अददासत्। ञ—दासति दासते।

२३। र न दास वधे ( दास, स्वा, प ) र—वैदिकः। न—दास्नोति।

---

(१) एवं केचिद्भ्वादौ केचिच्च दिवादौ पठन्ति, तदुभयमतसंग्रहार्थमाचार्य्येण भ्वादिकादेव भ्रमक्लमेत्यादिना विकल्पेन श्यन् विहित इति बोध्यम्।

**भ्रस् कुत्क्षेपे भ्रस् गु चोञ्छे धूस् क धूशे ध्वन्सु लृङ् गतौ।**
**भ्रंशे पेस् पिस् गत्यां पिस् कपट्टार्थे च प्युस दृर्।**
**भागे दृर् लुस दाहे च प्रस पङ् प्रसवे ततौ।**

२४। भ्रस् कुत्क्षेपे (भ्रस, चु, प) क—भ्रासयति।

२५। भ्रस ग ञ च उञ्छे (भ्रस, क्र्या, प) ग—भ्रस्नाति ग्रासं दीनः। ञ—भ्रसित्वा भ्रस्त्वा। चकारात् भ्रसक च (उञ्छार्थकः)।

२६। धूस क धूशे (धूस, चु, प) पठसटी। धूशः कान्तिकृतिः। क—चन्दनो धूसयत्यङ्गम्। भक्तिपधूसरितः स्फरिससटमिति जानकीचरणोयमकाद्दन्त्यान्त एवायमिति रमानाथः। स्वमते तालव्यमूर्द्धन्यान्तोऽप्ययम्।

२७। ध्वन्सु लृङ गतौ भ्रंशे (ध्वन्स, भ्वा, आ) ञ—ध्वंसित्वा ध्वस्त्वा। लृ—अध्वसत्। ङ—ध्वंसते। भ्रंशोऽधःपतनम्।

२८। पेस्ट गत्याम् } (पेस, भ्वा, प)
२९। पिस्ट गत्याम् } (पिस, भ्वा, प) ट—अपिपेसत्। पिपेसतुः। पिपिसतुः।

२९। पिस क पट्टार्थे च (पिस, चु, प) क—पेसयति। मूर्द्धन्यान्तोऽयमिति केचित्। पट्टार्थो निकेतनहिंसाबलदानानि। चकाराद्गत्याञ्च।

३०। प्युस दृर्विभागे (प्युस, दिवा, प) अन्तःस्थाद्ययुक्तः। य—प्युस्यति धनं दायादः। दृर्—अप्युसत् अप्योसीत्। अस्मान्नित्य ञ इति दुर्गः। (भागो विभजनम्)।

३१। दृर्लुस दाहे च (लुस, दिवा, प) अन्तःस्थात्तृतीय-

युक्तः। इर्—अपुसत् अपोसीत्। य—पुष्यति। चकाराद् विभागे च।

३२। प्रष म षङ प्रसवे ततो ( प्रष, भ्वा, भ्या ) रेफयुक्तः। म—प्रषयति। प—प्रषा। ङ—प्रषते कीर्त्तिं विद्या, प्रसूते विस्तारयति चेत्यर्थः।

## पसिक् नाशे पस्क पसञ् षान्तवत् पिसि कि त्विषि।

३३। पशि क नाशे ( पनृष, चु, प ) नाश इह नष्टीकरणम्। इ, क—पंशयति पापं गङ्गा।

३३। पस क षान्तवत् } ( पस, चु, प )

३३। पस ञ षान्तवत् } ( पस, भ्वा, उ ) क—पासयति। ञ—पषति पषते। पृथक् पाठादाद्यो न ञित्। अन्यथा पसकि ञ इत्यनेनैवेष्टसिद्धौ पृथक्पाठोऽनर्थः स्यात्। षान्तवदिति पष क बन्धे, पष ञ बाधे ग्रन्थे इतिवदर्थबोधक इत्यर्थः।

३४। पिसि कि त्विषि ( पिनृष, चु, भ्वा, प ) इ—पिंसते। कि—पिंसयति पिंसति। त्विषि दीप्तौ।

## पुंस क मर्द्दे बुस्तेर्शनौ बिस्येर्ष्येपेक् ङ भर्त्स ञ।
## भर्त्सेर्भस् लि द्युतौ व्याय म्यास म्यास् ङ्ण्टु षान्तवत्।

३५। पुंस क मर्द्दे (पुंस, चु, प) चोऽयवर्गशेषोपधः, सयोगान्म-कारस्यानुस्वारः। तेन क्विपि पुंसोऽसुङ्गावित्यनेनासुङि सकार-परत्वाभावादनुस्वारस्य पुनर्मकारे पुमान्। न च नकारजावनु-स्वारपञ्चमाविति नियमान्नकारोपध एवायमिति वाच्यम्, चुतसुतिरितिद्वयोस्तालव्यमकारादिपाठेन तद्वचनस्य व्यभिचार-

दर्शनात्। (१)। मर्द्दोऽभिमर्द्दनम् (पीड़नमित्यर्थः) क—पुंसयति खलं राजा।

३६। वुसोत्सर्गे (वुस, दि, प) य—वुस्यति जलं मेघः, त्यजतीत्यर्थः। इर्—अवुसत् अवोसीत्। असान्नित्यं ङ इति दुर्गः। वुसं कडङ्गरः।

३७। विसोत्क्षेपे (विस, दिवा, प) य—विस्यति। इर्—अविसत् अवेसीत्। असान्नित्यं ङ इति दुर्गः।

३८। क ङ भर्त्स ञ भर्त्से (भर्त्स, चु, ङ) रेफयुक्तदन्त्यवर्गाद्योपधः। भर्त्सो भर्त्सनम्। भर्त्सनन्त्वपकारगीरित्यमरः। क, ङ—भर्त्सयते जनं राजा। ञ—भर्त्सयति भर्त्सयते। अयमात्मनेपदीत्यन्ये, कदाचित् परस्मैपदार्थो ञकारः।

३९। र भस लि दीप्तौ च (भस, हा, प) र—वैदिकः। लि—बभस्ति। चकाराद्भर्त्से च।

४०। अथ भ्रास्ङ क या टु शान्तवत् (भ्रास, दिवा, आ)
४०। भ्रास ङ क या टु शान्तवत् (भ्रास, भ्वा, आ)

द्वौ रेफयुक्तौ। य, ङ—भ्रास्यते। ङ—भ्रासते। क—अबभ्रासत्। (२) या—भ्रेसे बभ्रासे। टु—भ्रासथुः। शान्तवदिति भासि, तौ रथौ चेत्यर्थः। (शान्तवदित्यनेन तालव्यशकारान्त

---

(१) अस्यायमाशयः—सुतसुव्रतिरित्युभयोस्तालव्यशकारः कुत्रापि निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात् सकारत्वं नाप्नोति। तस्मादेवंविधस्थले सकारजः शकारस्य इति नियमस्य यथा व्यभिचारस्तथालयोति।

(२) अनयोर्धात्वोर्ह्रस्वऋकारानुबन्धः प्राचीनमतानुसारेणैवोक्तः। स्वमते तु भ्राजभासेत्यादिसूत्रेणानयोर्विकल्पेन ह्रस्वविधानात् अबिभ्रसत् अबभ्रासदिति रूपद्वयमेवेति बोध्यम्।

भासधातुवद्भिमावपि दीप्त्यर्थकौ रस्थानजातनकारौ च स्याता-मित्युक्तम्) तेन भ्नास्य भ्नास ङ ण टु भाषि इत्यपि।

४१। भ्नास्य ङ ऋ ण टु भासि } (भ्नास, दिवा, या)
४१। भ्नास ङ ऋ ण टु भासि } (भ्नास, भ्वा, या)

य, ङ—भ्नास्यते। ङ—भ्नासते। ऋ—अबभ्नासत्। ण—भ्नेसे बभ्नासे। टु—भ्नासथुः। केचित्तु भास भ्नास्य ङ ण टु इति पूर्व्वं रेफयुक्तमनुबन्धशून्यं शेषं दन्त्यनकारयुक्ताद्यं पठित्वा भ्नास्यदित्यस्य भासीत्येवार्थं व्याख्याति तद्वेयं, तथात्वे निःसन्देहार्थं भ्नास्तवदिति नोक्ता दीपने इत्येवावदिष्यत्।

भासृ ङ् दीप्तौ भ्यसङ् भीत्यां सुसेर्छिदि मसिर्य ई।
परिमाणे परीणामे इर्यस्य यतने रस।
शब्दे रासृङ् ङमि लसक् श्लिष्टयोगे लस श्लिषि।
क्रीडे वीस भ्रूस् कि वधे वसक् स्नेहच्छिदोर्घ्न यु।
वसिर् स्तम्भे वसै श्री निवासे वस ङ्ल स्तुतौ।

४२। भासृ ङ दीप्तौ (भास, भ्वा, आ) ऋ—अबीभसत् अबभासत्। ङ—भासते।

४३। भ्यस ङ भीत्याम् (भ्यस, भ्वा, आ) ङ—भ्यसते।

४४। सुसेर्छिदि (सुस, दिवा, प) छिदि खण्डने। य—सुस्यति विपक्षं चतुरः। इर्—असुसत् असोसीत्। अस्यान्तित्यं ङ इति दुर्गः।

४५। मसि यँ ईं परिमाणे परीणामे (मस, दिवा, प) इर्—अमसत् अमासीत् अमसीत्। अस्यान्तित्यं ङ इति दुर्गः।

य—मस्यति धान्यं मस्ती, परिमातीत्यर्थः। ई—मस्तः। मसीणाम इति कस्यचिदनुरोधात्।

४६। ञियसु यतने (यस, दिवा, प) इर्—अयसत् अयासीत् अयसीत्। अस्यान्नित्यं ञ इति दुर्गः। य—प्रयस्यति। समसंप्रसमेत्यादिना केवलात् सम्पूर्व्वाच्चाकात् श्यनि विकल्पनात् यस्यति यसति संयस्यति संयसति। क्त—यसित्वा यस्त्वा। यतनं यत्नः।

४७। रस शब्दे (रस, भ्वा, प) रसति।

४८। रासृ ङ् अपि (रास, भ्वा, आ) दन्त्यान्तोऽयमिति महेशः। रासभः खरः। दुर्गसिंह इमं तालव्यान्तं मत्वा क्रमं कृत्वा रश्मिपर्य्यं मुत्वादितवान्। इ—अरराशत्। ङ—रासते। अपिशब्दात् शब्दे।

४९। लस क शिल्पयोगे (लस, चु, प) क—लासयति कुशलो नृत्ये, शिल्पं युनक्तीत्यर्थः।

४९। लस श्लिषि क्रीड़े (लस, भ्वा, प) लसति।

५०। शीष कि वधे } (शीष, चु, भ्वा, प)

५१। मूष कि वधे } (मूष, चु, भ्वा, प) द्वौ रेफयुक्तदीर्घिणौ। कि—शीषयति शीषति; मूषयति मूषति।

५२। मसक् खेदविरोध (मस, चु, प) खेदः प्रीतिः। इ—अमसयति मन्युः। अकारादृष्टे।

५३। ष्णु असिर् सान्त्वे (अस, दिवा, प) य—अस्यति। क्त—असित्वा अस्त्वा। इर्—अस्यत् अस्यासीत् अस्यसीत्। अस्यान्नित्यं ञ इति दुर्गः। अत्र इर मध्यमादित्तोभावः। द्वौ अस्त्वादि-मिति रमानाथः। ।९।

५२। वसँ औ निवासे (वस, भ्वा, प) ऐ—उष्यात्। औ—अवात्सीत्।

५३। वस ल ङ वृतौ (वस, अदा, आ) वृतिराच्छादनपूर्वकं धारणम्। ल, ङ—वस्ते वस्त्रं लोकः।

## वेस्वितौ श्वस् वलु प्राणे ग्रस्लुर् स्वप्ने उग्रस् वधे।

५३। वेस् ऋ वृतौ (वेस, भ्वा, प) ऋ—अविवेसत्। विवेसतुः। वृतौ गत्याम्।

५४। श्वस वलु प्राणे (श्वस, अदा, प) वकारयुक्तः। व, लु—श्वसिति लोकः, जीवतीत्यर्थः। आश्वसेयुर्निशाचराः (१) इति भट्टौ (१८।२१) न विश्वसेत् पूर्व्वविरोधितस्येति पञ्चतन्त्रे, न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेदित्यादौ च गणकृतमनित्यमिति न्यायात् शपः स्थितौ सिद्धम्। अथवा श्वादेराकृतिगणत्वात्तत्र इस्वम्। वस्तुतस्तु पचादित्वादचि श्वस इवाचरतीति क्वौ साध्यम्।

५५। ग्रस लुर स्वप्ने (ग्रस, अदा, प) लु—ग्रस्ति। र—वैदिकः।

५५। उ ग्रस वधे (ग्रस, भ्वा, प) उ—ग्रसित्वा ग्रस्त्वा। ग्रसति।

## आङ्पूर्व्वास्तुग्रसिङ्ग्रासुङ्ग्रासुलङ्जाग्रिपिस्मृताः।

५५। आ+ग्रसि ङाग्रिपि (आ+ग्रस्, भ्वा, आ)
५६। आ+ग्रासु ङाग्रिपि (आ+ग्रास, भ्वा, आ)
५६। आ+ग्रासु ल ङाग्रिपि (आ+ग्रास, अदा, आ)

---

(१) भट्टौ आश्वसुप निशाचरा इति पाठो दृश्यते। तत्र "आश्वसेयुरिति पाठान्तरम्। आश्वसा इवाचरेयुरित्यर्थः" इति जयमङ्गला।

आङ्पूर्व्वा इति केवलानामन्यपूर्व्वाणाञ्च प्रयोगनिषेधार्थम् । किन्तु "इदं गुरुभ्यः पूर्व्वेभ्यो नमोवाकं प्रशास्महे" इत्युत्तरचरिते तृतीयः प्रपूर्व्वोऽपि दृश्यते । इ—आशंस्यते । ङ—आशंसते । ङ—आशासते । उ—आशासित्वा आशास्त्वा । उदनुबन्धसामर्थ्यात् क्त्वाचो न यप् । कभावाभावादिति गोविन्दभट्टः । किन्तु अस्योदनुबन्धफलं छन्दस्येवेति धातुप्रदीपः । ल, ङ—आशास्त । शासङिक्हसे इत्यत्र अदादीयशास एव ग्रहणादस्योपधाया इकारो न स्यात् । आशीरिष्टार्थाशंसनम् । कीर्त्तिमाशंसते परामिति हलायुधः । २२ । एते इच्छायामित्यन्ये ।

शासु व्वलु शासने शन्सु हिंसास्तुत्यो र्ये त्वट प्यासु ।
मि निवासे प्सुस्ञ भक्षे पस् लुस्खोपे लृ स्नसु ङ ।
भ्रंशे ङ स्नसु प्रसादे ह्रस ह्लस रवे हसे ।
हासे हिस् विकि हिंसे ते सान्तारस्यु पञ्चपष्टिधा ।

५६ । शास् व्वल् शासने ( शास, अदा, प ) उ—शासित्वा शिष्टा । च—शासति । लु—शासि । शास्ति यथाज्ञया राज्ञः स सम्राडित्यमरः ।

५७ । शन्स हिंसास्तुत्योः ( शन्स, भ्वा, प ) तालव्यादिः । उ—शंसित्वा शस्त्वा । यः शंसति सतां वृत्तिमिति हलायुधः ।२२। अनेकार्थत्वात् कथनेऽप्ययम् । यथा रघौ—शशंस वाचा पुनरुक्तयेवेति ( २ । ६८ ) न मे ह्रिया शंसति किञ्चिदीप्सितमित्यादि च ( ३ । ५ ) ।

५८ । य स्ट प्सुस भि निवासे (प्यास, दिवा, प) गृहंन्यादि-

दन्त्यनकारयुक्तः । य—स्रस्यति । ङ—असस्रत् । उ—स्रसित्वा स्रस्त्वा । णि—स्रसयति स्रासयति ।

५८। ष्णुस अदने ( ष्णुस, दिवा, प ) मूर्द्धन्यादिर्दन्त्यनकारयुक्तः । य—स्नुस्यति । सुष्णोस ।

६०। षस स्वप स्वापे ( षस, अदा, प ) मूर्द्धन्यादिः । लु—सस्ति । र—वैदिकः । स्वापः शयनम् ।

६१। ङ स्रन्भु ङ भ्रंशे ( स्रन्भु, भ्वा, आ, द्युतादिः रेफयुक्तदन्त्यादिः । ङ—असस्रसत् । उ—स्रसित्वा स्रस्त्वा । ङ—स्रंसते । भ्रंशोऽधःपतनम् ।

६२। ङ स्रन्भु प्रसादे ( स्रन्भु, भ्वा, आ ) रेफयुक्तादिः । ङ—स्रंसते । उ—स्रंसित्वा स्रस्त्वा । प्रसादः प्रसन्नीभावः ।

६२। ह्रस रवे ( ह्रस, भ्वा, प )

६३। ह्लस रवे ( ह्लस, भ्वा, प ) द्वौ क्रमाद्रेफान्तःस्थाह्लतीययुक्तौ । ह्रसति । ह्लसति । रवः शब्दः ।

६४। हसे हासे ( हस, भ्वा, प ) ए—अहसीत् । ( एदित्त्वात् हसादेः सेम इत्यादिना न वृद्धिः ) हासोऽपूर्व्वप्रीत्या कपोलस्य विकसितीकरणम् । तत्रैवाकर्म्मकः । हसति शनैः शुष्कदन्तितसुधीति गोवर्द्धनः । यद्वा कस्यचिद्दोषादिकमुद्दिश्य तत्स्यात्तदा सकर्म्मकः । हसन्त्यमन्तर्वेलमर्व्वता रवेरिति श्रीहर्षः । हसन्ति साधवश्चौरम् ।

६५। हिस धिकि हिंसे ( हिन्स, रुधा, चु, भ्वा, प ) ध—हिनस्ति । चु—हिंसयते । णि—हिंसयति हिंसति । इत्यर्थेनैव पाक्षिक चुरादित्वे सिद्धे किकरणं भ्वादित्वार्थम् ।

ते सान्ताःस्युः पञ्चषष्टिधा । ( पञ्चषष्टिप्रकाराः ) ।

## ह्रान्तवर्गः।

**अर्हिक् भासेऽहिङ् गतेऽर्ह योग्यत्वेऽर्हक् च पूजने।**

१। अर्हि क भासे (अनृ, चु, प) इ, क—अंहयति। भासो दीप्तिः।

१। अहिङ गते(अनृ,भ्वा,आ)इ—अंहते। ङ—अंहते।

२। अर्ह योग्यत्वे (अर्ह, भ्वा, प) अर्हति विप्रो वेदं पठितुम्। सकर्म्मकोऽपि। यद्दानतपसस्य कला नार्हन्ति षोडशीमिति।

२। अर्ह क च पूजने (अर्ह, चु, प) क—अर्हयति। चकारादर्ह च।

**ईह ङ् चेष्टे वहिर् त्वर्ह ऊहङ् तर्के ग्रह स्तह्न।**
**क्यादाने ग ग्रह ञ च गर्ह गह्ल ङ कुत्सने।**

३। ईह ङ चेष्टे (ईह, भ्वा, आ) दीर्घादिः। ङ—ईहते। ऐहिष्ट तं कारयितुं कृतात्मेति भट्टिः। १। ११। सकर्म्मकोऽपि। सर्व्वः स्वार्थं समीहते इति माघः। २। ६५। भामं भ्रमादपि नेहते इति जयदेवः।

४। वहिर् त्वर्ह (वह, भ्वा, प) ऋत्वादिः। इर्—औहत् औहीत्। अर्ह इह वधः।

५। ऊह ङ तर्के (ऊह, भ्वा, आ) दीर्घादिः। सन्देहाद्विचारस्तर्कः। ङ—ऊहते तर्कं धीरः। यथाः समूहन्निव दिग्विकीर्णमिति गेर्व्याख्योचो ढेचेति परास्मैपदविधानात् चलन्तम्। अनुक्तमप्यूहति पण्डितोजन इति गणकृतानित्यत्वात्, पचादित्वादनि ऊह इवाचरतीति क्वौवा साध्यम्।

६ । ग्रह कि आदाने } ( ग्रह, चु, श्वा, प )
७ । ग्लह कि आदाने } ( ग्लह, चु, श्वा, प ) द्वौ कमाक्रेफान्त:स्यात्‌तृतीययुक्तौ । अ—अग्रहीत् अग्राहीत् ; अग्लहीत् अग्लाहीत् । कि—ग्राहयति ग्रहति ; ग्लाहयति ग्लहति । आद्य: कैश्चिन्न मन्यते, शेषोऽपि श्वादिरात्मनेपद्येव मन्यते ।

६ क । ग ग्रह ञ च ( ग्रह, क्रया, उ ) ग, अ—गृह्णाति गृह्णीते । चकारादादाने ।

८ । गर्ह ङ कुत्सने } ( गर्ह, श्वा, आ )
९ । गल्ह ङ कुत्सने } ( गल्ह, श्वा आ ) द्वौ कमाक्रेफान्त:स्यात्‌तृतीययुक्तौ । ङ—गर्हते, गल्हते । कुत्सनं निन्दा ।

कि गर्ह च ङ गाह्र विलोडे गुह्न ञ संवृतौ ।

८ क । कि गर्ह च ( गर्ह, चु, श्वा, प ) रेफोपधः । कि—गर्हयति गर्हति । चकारात्कुत्सने ।

१० । ङ गाह विलोडे ( गाह, भ्वा, आ ) ङ—गाहन्तां महिषानिपानसलिलमिति प्रयुज्यते । ङ—अगाहिष्ट अगाढ ।

११ । गुह्न ञ संवृतौ ( गुह, भ्वा, उ ) प्रथमस्वरौ । ञ—अगूहीत् अघुक्षत् । ञ—गूहति गूहते । गुहोणोदरिति दीर्घः ।

चहवस चह शाठ्ये ङ जेह्र यत्नेऽथ गाह्य औ ।
वन्धे टह घ टनृह्नश हिंसे तुह दुहिरर्द्दने ।

१२ । चह कम शाठ्ये } ( चह, चु, प )
१२ । चह शाठ्ये } ( चह, भ्वा, प ) क—चहयति । चहति खलः, साधुं प्रतारयतीत्यर्थः ।

१३। ङ जेहृ यत्ने ( जेह, भ्वा, आ ) ङ—जेहते, जिजेहे। षट—अजिजेहत्।

१४। णश णहृ औ बन्धे ( णह, दिवा, उ ) य, ञ—नह्यति नह्यते। औ—अनात्सीत् अनद्ध।

१५। तृहू धू हिंसे } ( तृह, रुधा, प )
१६। तृन्हू य हिंसे } ( तृन्ह, तुदा, प ) द्वौ अनुस्वारिणौ। ध—तृणेढि। ऊ—अतर्हीत् अतृहत्। ऊ—अतृंहीत् अतृक्षत्। य—तृंहति।

१७। तुहिर् अर्द्दने } ( तुह, भ्वा, प )
१८। दुहिर् अर्द्दने } ( दुह, भ्वा, प ) इर्—अतुहत् अतोहीत्। तोहति। इर्—अदुहत् अदोहीत्। दोहति। अर्द्दनमिह वधः।

## दुह लञौ दुहि ल्ट द्रुह्य जिघांसे दिह्ल औ लिपि।

१८। दुह ल ञौ दुहि ( दुह, अदा, उ ) धुक् दोहनम्, तच्च व्यक्तीकरणमिति धातुपारायणिकाः। ल, ञ—दोग्धि दुग्धे गां दुग्धं गोपः। औ—अधुक्षत्। स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनीति किराते ( १। १८ ) वसूनीति कर्म्मणो विद्यमानतया कर्म्मकर्त्तृत्वाभावात् स्खलितमित्येके। दुहादेरप्रधानकर्म्मविषये कर्म्मकर्त्तृत्वे प्रधानकर्म्मप्रयोगो दुर्निवार इति कुलचन्द्रः। स्वमते तु अतएवानयोर्द्वेऽपि ढषत्वमिति, पचदुहोः कर्म्मणि विद्यमानेऽपि कर्म्मकर्त्तृत्वमित्यर्थः।

१९। ल्ट द्रुह्य जिघांसे ( द्रुह, दिवा, प ) जिघांस द्रुह अनिष्टाचरणमिति विद्यानिवासः। ल्ट—अद्रुहत्। य—द्रुह्यति खलः साधवे। ऊ—द्रोहिष्यति ध्रोक्ष्यति।

२०। दिह व ओ लिपि ( दिह, अदा, उ ) दिह उपचये इति प्राञ्चः। उपचयो वृद्धिसात्करणञ्च। ल, अ—देग्धि दिग्धे देहः, प्रतिदिनमुपचितः स्यादित्यर्थः। देग्धि सौधं सुधया लेपकः उपचितं करोतीत्यर्थः। औ—अधिक्षत्।

दहौ दाहे दहिक् दीप्तौ दाहे द्राहृङ जागरे।
निक्षेपे दृहि दृह् दृहौ स्निहङ् गत्यां वर्हवल्ह ङ।
स्तुतिहिंसादानवाक्षु मह पूजे महिक् त्विषि।

२१। दहौ दाहे ( दह, श्वा, प ) औ—अधाक्षीत्। दाहो भस्मीकरणम्। दहत्यग्निः काष्ठम्।

२१। दहिक दीप्तौ दाहे (दन्ह, चु, प) इ, क—दंहयति।

२२। द्राहृ ङ जागरे निक्षेपे ( द्राह, श्वा, आ ) ऋ—अदद्राहत्। ङ—द्राहते। ( द्राहते च नियागमे इति हलायुधः। १०८। जागर्तीत्यर्थः )।

२३। दृहि दृहौ } ( दृन्ह, श्वा, प )
२३। दृह दृहौ } ( दृह, श्वा, प ) द्वौ समस्वरिणौ।
इ—दृंह्यते। दृंहति। दर्हति।

२४। स्निह ङ गत्याम् ( स्निह, श्वा, आ ) अन्तःस्थातृतीययुक्तः। ङ—स्नेहते।

२५। वर्ह ङ स्तुतिहिंसादानवाक्षु } ( वर्ह, श्वा, आ )
२६। वल्ह ङ स्तुतिहिंसादानवाक्षु } ( वल्ह, श्वा, आ )
ङ—वर्हते, वल्हते। ( स्तृतिराच्छादनं, वाक् कथनम् )।

२७। मह पूजे ( मह, श्वा, प ) महति। ( नित्यं महति माहेयीमिति हलायुधः )। ३४।

.२७। मङ्खिङ् लिपि (मनुङ, चु, प) इ, क—मंखयति। लिपि दीप्तौ।

## मङ्खिङ् द्रङ्खौ तु मुह्यृ ल्ट जि वैचित्त्ये मिह्ौ सिचि ।

२७। मङ्खिङ् द्रङ्खौ तु (मनुङ, भ्वा, घा) इ—मंखते। द—मंङ्खते।

२८। मुह्यृ ल्ट जि वैचित्त्ये (मुह, दिवा, प) वैचित्त्य ज्ञानरहितीभावः। य—तेन मुह्याति चिराय मे मन इति मुरारिः। ल—मोहिष्यति मोक्ष्यति। ल्ट—अमुहत्। जि—मुग्धः मूढोऽस्मि।

२९। मिह्ौ सिचि (मिह, भ्वा, प) ण्यौ—अमिक्षत्। मेहति। (सिच् क्षरणम्)।

## माहृञ् माने रिह् वधे जि ज् रुहौ जन्यां रह त्यजि ।

३०। माहृञ माने (माह, भ्वा, उ) ऋ—अममाहत्। ऋदनुबन्धस्थाने पठस्वरानुबन्ध इत्येके। ञ—माहति माहते।

३१। रिह वधे (रिह, भ्वा, प) रेहति।

३२। जि ज रुहौ जन्याम् (रुह, भ्वा, प) जि—रूढोऽस्मि। ज—रोढः रूढः। जनिर्जन्म। रोहति जन्तुः जायते इत्यर्थः। रुह जन्मप्रादुर्भावे इति प्राञ्चः। जन्मप्रादुर्भावयोरेकोऽर्थ इति गोविन्दभट्टचतुर्भुजमिश्रौ। रमानाथस्तु जन्म असदुत्पत्तिः, प्रादुर्भावः स्फुर्त्तिरितिभेदमाह।

३३। रह त्यजि (रह, भ्वा, प) त्यजि वर्ज्जने। रहति सुखं दीनः।

रहि गत्यां लुष्टौ गार्ध्ये लिहौञ् स्वादे कवर्हं वधे ।
दीप्तौ वर्ह वल्हङ् श्रैष्ठ्ये वल्हक् त्विषि इहि क्वपि ।

३३ । रहि गत्याम् (रनृह, भ्वा, प) इ—रंह्यते । रंहति ।

३४ । लुहौ गार्ध्ये (लुह, भ्वा, प) औ—अलुहत् । गार्ध्यं लब्धुमिच्छा । लोहति धनं लोकः ।

३५ । ल लिहौ ञ स्वादे (लिह, अदा, उ) ल, ञ—लेढ़ि पुष्पाणि षट्पदः लीढ़े । औ—अलिहत् ।

३६ । क वर्हं वधे दीप्तौ (वर्ह, चु, प) रेफोवधः । क—वर्हति ।

३६ । वर्ह ङ श्रैष्ठ्य ) (वर्ह, भ्वा, आ)
३७ । वल्ह ङ श्रैष्ठ्ये ) (वल्ह, भ्वा, आ) द्वौ क्रमाद्रेफान्तःस्यात्तृतीयोपधौ । ङ—वर्हते, वल्हते धनी श्रेष्ठः स्यादित्यर्थः । (निवर्हयति मुष्टारीन् तपसा यो निवर्हते इत्युभयत्र हलायुधः । २५२) ।

३७ । वल्ह क त्विषि (वल्ह, चु, प) अन्तःस्यात्तृतीयोपधः । क—वल्हयति । त्विषि दीप्तौ ।

३८ । इहि क्वपि (इनृह, चु, भ्वा, प) एतदाद्याः पञ्च सप्तमस्वरिणः । इ—इंह्यते । कि—इंहयति, इंहति । अपिग्रह्णात् त्विषि ।

इहिर्ध्वनद्योर्वृंहिं च इह इद्वौ ञु इऊद्यमे ।
वेह वाह्लङ यतेऽथ वहिङ् इद्वौ वहिक् त्विषि ।

३८ । इहिर्ध्वनद्यौः (इह, भ्वा, प) इर्—अइहत् अवंहीत् । ध्वनः शब्दः । घद्धिर्वृद्धिः ।

३८। इदि च ( इनृच, भ्वा, प ) इ—इंह्यते । बृंहिरे गजपतय इति माघे आत्मनेपदप्रयोगः प्रामादिक इति वल्लभः । चकारात् ध्वनद्यौः । ध्वनश्चेह कर्मिककर्तृकः, इंहितं करिगर्ज्जितमित्यमरात् । इंहितं करिगर्ज्जायां शब्दमात्रेऽपि कथ्यत इति शब्दमहार्णवात् कदाचिदन्यकर्तृकोऽपि, तेन श्रीहर्षचरिते सिंहइंहितमिति बाणभट्टप्रयोगः ।

३८। इह वृद्धौ (इह, भ्वा, प) बर्हति । इदिध्वनद्यौरित्यनेनैवेष्टसिद्धावस्य पाठो वृद्धौ (अर्थे) इरनुबन्धवर्जनार्थः । किन्त्वनेनैवेष्टसिद्धौ तत्र इद्ग्रिहणं परत्रानुवृत्त्यर्थमेव । अयं धातुः कैश्चिन्न मन्यते ।

३८। ऋ ह्रुद्यमे (इह, तुदा, प ) श—इहति । ञ—अबईीत् अइह्यत् ।

३६। वेहङ यत्ने } ( वेह, भ्वा, आ )
४०। बाहङ यत्ने } ( बाह, भ्वा, आ ) ङ—अविवेहत, अववाहत् । ङ—वेहते, विवेहे, वाहते ववाहे ।

४१। अथ वहि ङ वृद्धौ ( वनृह, भ्वा, आ ) इ—वंह्यते । ङ—वंहते ।

४१। वहि क त्विषि ( वनृह, चु, प ) इ, क—वंहयति । त्विषि दीप्तौ ।

वहे औ प्रापणे ण्युत्तू ल्ट उद्वारे ण्यिह्र य् ल्ट जि ।
प्रीतौ ण्यिहक् स्नेहने पह्य कि शक्तौ पह जङ च ।

४१। वहे औ प्रापणे ( वह, भ्वा, उ ) प्रापणमिह ज्ञन्तस्य रूपम् । ऐ—उह्यात् । ञ—वहति वहते भारं ग्रामं जनः, प्रापय-

नीत्यर्थः। औ—अवाक्षीत्। अर्थान्तरेऽकर्म्मकोऽयम्। जम्बूसरिद्वहति सीमनि कम्बुकण्ठीति नैषधम्। मन्दं मरुद्वहति गर्ज्जति वारिवाह इति महानाटकम्। ववाह रक्तं पुरुषास्ततो जाताः सहस्रश इत्यादिसिद्ध्यर्थमोद्यादिकश्च वहधातुं मन्यते वर्णदेशनामरणादेशौ। वस्तुतस्तु बहुवाद्यसम्मतत्वादीश्वादिरनेनोपेक्षितः। ववाह इत्यादिप्रयोगस्य वाहृड यत्ने इत्यस्मान्नयाक्षतानित्यत्वात् परस्मैपदे सिद्धिः, अनेकार्थत्वात् सुस्रावेत्यर्थः। अथवा वध इत्याह इत्येव व्याख्यानम्।

४१। ष्णुह्‌ ऌ उद्गारे (ष्णुह, दिवा, प) मूर्द्धन्यादिरयम्। एतदाद्याश्चत्वारोदन्त्यनकारयुक्ताद्याः। उद्गारोवान्तिः। य—स्नुह्यत्यन्नं लोकः। क—स्नोहिष्यति स्नोक्ष्यति। ऌ—अस्नुहत्।

४२। ष्णिह ञ जि प्रीतौ (ष्णिह, दिवा, प) क—स्नेहिष्यति स्नेक्ष्यति। य—स्निह्यति बन्धुः। ऌ—अस्निहत्। जि—स्निग्धः स्नीढोऽसि।

४३। ष्णिह क स्नेहने (ष्णिह, चु, प) स्नेहनं स्निग्धीभावः। क—स्नेहयति वर्त्तिका तैलेन।

४४। षह कि शक्तौ (षह, दिवा, चु, भ्वा, प) शक्तिरिह दैवादिकशकधातोरूपम्, तेन क्षमेत्यर्थः। य—सह्यति दुःखं लोकः सहत इत्यर्थः। कि—साहयति सहति। स एवार्थः भागः सहति कालभेभ्यः परिभवमिति।

४५। षह ञ ङ च (षह, भ्वा, भ्वा) चकारात् शक्तौ। इहापि शक्ति क्षमा। ञ—साहः सहः। ङ—अन्यायं सहते नासाविति हलायुधः। (साहयत्याहवे सोमं सहति द्रविणाश्रयम्। अन्यायं सहते नासौ सह्यति क्षितिरक्षणे इति सर्व्वत्र हलायुधः। ३१)।

**लृ पुह्य तृपि च तृंह तृह स्तृह स्तृंह्श् वधे ।**
**लृ स्नुह्ङ ङ तु विश्वासे हकारान्ताः शताईकाः ।**

४५ । लृ पुह्य तृपि च ( पुह, दिवा, प ) पञ्चमस्वरौ । चकात् शक्तौ । इत्यपि शक्तिः क्षमा । लृ—अपुहत् । य—पुह्यति दुःखं लोकः, सहते इत्यर्थः । मुपोह ।

४६ । तृंह श वधे ( तृंह, तुदा, प )
४७ । तृह श वधे ( तृह, तुदा, प )
४८ । स्तृह श वधे ( स्तृह, तुदा, प )
४९ । स्तृंह श वधे ( स्तृंह, तुदा, प ) द्वावाद्यौ मूर्द्धन्यादी, शेषौ द्वौ दन्त्यादी, चत्वारस्तमध्याः, आद्यतृतीयावष्टमस्वरिणौ, अन्यौ सप्तमस्वरिणौ । अ—अतृंहीत् अतृहत्, अस्तर्हीत् अस्तृहत् । श—तृंहन्ती तृहती । स्तृहति । एवमन्ययोश्च । तितृंहयिषति तितर्हयिषति । तिस्तृंहयिषति तिस्तर्हयिषति ।

५० । लृ स्नुह्ङ ङ तु विश्वासे (स्नुह, भ्वा, आ) रेफयुक्तादिः । विश्वासः शङ्काराहित्यभावः । लृ—अस्नुहत् । ङ—स्नुहित्वा स्नोढ्वा, ढ्रोढ्रिर्घेति दीर्घः । ङ—स्नुहते पुत्रो मातरि । धातुरयं कैश्चिन्न मन्यते ।

हकारान्ताः शताईकाः । ( शतस्यार्द्धं परिमाणं येषां ते, पञ्चाशदित्यर्थः ) ।

---

## अथ सौत्राः ।

**कर्क हासे चकि भ्रान्तौ मर्क सर्पे तु सिक् सिचि ।**

(१) कर्क हासे (कर्क) पृथक् पाठस्तेषां नियतप्रयोगाभावात् ।

कर्क्कयः, कर्कट इत्यादयः शब्दा यथेष्टमुणादिप्रत्ययाद्यैर्व्युत्पादनीयाः। (२) चकि भ्रान्तौ (चनृक) इ—चङ्करः। (चङ्करो रथहृद्ययोरिति मेदिनी) (३) मर्क सर्पे (मर्क) मर्कटः। (४) सिक सिचि (सिक) दन्त्यादिः। सिकता।

## मर्च ग्राहे कजि कृहे पजि रोधे मजि ध्वनौ।

(५) मर्च ग्राहे (मर्च) तालव्यवर्गप्रथमान्ताः। मर्कः। (६) कजि कृहे (कनृज) इ—कञ्जरः (ब्रह्मा)। कडो जन्म, कृहोः कभाव इति भावे कः। (७) पजि रोधे (पनृज) इ—पञ्जरम्। (८) मजिध्वनौ (मनृज) इ—मञ्जरी, मञ्जुलम्, मञ्जुषा, मञ्जिः।

## मट सादे वटि स्तेये कुठ छिदाड संहतौ।

(९) मट सादे (मट) मटचः। (१०) वटि स्तेये (वण्ट) इ—वण्टकः। (११) कुठ छिदि (कुठ) कुठारः, कुठेरः, कुठाकुः। (१२) डड संहतौ (डड) डड्डपः।

## वड आरोहणे कुत्वास्तृतौ पुस्त गतौ लत।
## घाते सात्क सुखे उद्ध आघाते चद संहतौ।

(१३) वड आरोहणे (वड) वडभी, वडिशम्। (१४) कुत्तु आस्तृतौ (कुत, तु—पादपूरणे) कुतपः। (१५) पुस्त गतौ (पुस्त) पुस्तिका। (१६) लत घाते (लत) लता। (१७) सात्क सुखे (सात) दन्त्यादि। क—सातकः। (साति साति चेतोति यः)। (१८) उद्ध आघाते (उद, क्त) पञ्चमसरोदिः। उदधः। (१९) चद संहतौ (चद) चत्ता।

## उपसंहारः ।

अथ ग्रन्थकृदिति धातून्विधाय उपसंहरति, शिष्यपरम्पराभिनोत्कीर्त्तनाद्यशो वर्द्धनार्थं स्वनाम च निर्द्दिशति ।

इति स्फीतः सप्तदशशत्या षट्कोनषष्टया ।
धातुस्कन्धैर्बुधा सेव्य कविकल्पद्रुमः फलन् ।
विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
तेने वेदपदस्थेन वोपदेवद्विजेन यः ।

हे बुधा य एष कविकल्पद्रुमो वोपदेवद्विजेन तेने॰कृत स सेव्यो युष्माभिरिति शेष इति श्लोकद्वयेनान्वय । ( कथम्भूत )

ख्यातो महान् । कल्पद्रुमसाधर्म्यमाह । सप्तदशशत्या षट्कोनषष्ट्या धातुस्कन्धैः फलन्—सप्तदशानां शतानां समाहारः सप्तदशशती तया, षष्ठां समूहः षट्कं षट्केन ऊना षट्कोना सा चासौ षष्टिश्चेति षट्कोनषष्टिः षट्कोनषष्ट्या युता सप्तदशशती षट्कोनषष्टा, दशादेर्डो युते शतादाविति ड प्रत्यये स्त्रियामत आप् तया। धातवश्च ते स्कन्धाश्चेति धातुस्कन्धाः तैः, फलन् प्रतिधातुस्कन्धेन प्रत्ययभेदेन नानाप्रयोगरूपाणि फलानि यथेष्टमर्पयन्नित्यर्थः । गुरोः पितुश्च प्रतिष्ठार्थं तन्नामनी ख्यापयति विद्वद्धनेशेत्यादि। वेदाना पदे व्यवसाये तिष्ठतीति वेदपदस्थः तेन । बोपदेव इति। वः शिवः अकारो विष्णुः, उश्च अश्च वो, वयोरुप समीपे दीव्यतीति पचादित्वादनि बोपदेवः । तथा च ब ड सम्बुद्धौ वपोतौ च शिव वाचीत्यनव्ययम् । अ स्यादभावे स्वल्पार्थे विष्णावेव त्वनव्ययम् । उप हीनेऽधिके मोक्षमासन्नेऽप्युप कीर्त्तितमिति विश्वप्रकाशः ।

कश्चित्तच्छिष्यस्तत्कीर्त्तिं वर्द्धयन्नाह ।

स्वर्गे गीर्वाणनार्य्यः सुरपतिमभितः शाब्दिकानां वरेण्यं
पाताले नागराजं भुजगयुवतयो यस्य गायन्ति कीर्त्तिम् ॥
यत्सीर्णः शब्दपाथोनिधिमखिलमिमं गोष्पदं वा सुराष्ट्री
श्रिष्योऽकार्षीद्धनेशः कविकुलतिलकः केशविर्बोपदेवः ॥

इत्याचार्य्यचक्रचूडामणिश्रीबोपदेवविरचितः
कविकल्पद्रुमोनाम धातुपाठः समाप्तः ।

---

स्वर्गे गीर्वाणनार्य्यः शाब्दिकानां वरेण्यं सुरपतिं अभितः सुरपतेः समीपे यस्य कीर्त्तिं गायन्ति, पाताले भुजगयुवतयः

शाब्दिकानां वरेण्यं नागराजं अभितो यस्य कीर्त्ति … र्त्ता, यश्च अखिलं समस्तं इन्द्रचन्द्रादिप्रणीतं शब्दपाथोनिधिं गोष्पदं वा गोष्पदमिव तीर्णः ततार, स वोपदेवः सुराद्रौ सुमेरुपर्व्वते (१) इमं ग्रन्थमकार्षीदित्यर्थः। सिद्धत्वात् सुमेरुगतिः सम्भवतीति।

गाङ्गोलीयजसर्व्वदेवविदितश्रीसार्व्वभौमात्मजो
दुर्गादास इमामकार विशदां टीकां सुबोधावधि।
टीकेयं विमलात्मना प्रतिपदं सम्पादयन्ती मुदं
धीराणां विदधातु धातुगहने शार्दूलविक्रीडितम्॥

सर्व्वस्वं मौग्धबोधानामन्येषां हेमराशिवत्।
कविकल्पद्रुमस्याग्रे दीप्यते धातुदीपिका॥

इति वासुदेवसार्व्वभौमभट्टाचार्य्यात्मजश्रीदुर्गादासविद्यावागीश-विरचिता धातुदीपिका नाम कविकल्पद्रुमटीका समाप्ता।

समाप्तोऽयं ग्रन्थः।

शिवमस्तु।



(१) अत्र सुराद्रिशब्दो देवगिरिपर्य्यायत्वेन प्रयुक्तो न तु सुमेरुवाचकत्वेन। देवगिरिश्च दाक्षिणात्यप्रदेशान्तर्गतमाक्रनराजधानीविशेषः (दौलताबाद इति भाषा) तत्र देववंशीयमहाराजस्य महादेवस्य समस्तकरणाधीश्वरेण हेमाद्रिणा आनायितो वोपदेवस्तत्रैव देवगिरौ स्थित्वेमं ग्रन्थमकार्षीदिति केचित्।

# श्रीगोगानवमी—गोगामेड़ी-दर्शन

## [ भाद्रपद कृष्ण नवमी ]

( श्रीताराचन्द्रजी ओझा 'विकट', साहित्यायुर्वेदरत्न )

भाद्रपद श्रीकृष्णाष्टमीके दूसरे दिनकी पुण्यतिथि नवमी है 'श्रीगोगानवमी' नामसे प्रसिद्ध है। इसी तिथिको श्रीजाहरवीर गोगाजीका जन्मोत्सव श्रद्धालु भक्तोंद्वारा अपार भक्ति-भावसे मनाया जाता है। इस अवसरपर बाबा जाहरवीर गोगाजीके भक्तगण अपने घरोंमें निज इष्टदेवकी थाड़ी (थान-वेदी) बनाकर अखण्डज्योति-जागरण कराते हैं तथा परम्परागत अपने पुरोहित नाथ-योगियोंद्वारा डौंरू-सारंगीकी ध्वनिके साथ जाहरवीरकी शौर्य-गाथा एवं जन्म-कथा श्रवण करते हैं। इस प्रथाको जाहरवीरका जोत-कथा-जागरण कहा जाता है। प्रान्तीय मान्यताओंके अनुसार श्रीगोगाजी महाराजको जाहरवीर, गोगावीर, गुगालवीर, गोगागर्भी एवं जाहरजहरी नामसे भी पुकारा जाता है।

आपकी जन्मस्थली, राजस्थानके 'चूरू' जनपदमें 'ददरेवा' नामसे तथा पूजास्थली समाधि-मन्दिर 'गोगामेड़ी' नामसे प्रसिद्ध है। जो तहसील भादरा, जनपद गङ्गानगरके सन्निकट स्थित है।

बाबा श्रीकी पूजा-सामग्रीमें लौंग, जायफल, कपूर, गुगुल और गो-घृत विशेषरूपसे प्रचलित हैं। चूँकि श्रीगोगाजीका शुभ वाहन नीलवर्णका घोड़ा रहा है। सम्भवतः इसी कारण बाबाके नीलाश्वको प्रसन्न करनेकी कामनासे उनकी भोग-प्रसादमें हरी दूब एवं चनेकी दाल समर्पित की जाती है और चन्दन-चूरा बाबाकी समाधिपर मला जाता है।

श्रीगोगाजीके प्रादुर्भावकी कथा नाथ-सम्प्रदायके योगपन्थसे मिली हुई है। योगी गोरक्षनाथने ही आपकी माता बाछलको उनकी पूजा-अर्चना-तपस्यासे प्रसन्न होकर प्रसादरूपमें अभिमन्त्रित गुगुल प्रदान किया था। जिसके प्रभावसे पाँच बन्ध्या माताओंने पाँच पुत्रों (वीरों)-को जन्म दिया था। क्रमशः महारानी बाछलसे जाहरवीर गोगाजी, पुरोहितानीसे नरसिंह पाण्डे, दासीसे भज्जूवीर, महतानीसे रत्नावीर तथा बन्ध्या घोड़ीसे नीलाश्ववीरका प्रादुर्भाव हुआ। ये पाँचों वीर अपूर्व चमत्कारी तथा असाधारण व्यक्तित्वधारी थे। इन वीरोंका सनातनधर्म एवं गोरक्षार्थ यवन राजाओंसे संग्राम हुआ। जिसमें श्रीगोगाजी एवं नीलाश्वको छोड़कर रत्ना एवं भज्जूवीर वीरगतिको प्राप्त हुए। अन्तमें गुरु गोरक्षनाथके योग, मन्त्र, प्रभाव एवं प्रेरणासे प्रेरित होकर श्रीजाहरवीर गोगाजीने नीले घोड़ेसहित धरतीमें जीवित समाधि लेकर अमर बलिदानकी धर्मध्वजा फहरायी।

समाधिके पश्चात् वीर गोगाजीने प्रकट होकर कितनी ही बार भक्तोंकी मनोकामनाएँ पूर्ण की हैं और आज भी भक्तोंकी मान्यताओं एवं विश्वासके अनुसार ये प्रत्यक्ष-अप्रत्यक्षरूपसे भक्तोंका मार्गदर्शन करते हैं और उनके विश्वासको जगाते हैं। इसी कारण गोगाजीको प्रकटवीर (जाहरवीर) कहा जाता है।

### बागड़-दर्शन एवं यात्रा

भाद्रपद कृष्ण पञ्चमीको, भारतके अनेक प्रान्तोंमें भक्तगण अपने गाँव, नगर एवं शहरोंमें अपने-अपने कुलगुरु (नाथयोगियों)-द्वारा पचवारी माताका विधिवत् पूजन कराकर सपरिवार पीले वस्त्र धारण करके नगर-परिक्रमा करते हुए बागड़-दर्शनहेतु प्रस्थान करते हैं।

प्रात: गोगानवमीके दिन गोरखटीलेके समक्ष करीब डेढ़ कि०मी० की दूरीपर स्थित समाधि-मन्दिर गोगामेड़ीके लिये प्रस्थान किया जाता है। इस प्राचीन मन्दिरके अंदर वीर गोगाजीकी अमर समाधि है। इस समाधिपर भक्तगण अटूट श्रद्धाभावसे परिक्रमा करते हुए अपने दोनों हाथोंमें चन्दन-चूरेका मर्दन करते हैं।

यह तो रहा राजस्थानका बागड़-दर्शन-मेला। इसके इतर हरियाणा, पंजाब, हिमाचल प्रदेश, मध्य प्रदेश एवं उत्तर प्रदेश आदि प्रान्तोंमें भी श्रीगोगाजीके मेलोंका क्रम बना ही रहता है। यथा—जनपद सहारनपुरमें गुगालवीरका मेला, आगरामें गोगावीरका मेला, बिजनौरके चौदपुर-दारानगर गंजमें छड़ियोंका मेला। नैनीताल रामनगरमें जहानाबादका जाहरवीरकी छड़ियोंका मेला। इसी प्रकार मथुरा, आगरा, झाँसी, फर्रुखाबाद, भैलेपुर, एटा 'रघुनाथपुर गद्दी' पर जाहरवीर गोगा दिवानका मेला भी प्रचलित है।

यात्राके पश्चात् यात्रीगणोंका निज-निज नगरोंमें आगमन होता है। पुनः पचवारी-पूजनके पश्चात् वे गृहप्रवेश करते हैं तथा गीत-मङ्गलादि और माताके छन्दोंका गायन-वादन होता है। ग्राम-पड़ोस एवं गृह-कुटुम्बियोंको प्रसादवितरण कर एक-दूसरेके गले मिलते हैं और अपने आपको कृतकृत्य एवं धन्य समझते हैं।